।।श्रीः।।

# संस्कृतव्याकरणशास्त्रे नागेशस्य सिद्धान्ताः

(ागेशव्याख्यातसंस्कृतव्याकरणशास्त्रीयवाङ्मयान्तर्गतकतिपयविशिष्टस्थलानां विवेचनम्)

(राष्ट्रियसंस्कृतसंस्थानभारतसरकारदिल्लीतः प्राप्तधनेन प्रकाशितम्)

रचयिता

**डॉ० विद्याधर धर्माधिकारी**

अवकाशप्राप्त--रीडर व अध्यक्ष संस्कृत विभाग

इलाहाबाद डिग्री कॉलेज, इलाहाबाद

प्रकाशकः

**एकवीरा प्रकाशनम्**

६५० दारागंज, इलाहाबाद (उ० प्र०)

प्रकाशन वर्षः १६६८ ई०

# Sanskrit Vyakaran Sastre Nageshasya Siddhantah

## (Sashtriya Nibandha Sangraha)

Dr Vidyadhar Dharmadhikari

# सम्मतिः

आचार्यप्रवरा डा० श्री विद्याधरधर्माधिकारिवर्या ऋग्वेदे, धर्मशास्त्रे, ज्यौतिषशास्त्रे कर्मकाण्डे च प्रकाण्डाः मंगलमूर्तयः पुण्यश्लोकाः शब्दागमे च कृतभूरिपरिश्रमाः वेदवेदांगे च लब्धप्रतिष्ठादरा इति नातिशयोक्तिः। आचार्य प्रवराः प्राचीन परम्परायाः सदाचारपरायणा न केवलमुक्तशास्त्राण्यधीतवन्तः एव किन्तु तदनुसारम्आचरणमपि सदनुकरणीयं प्रतिष्ठापितवन्त इति वैशिष्टयम्। पूज्यवरा इमे वैकुण्ठधामवासिनां पदवाक्यप्रमाणपारावारीणानां वेदान्तद्वयतत्त्वावगाहनक्षमानां श्रीरामदेशिकसंस्कृतमहाविद्यालयीयप्राचार्यवराणां श्रीगुरुवरचरणानां पण्डितप्रवरश्रीरामवदनशुक्लमहोदयानां सकाशादपि शब्दागमे सप्रक्रियदार्शनिकसिद्धान्तप्रतिपादकग्रन्थरत्नानां सम्यगध्ययनं विधाय प्रयागे स्वीयं वैदुष्यमनुपमं प्रतिष्ठापितवन्तः। इलाहाबादडिग्रीकालेज इत्याख्ये संस्थाने संस्कृतविभागाध्यक्षपदेकृतसेवास्सम्प्रति सेवानिवृत्ता अपि स्वाध्यायोऽध्यातेव्य इति श्रुतिवचनं पालयन्तो वेदवेदांगे स्वाध्यायरताः शोधकार्ये च दत्तावधानाःशब्दागमे नगोजिभट्टपादानां कीदृशं योगदानमिति विविधविधाविमर्शितव्यविषये महतीं गवेषणां विधाय तदीयसिद्धान्तपक्षं ...... स्वीयशोधप्रबन्धे संप्रतिष्ठाप्य विदुषांकृते शोधछात्राणाञ्च कृते काञ्चनाभिनवां सरणिं वैयाकरणसिद्धालघुमञ्जूषायाश्शब्देन्दुशेखरस्य परिभाषेन्दुशेखरस्य च मर्मस्थलीयमभ्युपगम्य समेषामस्माकंकृते कश्चनाभि नवोऽभिनिवेशश्शास्त्रपद्धतेः प्रतिष्ठापितवन्तः विद्वद्वरैर्धर्माधिकारिमहोदयैरवश्यं प्रकाशतान्नीतोऽयंशोधग्रन्थश्श्रीनागोजिभट्टसिद्धान्तरत्नमणिर्विदुषांहृदये च हारायमाणस्सम्पत्स्यते। श्रीमन्नारायणं प्रार्थये यदिमे चिरायुर्भाजः संस्कृति संस्कृतयोगशास्त्रस्य च महतीं सेवां विदधानाः तीर्थराजप्रयागमृधन्यं कुर्वाणास्सुसम्मानिता भवेयुरितिशम्।

रामनारायणाचार्य
उपाचार्यः
गंगानाथझा केन्द्रीय संस्कृत विद्यापीठीयः

## ।।मंगलाचरणम्।।

श्रीगणेशं नमस्कृत्य ऋद्धिबुद्धिसमन्वितम्।
शिवं गिरिजया सार्धं शब्दविद्याप्रवर्तकम्।।

श्रिया युक्तं पद्मनाभं नौमि मंगलमंगलम्।
एकवीराह्वयां देवीं सततं कुलदेवताम्।।

मातरं च शचीं देवीं प्रणमामि मुहुर्मुहुः।
पितरं जयकृष्णं च गुरुं शास्त्रविचक्षणम्।।

श्रीमन्तं रामवदनं शुक्लं शुक्लगुणान्वितम्।
नागेशप्रोक्तविद्यायां शब्दशास्त्रे विचारितम्।।

सिद्धान्तम् प्रेक्ष्य हृष्टोऽहम् तद्गुणोत्कर्षहेतवे।
रचयाम्यसमर्थोऽपि निबन्धं लघुतायुतम्।।

विदुषां च विनोदाय बालानां बोधहेतवे।
तेनेशप्रीतिसिद्धिश्च वाचकानां च मङ्गलम्।।

# अनुक्रमणिका

# प्रास्ताविकम्

प्राय: त्रिंशद्वर्षेभ्योऽपि अधिक: कालो व्यतीत: यदा अस्य राष्ट्रगौरववर्धकस्य नागेशीयव्याकरणशास्त्रीयवाङ्मस्य मूलभूतां सामग्रीम् अधिकृत्य स्वसमीक्षापूर्वकम् विशदविवेचनस्य फलत: अस्य लघुकाय-निबन्धप्रकाशनस्य बीजम् उप्तमासीत्। तदानीम् स्वनामधन्या: प्रयागविश्वविद्यालये संस्कृतविभागस्य अध्यक्षा: बहुश्रुता: पाणिनीयव्याकरणे परमानुरागं दधाना: पण्डितसरस्वतीप्रसादचतुर्वेदमहाभागा: मम कार्ये निबन्धलेखनरूपे परामर्शदातृत्वेन संलग्ना आसन् इत्यस्ति मम सौभाग्यम्। पण्डितवर्येण सह प्रत्यहं शास्त्रार्थपद्धत्या स्थापितानाम् नागेशप्रोक्त-व्याकरणशास्त्रीयसिद्धान्तानाम् संजातस्पष्टतावशात् निबन्धोऽयम् सरस: सारवान् च संजात: इत्यस्ति मे विश्वास:।

मम सौभाग्यात् अस्मिन् स्थापितस्य विषयवस्तुनः वाचनम् तत्काले प्रसिद्धाभ्याम् व्याकरणशास्त्रे लब्धयशोभ्याम् द्वाभ्यां विद्वद्भ्याम् कृतम्। तत्रैक: स्वनामधन्य: पुण्यपुरी(पुणे)निवासी प्रतिष्ठितविद्यापीठेषु सफल: व्याकरणशास्त्राध्यापक: गंभीरव्याकरणशास्त्रीयवस्तुविन्यासे (ग्रन्थरूपेण) लब्धकीर्ति:, महामहोपाध्यायवैयाकरणशिरोमणिपण्डितवासुदेवशास्त्रिण: पितृवत् सुयोग्य: पुत्र: म० म० काशीनाथशास्त्री अभ्यंकर:।

अपरश्च वाराणसेयसंस्कृतविश्वविद्यालये तत्कालं व्याकरणवेदान्त-विभागाध्यक्ष: अत्यन्तं सरल: वैदेशिकान् स्वदेशीयान् च छात्रान् स्वक्षेत्रे कार्यरतत्वेऽपि विविधशास्त्राणाम् गूढाशयं पाठयन् (प्रकटयन्) शब्दब्रह्म सेवमान: आसीत्। एषां शुभनाम पण्डितरघुनाथशर्मा इति वर्तते।

इत्थम् एतद्ग्रन्थस्य विषयसामग्रीसमर्थनेन अस्या: सामग्र्या: ग्राह्यत्वस्वीकारे इयं पूर्वोक्ता विद्वच्छिखित्रयी, स्वसहयोगप्रदानेन मामुपकृतवती अतः तदभिनन्दनपूर्वकम् एव अग्रेसराम:। पयसि नवनीतमिव अत्रोल्लिखित-सिद्धान्तेषु (प्रायशः) अनुस्यूत: विचार: यस्य महाभागस्य वर्तते तस्य व्याकरणन्यायश्रीभाष्यग्रन्थमर्मज्ञस्य स्वगुरो: पण्डितरामवदनशुक्ल-महाभागस्य सादरं स्मरणं कृत्वा एभ्य: चतुर्भ्योऽपि विद्वद्भ्य: मनसा वचसा कर्मणा प्रणामपूर्वकम् अग्रेसरामि।

अस्य निबन्धस्य रचनायात्रायाम् एभि: पूर्वोक्तै: विद्वद्भि:

अधिगतपाथेयोऽपि विषयवस्तुनः गांभीर्यदुरूहत्ववशात् विषयसंयोजने, वैशिष्ट्यप्रतिपादने, प्राचीनवैयाकरणनैयायिकमीमांसकमतसमीक्षणकार्ये, तन्मतखण्डने च महतीम् कठिनताम् अन्तरायबाहुल्यं च अनुभवन्नपि कार्यमिदं पूर्णं कर्तुं सफलो जातः इत्यत्र अस्ति मे कुलदेवताया अनुग्रहः। विविधशास्त्र-गांभीर्यस्य ईदृशनिबन्धेषु (लघुकायेषु) स्थापनां कर्तुं समर्थाः विद्वद्वरेण्याः मया प्रार्थ्यन्ते यत् तेषां प्रयत्नेन शास्त्रान्तरमर्मज्ञविद्वत्सु च ग्रन्थरूपेण दृष्टायाः प्रतिभायाः रक्षणम् अर्थात् भारतीयसंस्कृतिरक्षणम् ईदृशलघुकायनिबन्धलेखनेन सुरक्षितं यथा स्यात् तथा तैः प्रयतितव्यम्।

पाणिनिकालादारभ्य अद्य यावत् विविधशास्त्राणाम् व्याकरणादीनां वाङ्मयस्य महती श्रीवृद्धिः संजाता। अस्मिन् महति काले व्याकरणशास्त्रे पाणिनेरष्टाध्यायी, विपुलं दुर्बोधं महाभाष्यम्, काशिका, व्याडिकृतः संग्रहः, जिनेन्द्रबुद्धेर्न्यासः, हरदत्तस्य पदमंजरी, कैयटस्य प्रदीपः, शब्दकौस्तुभः, वाक्यपदीयम्, प्रक्रियाकौमुदी, सिद्धान्तकौमुदी, वैयाकरणभूषणसारः उद्योतः, मंजूषात्रयम्, बृहच्छब्देन्दुशेखरः, लघुशब्देन्दुशेखरः, बृहच्छब्दरत्नम्, लघुशब्दरत्नम्, परिभाषेन्दुशेखरः, स्फोटवादः अन्ये च प्रौढाः प्रतिष्ठिताः च ग्रन्थाः उपलभ्यन्ते।

न केवलं व्याकरणशास्त्रे एव अपितु न्यायमीमांसालंकारवेदान्ता-दिशास्त्रेषु अपि प्रौढदुर्बोधमहत्त्वपूर्णवस्तुसंपन्नग्रन्थरूपा सुविपुला रचना अस्मिन् काले जाता।

अद्यत्वे यदा संस्कृतभाषायां रचितानाम् सरलग्रन्थानाम् अपि अध्ययनाध्यापनं—ह्रासोन्मुखं वर्तते तदा संस्कृते रचितानां पूर्वोक्तप्रौढदुर्बोध-महत्त्वपूर्णग्रन्थानाम् तात्पर्यस्य रक्षा (वर्तमानसंस्कृतच्छात्राध्यापकैः ज्ञातत्वेन) तु अत्यन्तं कठिना जाता। अस्यां स्थितौ उपर्युक्ता विविधशास्त्रेषु रचिता, प्रौढा, भारतीयमेधायाः प्रकाशयित्री, अत एव राष्ट्रगौरववर्धिनी इयं ग्रन्थसंपत् अपि कदाचित् बोद्धृणामभावात् विनाशं लोपं वा न गच्छेत् एतदर्थम् उपर्युक्तेषु ग्रन्थेषु तत्समकक्षेषु शास्त्रान्तरग्रन्थेषु निहितायाः सामग्र्याः परिचायकाः लघुनिबन्धग्रन्थाः विद्यमानैः तत्तच्छास्त्रमर्मज्ञैः लेखनीयाः येषां निबन्धानां भाषा सरला अथ च ग्रन्थार्थप्रकाशनपटुः स्यात्। येन भारतीयमेधायाः प्रवाहसातत्यपूर्वकम् प्रतिष्ठा अक्षुण्णा स्थास्यति।

ईदृशनिबन्धानाम् लघुकायत्वात् (एषाम्) आंशिकग्रन्थतात्पर्य-प्रकाशनेऽपि वाचक(पाठक)दृष्ट्या सारल्यं स्यादेव। एवं च यथाकथंचित्

पूर्वोक्तविद्वद्भिः सुविचारिताः प्रौढाः तत्तच्छास्त्रगतसिद्धान्तभूताः विचाराः एषु लघुनिबन्धेषु जीविताः एव स्थास्यन्ति इति शुभं विचारं मनसि निधाय मया अयं प्रयासः क्रियते येन नागेशभट्टसदृशवैयाकरणरचिता ग्रन्थार्थसंपत्तिः अधिकतरसंख्याकवाचकैः परिशीलिता स्यात् ।

एवमेव तत्तच्छास्त्रेषु कृतश्रमाः न्यायादिशास्त्रमर्मज्ञाः गंभीराः पण्डिताः मया सविशेषं प्रार्थ्यन्ते यत्ते, श्रीवाचस्पतिमिश्रसदृशानाम् अन्येषां च विदुषाम् संस्कृतशास्त्रग्रन्थेषु गंभीरविचारप्रवर्तकनिबन्धबहुलम् वाङ्मयम् अनयैव रीत्या (या रीतिः नागेशप्रोक्तगंभीरार्थप्रकाशनबुद्ध्या अस्मिन् निबन्धे मया स्वीकृता) सरलीकृत्य, अंशतः एव स्यात्, परंतु तत् वाङ्मयम् तदर्थसंपदं च अनेकलघुकायनिबन्धग्रन्थेषु स्थापयित्वा (ते विद्वांसः) भारतीयं तत्तच्छास्त्रीयचिन्तनवैभवम् सुरक्षितं सुविशदं कुर्युः इति ।

सहयोगश्च द्विविधः शास्त्रीयविचारबोधने सहायकः एकः । अपरश्च लेखकस्य रचयितुर्वा शारीरमानसशक्त्योः सुरक्षणवर्धनाद्युपायरूपः भौतिकः सहयोगः ।

अस्मिन् प्रसंगे आचारपरायणः वैयाकरणप्रवरः दाक्षिण्यादिसमन्वितः पण्डितरामनारायणमिश्रमहोदयः संप्रति गंगानाथझासंस्कृतविद्यापीठे प्रयागे उपाचार्यपदमलंकुर्वाणः, अस्य निबन्धस्य पाण्डुलिपिश्रवणेन मध्ये मध्ये शास्त्रीययुक्तिप्रकाशनेन च एतत्कार्यस्य समुज्ज्वलतरकरणे महत् साहाय्यमकरोत् । अतः विश्वेश्वरः प्रार्थ्यते तस्य सुदृढस्वास्थ्यलाभाय श्रीवृद्धये यशसे श्रीनारायणानुग्रहसिद्धये च ।

एवमेव मत्परिवारजनेषु मम पत्न्याः सौ० सुनन्दायाः, पुत्र्याः कु० अपर्णायाः, भगिन्याः सौ० सुमननाम्न्या अथ च मित्रेषु शिष्येषु क्रमशः पण्डितराजारामशास्त्रिघुलेमहोदयस्य तिवार्युपाह्वस्य श्रीअरुणकुमारशर्मणः च सहयोगं संस्मृत्य एतान् प्रति कृतज्ञताम् आशीर्वादावलीश्च प्रकाशयामि ।

अस्य ग्रन्थस्य वाचनेन शोधच्छात्राः व्याकरणे रुचिं धास्यन्ति, अन्ये च लाभं विद्वांसश्च विनोदमिति मन्ये ।

अत्रस्थितानाम् न्यूनतानां कृते अहमेव हेतुः ग्रन्थस्यास्य गुणोत्कर्षस्य सफलतायाश्च कृते अनेकैः सहैव अहमपि हेतुः इति निःसंकोचं प्रकटयामि ।

विदुषामाश्रवः

विद्याधरधर्माधिकारी

# प्रथमोऽध्यायः

## प्रथमाध्यायस्य सारांशः

*अथास्य प्रौढवैयाकरणस्य नागेशभट्टस्य जीवनवृत्तमये अत एव सुमंगले अध्याये प्रथमतः इदमेव साधितं वर्तते यत् अस्य महापुरुषस्य जन्म १६७४ ईस्वीसंवत्सरे द्वित्रिवर्षाभ्यन्तरे (अस्यकालस्य) अभूदिति। अथ च अयं महानुभावः सप्तदशशताब्द्याः अन्तिमे भागे अष्टादशशताब्द्याः पूर्वार्धे महतीम् प्रसिद्धिमाप्तवान् इत्यपि साधितं वर्तते।*

*अयं मनीषी महाराष्ट्रप्रदेशे सह्याद्रिपर्वतमालायाम् सप्ततारपुरे (अधुना सातारा इति प्रसिद्धे) जनपदे तांसगांव इत्याख्ये ग्रामे मातुः श्रीसतीदेव्याः उदरात् जनिमलभत। अस्य जनकः स्वनामधन्यः वैदिकव्रती पण्डितशिवभट्टः काळे इत्युपाह्वः देशस्थभेदवान् ऋग्वेदी महाराष्ट्रब्राह्मणः आसीत्।*

*बालकस्य अस्य प्रसवात् प्रागेव मातुर्निधनवशात् युक्त्या उदरात् निष्कासितस्य अस्य मस्तिष्कनाडीजाले प्रसववेदनाजन्यः आघातः न जातः अत एव अयम् ईदृशः गंभीरचिन्तनसमर्थः एकाग्रतासंपन्नः च जातः। इति अनुश्रुतिर्वर्तते।*

*स्वग्रामे शैशवं यापयन् अयम् मौंजीबन्धनोत्तरम् एकस्य ग्रामस्थस्यैव याज्ञिकस्य गृहं गत्वा दैनन्दिनोपयोगिकर्मकाण्डप्रयोगान् अशिक्षत एवं च अनया वृत्त्या कथंचित् धनार्जनं कुर्वन्नपि वृत्तेर्दुर्बलतया अर्थविपन्नताया एव अनुभवमकरोत्। अत एव च अधिकतरपाण्डित्यलाभेन स्वस्थितिम् (धनागमदृष्ट्या) उत्कृष्टाम् कर्तुम् सः नेदिष्ठे एव 'वाई' इत्याख्ये वैदिक-शास्त्रज्ञ-विद्वत्संपन्ने क्षेत्रे गत्वा काव्यादीनाम् कतिपयानाम् आरंभिक-व्याकरणशास्त्रग्रन्थानाम् अध्ययनं प्रारभत।*

*अनुश्रुतिवशात् श्रूयते स्वीक्रियते च तत्रापि (वाईक्षेत्रेऽपि) हेतुविशेषजन्यप्राप्ततिरस्कारवशात् अपमानवशात् वा खिन्नः अयं युवा शास्त्रज्ञानापेक्षी छात्रः काशीं गत्वा विशिष्टपाण्डित्यलाभेच्छाम् दृढामकरोत् स्वमनसि। अथ च काशीं गत्वा तत्र महता कौशलेन योगेन च*

सूत्रवार्तिकभाष्यपरिभाषारूपम् सकलम् व्याकरणवाङ्मयम् आत्मसात् कृत्वा अयं शास्त्रार्थेषु महायशस्वी अद्भुतः प्रवक्ता सिद्धपण्डितः प्रत्यहं प्रवर्धमानम् शास्त्रज्ञानमेव स्वनिधिम् अमन्यत ।

एवम् व्याकरणशास्त्रस्य पूर्णतया ज्ञानोत्तरम् अध्यापनेन स्वाध्यायेन च स्वज्ञाने (प्राप्तज्ञाने) वैशद्यम् लभमानः अयम् सिद्धान्तकौमुद्याम् लघुशब्देन्दुशेखरम्, बृहच्छब्देन्दुशेखरम् इत्थं ग्रन्थद्वयं टीकारूपेण रचितवान् ।

एवमेव महामहोपाध्यायकैयटभट्टविरचिते प्रदीपे लोकातिशायिनीम् उद्योताख्यां टीकामपि लिखितवान् ।

ततोऽपि श्रेष्ठां वैयाकरणसिद्धान्तमंजूषां, लघुमंजूषाम् परमलघुमंजूषाम् इति तिस्रः मंजूषाः व्याकरणशास्त्रीयसुगुप्तरत्नधारिणीः मंजूषा इव रचयित्वा अनेन अलंकारशास्त्रे धर्मशास्त्रे च पाण्डित्योत्कर्षसाधिकाः वैदुष्यशालिन्यः टीकाः रचिताः ।

एवं सारस्वतं जीवनं यापयन् अयम् गुणग्राहकशिरोमणिना शृंगवीरपुराधीशश्रीरामसिंहेन राज्ञा सादरं प्रार्थितः सन् कतिचिद्वर्षाणि श्रीरामसिंहस्य मुख्यसभापतिपण्डितत्वेन शृंगवेरपुरे निवसन् बहून शिष्यान् राजानं रामसिंहं च शास्त्राणि पाठितवान् ।

अनेकाभिः अनुश्रुतिभिः अस्य प्रसिद्धिपराङ्मुखता, विद्याव्यसनरुचित्वात् लौकिकजीवने निरपेक्षता, सर्वदा शास्त्रीयग्रन्थिभेदने तत्परता इत्याद्यनेके गुणाः साध्यन्ते येषां चर्चा मूलाध्याये दर्शिता ।

एवं पूर्णतया धर्मम् अर्थम् कामम् सीमितरूपेण मोक्षोपयोगि-सदाचारवत्त्वं च अधिगत्य अयं मनीषी १७७७ ईस्वीयसंवत्सरे द्वित्रिवर्षभेदवति वा काले इमं स्वीयं भौतिकं देहं त्यक्त्वा शिवं शिवलोकं प्राप्त इति ।

## श्रीनागेशभट्टस्य जीवनपरिचयः

वीराणाम् विदुषाम् ज्ञानिनाम् भक्तानां च प्रसवित्री अत एव महामहिमशालिनी भारतवासिनां गौरवास्पदीभूता महाराष्ट्रभूमिः विराजते । तस्यां सप्ततारपुरम् अधुना सातारा इति प्रसिद्धम् जनपदम् वेदशास्त्रज्ञान-सदाचारपूतानाम् द्विजानाम् वसत्या पुण्यपत्तनस्य सामीप्यात् पुण्यमयमिव निवासिनां परमसुखदं वर्तते ।

तदन्तःपातिग्रामः तांसगांव इत्याख्यः एव अस्माकं चरितनायकस्य शुभा

जन्मभूमि: ।

तत्र च काश्यपगोत्रीय: देशस्थ: ऋग्वेदी काळे इत्युपनामा एको द्विजपरिवार: न्यवसत् । तस्मिन्नेव परिवारे श्रीशिवभट्ट: सती देवी चेति दंपती सुखेन सन्तोषेण च स्वजीवनमभिनन्दन्तौ परमेश्वरध्याननिरतौ न्यवसताम् ।

तत्र अस्मच्चरितनायकसदृशम् एकम् अपूर्वम् विलक्षणप्रतिभाबीजसंपन्नम् बालकम् प्रसूतवती स्वनामधन्या सौभाग्यवती सती देवी । एवं चायं बालक: महाराष्ट्रप्रथितरीत्या श्रीनागेशशिवभट्टकाळे इति प्रसिद्ध: आसीत् ।

परिभाषेन्दुशेखरग्रन्थस्य पुष्पिकायाम् अन्यत्र च उल्लेखवशात् 'उपाध्याय' इति विशेषणम् अस्य नाम्ना सह प्रयुज्यते । तेनायं महाराष्ट्रद्विजेतर इति शंका कैश्चित् उपस्थाप्यते । परंतु तस्य महाराष्ट्रीयत्वे विविधानुश्रुत्यादिप्रमाणवशात् अस्य (शब्दस्य) विशेषणस्य अर्थ: एवं कर्तव्य:— उपेत्य अधीते अधीयते वा यस्मात् एवं चास्य व्युत्पत्तिलभ्यस्य अर्थस्य वशात् अयं यशस्वी व्याकरणशास्त्राध्यापक: इति ध्वनि: लभ्यते अयमर्थश्च अस्य जीवनदर्शनेन संगच्छते ।

तत्र काळे इत्युपनाम्न: विषये स्वल्पा समीक्षा क्रियते । अनया समीक्षया इदं निर्णेतुं शक्यम् यत् काळे इत्युपनामधारका: महाराष्ट्रद्विजा: त्रिविधा:— एक: कोंकणस्थ: द्वितीय: कऱ्हाडे इत्याख्य: तृतीयश्च देशस्थ इति रूपेण सन्ति । एतेषु भेदेषु नागेश: कतमं भेदमाश्रित्य 'काळे' इत्यभिधीयते इति प्रश्न: ।

सौभाग्यवशात् उक्तप्रश्नस्य समाधानाय उत्सुक: फणिपुरस्थ: विद्वान् न्यायाधीश: वांडेगांवकरमहोदय: काशीं गत्वा कतिपयसूचना अधिगतवान् । ता: अनुसृत्य न्यायाधीशमहोदय: नागेशविषये "काळे" इति विशेषणम् देशस्थस्यैव द्विजस्य कृते प्रयुक्तम् इति साधयन् परिभाषेन्दुशेखरग्रन्थस्य स्वरचितमहाराष्ट्रभाषान्तरे वैदुष्यपूर्णे विवेचने लिखति यत्—

नागेशसमये इयं धर्मशास्त्रानुमोदिता लोकाचारप्रथिता च रीति: आसीत् यदनुसारेण देशस्थ: ऋग्वेदी द्विज: स्वकन्यां देशस्थायैव ऋग्वेदिने प्रायच्छत् नान्यस्मै भेदवते ऋग्वेदिने । एवमेव कोंकणस्थादिभेदशालिन: द्विजा: विवाह-संबन्धम् कोकणस्थादिभिरेव स्वसंप्रदायवद्भिर्द्विजै: सह अकुर्वन् । अस्या रीते: पालनं दृढतया समाजे प्रचलितमासीत् ।

वाराणसीस्थितसिद्धेश्वरीनामके नगरैकदेशे एकस्मिन् त्रिभूमिके प्रस्तरनिर्मिते भवने "देव" इत्युपनामकाः कतिपये ऋग्वेदिनः महाराष्ट्रद्विजाः देशस्थाख्यभेदवन्तः निवसन्तो ज्ञाताः पूर्वोक्तन्यायाधीशमहोदयेन।

इमे द्विजाः नागेशस्य जामातृवंश्या एव इत्यपि श्रीवाडेगांवकरमहोदयः न्यायाधीशः ज्ञातवान्।

नागेशसदृशः धर्मशास्त्रज्ञः सदाचरणशीलश्च मनस्वी तस्मिन् युगे स्वसंप्रदायातिरिक्तसंप्रदायवते स्वकन्यां दातुम् कथमपि तत्परो न जातः स्यादिति निश्चितमेव। एवं च तस्य जामाता ऋग्वेदी देशस्थः महाराष्ट्रीयद्विजः इति सिद्ध्यति। यतः श्रीन्यायाधीशवाडेगांवकरमहोदयस्य सूचनानुसारेण उक्तभवने निवसन्तः नागेशस्य जामातृवंश्याः देवइत्युपनामकाः ऋग्वेदिनः देशस्थाः इति साधितत्वात् तद्युगप्रवृत्तिदर्शनेन कन्याविवाहप्रसंगसमीक्षया नागेशोऽपि "काळे" देशस्थः ऋग्वेदी महाराष्ट्रद्विजः इति सरलतया सिद्ध्यति। एवं चास्माकं चरितनायकः नागेशः देशस्थः "काळे" इत्युपनामा ऋग्वेदी महाराष्ट्रद्विजः इति पर्यवसितं भवति।

गृहे दारिद्र्यवशात् अथ च तस्मिन् युगे आधुनिकशिक्षणसंस्थानाम् अभावाच्च अस्य पिता श्रीशिवभट्टः गृहे एव अस्य बालकस्य पठनपाठन-व्यवस्थाम् अकरोत्। ग्रामस्थस्यैव एकस्य पण्डितस्य गृहेगत्वा तस्मात् दैनिकजीवनोपयोगिनः कर्मकाण्डप्रयोगान् अशिक्षत तदनन्तरं नागेशः ग्रामे एव स्वयौवनावस्थां यापयन् यजमानानां विविधकर्मकाण्डप्रयोगान् संपादयन् स्वस्य पित्रोश्च जीवननिर्वाहमकरोत्।

एवं कालं यापयन् अपि अयं मेधावी युवा अनया दुर्बलया वृत्त्या जीवननिर्वाहम् कठिनं दृष्ट्वा अधिकस्य अर्थस्य प्राप्तिदायकम् विद्वत्त्वं लब्धुमैच्छत्। तदर्थं च नेदिष्ठे एव वाईनामकक्षेत्रे संस्कृतविद्यालये काव्यशास्त्रादिपठने सः संलग्नः अभवत्। निश्चितमेवेदम् यत् अनेन काव्यादिज्ञानेन सहैव प्रारंभिकव्याकरणशास्त्रविषयेऽपि किमपि अधीतमेव स्यात्।

वैभवहीनताप्रभृतयो दोषाः पुरुषे हीनमनोग्रन्थीः उत्पादयन्ति। हीनग्रन्थिमान् पुरुषः जीवनसंग्रामे पूर्णतया आत्मसमर्पणम् कृत्वा यथा जीवनधारा वहेत् तथा जीवितुम् तत्परो जायते। उत्साहादीनामभावात् सः

प्रयत्ननिरपेक्षो भवति स्वभाग्योत्कर्षाय।

अथवा कदाचित् एतत्स्थितिग्रस्तः पुरुषः स्वीयया प्रबलया इच्छाशक्त्या लोकोत्तरम् कार्यमपि संपादयति। हीनग्रन्थिग्रस्ततताया इदमेव उभयविधम् परस्परविरुद्धं फलं दृश्यते। इदं विवेचनम् आधुनिकमनोविज्ञान-सम्मततथ्यसमर्थितं वर्तते। तस्य विस्तरशः ज्ञानाय आधुनिकमनोविज्ञानग्रन्थेषु द्रष्टव्यम्। पूर्णतया अस्यामेव स्थितौ चत्वारिंशद्वर्षदेशीयः अयम् पण्डितः यथाकथंचित् शास्त्राध्ययनं कृत्वापि दारिद्र्यपीडितः हीनमनोग्रन्थिग्रस्तश्च अस्माकं चरितनायको नागेशः विशिष्टाध्ययनहेतोः महाराष्ट्रप्रदेशात् सुदूरस्थिताम् शिवपुरीम् काशीं प्रस्थितवान्।

"स्वप्रौढावस्थायाम् अयं बालको नागेशः सूक्ष्मबुद्धिः गंभीर-प्रौढचिन्तनपरः क्लिष्टकल्पनाप्रवणः भविता" अस्य तथ्यस्य पृष्ठभूमिः एव तस्य काशीयात्रा इति कैश्चित् निरूप्यते। अस्तु।

एकामनुश्रुतिमनुसृत्य अस्य माता गर्भिण्यवस्थायाम् एव पंचत्वं गता फलतः सः सामान्यप्रसवरीतिं विनैव मातुरुदरात् बहिर्निष्कासितः। तथा सः संयोगात् जीवित एव निष्क्रान्तः। फलतः च अस्य अन्तः शिरसि मस्तके च प्रसूतिक्लेशजन्यवेदनाघातप्रभावो न जातः अथ च अस्य मस्तिष्कनाडीजालम् इतरापेक्षया सबलं सुपुष्टं चासीत्। यद्वशात् वयं तस्य ग्रन्थेषु लोकातिशायिन्याः बुद्धेः चमत्कारस्य च दर्शनं कर्तुं शक्नुमः।

एका अन्या अनुश्रुतिः सूचयति—प्रकृत्या सर्वत्र निरपेक्षः किंचित् उद्दण्डश्च अयं बालको नागेशः एकदा एकस्यां पण्डितसभायाम् सभापतेः आगमने विलंबवशात् रिक्ते सभापतिपीठासने स्वयमेव आसीनः फलतः आयोजकैः कृततिरस्कारवशात् ग्लानिग्रस्तमनाः अयं मनस्वी बालकः अन्तर्मनसा अपूर्वविद्याप्राप्तिमाध्यमेन इमं तिरस्कारम् अपनेतुम् संकल्पितवान्। संभवतः इयं घटना, वाईक्षेत्रे घटिता इत्यनुमानम्। इयमेव घटना वाराणसीयात्रायाः प्रेरणाम् तीव्राम् कृतवती इत्यनुमीयते।

अथवा वाराणस्यागमनानन्तरम् इयं घटना घटिता स्यात् इत्यपि संभवति। इयं स्थितिः नागेशस्य एकाग्रेण समाहितेन चेतसा विद्याध्ययनेच्छाम् उद्दीप्तवती। किमपि स्यात् अयं पण्डितः वयसः चत्वारिंशत्तमे वर्षे एकाग्रमनसा व्याकरणशास्त्रस्य विशिष्टसेवाम् कर्तुं प्रारब्धवान्। पंचाशत्तमात् आयुषः वर्षात्

अनन्तरं सः श्रीदुर्गासप्तशत्याः टीकाम् लिखितवान् मन्त्रशास्त्रं प्रति उन्मुखः च अभवत्। एवं क्रमेण पंचदशवर्षाणि षोडशवर्षाणि वा यावत् अयं सविशेषं व्याकरणशास्त्रस्य शिशिक्षुः महाभागः वाराणसीनिवासेन स्वायुः यापितवान्। परंतु तस्य लोकनिरपेक्षस्वभाववशात् वा पण्डितंमानित्ववशात् वा समाजपोषिता आर्थिकी स्थितिः चिन्तनीयैवासीत् विपन्नतायाः मुक्तये अस्य सहधर्मिणी सदैव एनम् आवश्यकप्रयासकरणाय प्रेरयन्ती प्रवर्तयन्तीचासीत्। परंतु विद्याव्रताय अस्मै व्याकरणादिशास्त्रचिन्तायाम् समयविनियोगं विना अर्थप्रदं किमपि अन्यत् व्यापारादि नारोचत। अन्ते च एकदा पत्न्या अत्यन्तं प्रेरितः प्रार्थितश्चायम् धनार्जनप्रयासाय परदेशयात्रार्थम् निष्क्रान्तः। परंतु गंगातटं प्राप्य नौकाशुल्कप्रदानासामर्थ्यवशात् नाविकेन यदा इत्थं निर्भर्त्सितः यत् "गच्छ" "अपसर" किं त्वं नागेशसदृशः परमविद्वान् ब्राह्मणः असि? येन कारणेन त्वाम् निःशुल्कं पारं गमयित्वा पुण्यमेव अर्जयेयम् अथ च स्वात्मानं धन्यं मन्येय। (अनुश्रुतिमाश्रित्यैतत् तथ्यम्) इत्येतत् नाविकवचनं श्रुत्वा एव सपत्नीको नागेशः प्रतिनिवृत्त्य पत्नीं प्रावोचत्– यस्य नाम नाविकोऽपि जानाति तस्य कृते परदेशगमनस्य का आवश्यकता? स च नाविकः नागेशं नाम्नैव जानन्नासीत् न तु आकृत्या अतएव पूर्ववर्णितम् उक्तवान् इति स्पष्टमेव। तथापि व्यवहारपटोः गृहिण्याः नागेशस्य उत्तरेण समाधानं न जातम्। एवमेव दिवसाः यान्तः आसन् परंतु तस्य स्थितौ आर्थिकी उन्नतिः नैव संजाता।

शनैः शनैः अस्य प्रतिभाया एकाग्रताया व्याकरणशास्त्राभिनिवेशातिशयेन च शास्त्रार्थप्रसंगेषु काश्याम् पण्डितसमाजे अद्वितीयः प्रभावः उत्पन्नः। संभवतः अस्मिन्नेव अन्तराले प्रतापगढनिकटस्थशृंगवेरपुराधीशः श्रीमान् रामसिंहः अन्यतमः कश्चित् आढ्यतमः पुरुषो वा एनं प्राप्य अर्थप्रदानेच्छुः अपृच्छत्– श्रीमतां गृहे कस्य वस्तुनः अभावः? कथ्यताम् येन तत्प्रदानेन भवताम् तम् अभावं दूरीकुर्याम्। शास्त्रचिन्तायाम् निमग्नोऽयं मनीषी राज्ञः रामसिंहस्य धनिकस्य वा प्रश्नं शास्त्रीयम् बुद्ध्वा नैकान् शास्त्रीयसिद्धान्तान् अनुसन्धाय–अत्र अयमभावः अत्र अयम् इत्युत्तरितवान्। यदा प्रश्नकर्ता नागेशोत्तरम् अशृणोत् तदा सः स्वाभिप्रायं विशदीकृतवान् गृहकार्ये कस्य वस्तुनः अभावः इति। तत् श्रुत्वा नागेशः प्रत्यवोचत् एवं तर्हि गृहिणी पृच्छ्यताम्।

धन्योऽयं लौकिकसुखविरागी शास्त्रचिन्तनसुखानुरागी विद्वान् यः एवं

धनप्रदातारं प्राप्यापि इत्थमवदत्। धन्या च तस्य मनसि स्थिता अर्थनिरपेक्षता संभवतः एतत्प्रसंगोत्तरमेव राज्ञः रामसिंहस्य निमन्त्रणेन सः शृंगवेरपुरमगच्छत्।

इत्थम् काशीत्यागस्य कारणम् दारिद्र्यनिवृत्तिफलकम् विहाय अन्यदपि आसीत् इति कर्णाकर्णि प्रथितं वर्तते। यथाऽग्रे वर्ण्यते।

शास्त्रेषु प्रौढताप्राप्त्यनन्तरम् अभिमानी अन्यान् पण्डितान् स्वापेक्षया तुच्छान् मन्यमानः अयं नागेशः स्वप्रतिवादिनः पराजित्य क्रूरया वाचा तेषां निर्भर्त्सनमपि कुर्वन्नासीदिति अनुश्रुतिः। अस्यां स्थितौ अपि एकस्मिन् शास्त्रार्थप्रसंगे अकस्मादेव एकः प्रतिवादी अस्य पुरः समुपस्थितः यं हीनदृष्ट्या पश्यन् नागेशः दैववशात् तस्मात् पराजितः, यः नागेशः अथयावत् कदापि पराजयमुखं नापश्यत्। आकस्मिकेन अनेन पराजयेन खिन्नः अयं मनीषी इमां स्थितिम् श्रीकाशीविश्वेश्वरप्रदत्तदण्डरूपाम् अमन्यत। स्वस्य अपकृत्यस्य परिहारार्थम् भगवता प्रदत्ताम् इमां दण्डस्वरूपाम् पराजयस्थितिम् स्वमनोनैर्मल्याय अलम् इति इति निश्चित्य सः विवेकोद्भवेन प्रसन्नो जातः। परंतु तिरस्कारपूर्णपराजयस्य अंकुशेन पीडितः अयं विद्वान् काशीत्यागे मनः अकरोत्। इयमपि घटना अस्य काशीत्यागस्य हेतुरिति मन्यन्ते केचित् आलोचकाः।

इदमपि संभवति दारिद्र्यपीडितत्वात् काशीत्यागे कृतनिश्चयस्य अस्य जीवने इयं पराजयघटना प्रेरिका संजाता स्यात्। किमपि भवेत् परंतु एतद्घटनोत्तरम् सः काशीतः रामसिंहराज्ये शृंगवेपुरे प्रयाणं कृतवान्।

एका अनुश्रुतिः इत्थमपि वर्तते—गुप्तवेषे स्थित्वा रामसिंहस्य राज्ञः भवने देवपूजकस्य वृत्तिं स्वीकृत्य तत्कार्ये प्रवृत्तः तत्रैव निवसन् अयम् एकदा राजसभायामपश्यत्—कश्चित् वादी मम सिद्धान्तः समीचीनः अस्य समर्थने "अत्र विषये नागेशभट्टानां सम्मतिः" इत्यवोचत्। श्रुत्वैतत् प्रतिवादी अकथयत्— कोऽयं भारवाही नागेशः? इति।

आक्षेपमिमं श्रुत्वा स्वस्य देवपूजकत्वस्थितिम् विस्मृत्य नागेशः त्वरितमेव सभास्थलं प्राप्य तीव्रैः तर्कैः प्रतिवादिनः खण्डनम् विधाय सर्वं सभास्थलं विस्मितमकरोत्।

दृष्ट्वैतत् विस्मितो राजा रामसिंहः, विद्वत्तमाय देवपूजकसदृशतुच्छपद-प्रदानग्लानिग्रस्तः सन् स्वापराधस्य कथंचिन्निरासाय तं बहुशः क्षामयित्वा तं

राजपण्डितम् अकरोत्।

अनयोः नागेशरामसिंहयोः काऽपि अनुश्रुतिः हेतुभूता स्यात्परंतु अस्य वैदुष्यवशात् रामसिंहस्य गुणग्राहित्ववशात् च उभयोः मणिकांचनसंयोगेन अस्मच्चरितनायको नागेशः शृंगवेरपुरवासी संजातः। तत्र राज्यप्रदत्तवृत्तिवशात् तस्य पारिवारिकं जीवनम् अपि अधिकम् उज्ज्वलम् अभवत्। इत्यत्र किं कथनीयम्?

ईदृशीं स्थितिं प्राप्तुम् पंचाशत् वर्षाणि अपेक्षितानि सन्ति। अत एव ईदृशोऽयम् पण्डितः अथयावत् पंचाशद्वर्षदेशीयः अभवत् इति संस्थाप्य अग्रेसरामः।

## विशालग्रन्थराशिप्रणेता नागेशः।

अतः परं यावद्देहत्यागम् अयं पण्डितः विविधशास्त्राणाम् सविशेषं व्याकरणशास्त्रस्य च प्रौढग्रन्थानां रचनाः कुर्वन् तथा च रचितस्वकठिनग्रन्थानां सूक्ष्मपर्यालोचनेन अभिनवयुक्तिभिः सह नव्यमतप्रदर्शकत्वसाधकतथ्यैः सह च विविधाष्टीकाः रचयन् अध्ययनाध्यापनरूपद्विजकर्मसंपादने च शिष्टम् आयुः अनैषीत्।

श्री भट्टोजिदीक्षितस्य पौत्रः महावैयाकरणो हरिदीक्षितः अस्य व्याकरणशास्त्रगुरुः एवमेव तत्काले प्रथितयशाः श्रीरामरामभट्टाचार्यमहाभागः तस्य न्यायशास्त्रगुरुः इत्यपि तत्कृतनिर्देशैः एव सिद्ध्यति।

## अलंकारशास्त्रं नागोजीभट्टश्च।

अलंकारशास्त्रविचारात् प्राक् अयम् मनीषी, व्याकरणशास्त्राधिकृतम् महत्त्वशालि लेखनम् प्रायः पूर्णतया संपादितवान्। भांडारकर ओरिएंटलरिसर्च-संस्थाने स्थितायाम् गोविन्दठक्कुरकृतप्रदीपाख्यव्याख्यायाम् नागेशकृतस्य उद्योतस्य (एतन्नामकस्वटीकायाः)। एकस्यां पाण्डुलिपौ एतत्कृतस्ववैयाकरण-सिद्धान्तलघुमंजूषायाः अन्यग्रन्थानां च प्रासंगिको निर्देशः नागेशकृतः वर्तते। येन सिद्ध्यति अलंकारशास्त्रीयविचारप्रचुरात् उद्योतात् पूर्वमेव तस्य वै. सि. ल. मञ्जूषा सुसंपन्ना आसीत्

पण्डितराजस्य जगन्नाथस्य कृतौ रसगंगाधरे स्वकृतगुरुमर्मप्रकाशिकाख्यटीकायाम् अयं स्वकृतां वै. सि. ल. मंजूषां स्मरति येनापि अलंकारशास्त्रीयलेखनात् प्राक् व्याकरणसंबद्धस्य तल्लेखनस्य

प्राग्वर्तित्वं सिद्ध्यति।

एस. के. डे. महोदयः, स्वीये संस्कृतसाहित्येतिहासग्रन्थे श्रीभानुदत्तकृत रसमञ्जर्याम् श्रीनागेशभट्टकृतरसमंजरीप्रकाशनामकटीकाया उल्लेखमकरोत्। अयमुल्लेखः, रसमंजरीप्रकाशस्य यस्याः पाण्डुलिपेः संबन्धे वर्तते सा पाण्डुलिपिः १७१२ ईशवीयवत्सरे लिखिता इति संकेतः वर्तते। अस्मत्पूर्वोक्तविवेचनानुसारेण तावन्तं कालं यावत् अयं पण्डितः (१७१२ ई. वत्सरं यावत्) सर्वेषां प्रमुखव्याकरणशास्त्रीयग्रन्थानाम् निर्मितिम् अकरोत्।

एषां त्रयाणां तथ्यानां समीक्षया स्पष्टं भवति यदयम् विद्वान् व्याकरणशास्त्रे प्रतिष्ठाधायकग्रन्थनिर्मित्यनन्तरम् एव अलंकारशास्त्रविवेचनं प्रति स्वानुरागम् प्रकाशितवान्।

## धर्मशास्त्रं नागेशश्च

एतद्रचितधर्मशास्त्रग्रन्थस्य "आशौचनिर्णय" इत्याख्यस्य एका पाण्डुलिपिः १७१२ ईशवीयवत्सरीया, मुंबईविश्वविद्यालयेन संगृहीत-पाण्डुलिपिसूच्याम् वर्णिता वर्तते। एतत्कालात्प्राक् समस्तव्याकरणशास्त्रीय रचनाः अनेन पूर्णीकृताः इत्यनुपदमेव साध्यते साधयिष्यते च। अतः निष्कर्षोऽयं लभ्यते यदयम् मनीषी व्याकरणशास्त्रे लेखनानन्तरमेव धर्मशास्त्रमधिकृत्य लेखने प्रवृत्तः न तु तत्पूर्वमिति।

अयं स्वमंजूषायाम् अभिदधाति—शब्देन्दुशेखरं पुत्रं मंजूषां चैव कन्यकाम्। स्वमतौ स्वयमुत्पाद्य शिवयोरर्पितौ मया। एतस्य आधारेण केषांचित् अनुमानं वर्तते यदयं सन्ततिहीनः इति। अत एव सः स्वग्रन्थौ पुत्र-पुत्रीरूपेण गृहीत्वा तयोः शिवार्पणमकरोत्। परन्तु नायं सिद्धान्तः कथयितुं शक्यः यदयं सन्ततिहीन इति। पूर्वपंक्तिषु उल्लिखितानुसारेण जस्टिस वाडेगांवकरमहोदयः सूचयति यत् नागेशभट्टसमकालिकः प्रसिद्धो नैयायिकः महादेवशास्त्रीपुणताम्बेकरमहोदयः अपि स्वीयम् प्रकाशकौस्तुभम् तथा सर्वोपकारिणीम् टीकां च लिखित्वा स्वग्रन्थद्वयीम् पुत्रकन्यारूपेण विश्वेश्वरस्य काशीश्वरस्य चरणयोः समर्पितवान्। इदं च तस्य गृहस्थितग्रन्थदर्शनेन ज्ञायते। तस्य पुत्रः कन्या चासीदिति महाराष्ट्रद्विजानाम् तत्कालस्थितानाम् ज्ञातमेव—अद्यापि वृद्धेषु तच्चर्चा वर्तते। इत्थं च इयं परिपाटी आसीत् यत् ग्रन्थरचनोत्तरम् स्वेष्टदेवाय तस्य समर्पणम् कार्यमिति। एतेन ग्रन्थकर्तुः

नागेशस्य अपत्यहीनता सिद्धान्ततः साधयितुं न शक्या। अथ च काश्याम् प्राप्तसूचनानुसारेण नागेशः एकाकिनीमेव स्वीयाम् पुत्रीम् देवोपाह्वाय सिद्धेश्वरीनामके नगरैकदेशे त्रिभूमिक-प्रस्तरनिर्मित-सुदृढभवनवासिने वराय प्रदत्तवान्। इदं च भवनं नागेशस्यैवासीत् अतः स कन्याविवाहे यौतुकरूपेण तद्भवनं स्वजामात्रे प्रायच्छत्। तदेव भवनम् चिरमेव भूतकाले देवोपाह्वद्विजवंशाधिकारे आसीत्। कतिपयवर्षेभ्यः प्रागेव एतद्वंश्याः तद्भवनम् विक्रीतवन्तः। इयं सूचना एकस्मात् ईदृशात् सज्जनात् जस्टिसवाडेगांवकरमहोदयेन प्राप्ता यः सज्जनः आभिःप्राचीनवंशावलीभिः तथा तत्संबद्धवस्तुभिश्च सह परिचयकरणे सदैव उद्यतः तत्परश्च आसीत्। इदमाश्रित्य वयं वक्तुं शक्नुमः यत् नागेशस्य एका कन्या आसीदिति।

एवम् अनेकशास्त्रीयग्रन्थानाम् प्रणयनम् टीकाः स्वतन्त्रनिबन्धान् च रचयन् (साधयन्) अयं पण्डितप्रवरः अनेकान् शिष्यान् अपाठयत्। अस्य ज्ञात-शिष्येषु द्वयोर्महती प्रसिद्धिः एकः वैद्यनाथः पायगुण्डे इत्याख्यः यः स्वगुरोः ग्रन्थेषु वैदुष्यपूर्णाः अनेकाः टीका अलिखत् गुरुमतं प्रत्यस्थापयत्। तत्रस्थितमर्मस्थलानाम् अभिप्रायं स्पष्टयन् गुरोः ऋणात् स्वात्मानममोचयत्।

द्वितीयश्च शिष्यः बिसेनक्षत्रियवंशतिलकः राजा रामसिंहः यः वाल्मीकीयरामायणस्य तिलकटीकाकर्तृत्वेन अद्यापि स्मर्यते।

एवं सारस्वतं जीवनं यापयित्वा अन्ते सः पुनः काशीमागतः। शृंगवेरपुरस्य राजकीयं सुखपूर्णम् जीवनम् त्यक्त्वा काश्यामागमनस्य हेतुः "काश्यां मरणान्मुक्तिः" इयं धार्मिकजनग्राह्यधारणा एव समभवत् नागेशस्य मनसि। तादृशस्य गंभीरचिन्तकस्य धर्मशास्त्रज्ञस्य कृते अस्यां धारणायाम् अभिनिवेशः योग्य एव।

एवं पुनः काशीमागत्य १७७५ ईस्वीवत्सरे (अथवा तद्वत्सरं परितः इतस्ततः) अयं मनीषी स्वीयं भौतिकं देहं त्यक्त्वापि स्वीयवैदुष्यपूर्णाभिः रचनाभिः दिव्ययशःशरीररूपेण अद्यापि अस्मत्पुरतः उपस्थितः विद्यते। न केवलमद्यैव परंतु आचन्द्रार्कम् इदं शास्त्रीयरचनात्मकम् अस्य शरीरम् सदैव शाश्वतममृतत्वमधिगच्छत् विद्वत्सु प्रकाशमानं स्थास्यति। प्रेरयति च व्याकरणसदृशव्याघ्रमुखकठिनग्रन्थग्रन्थिविभेदनपाटवाधिगमाय जिज्ञासु-च्छात्रान्।

## श्रीनागेशभट्टस्य कृतीनां संक्षिप्तः परिचयः

अस्य विदुषः शास्त्रीयजीवनस्य स्वल्पं स्वरूपं प्रस्तूयते। सप्तदश्या:ईशवीयवर्षशताब्द्याः अन्तिमभागे अष्टादश्याः प्रारंभे अस्माकं चरितनायको नागेशः अद्वितीयगंभीरविद्वत्त्वेन वाराणस्यां सम्मानितः आसीत्। व्याकरणेतरशास्त्रेषु वेदान्तशास्त्रस्य अलंकारशास्त्रस्य मीमांसादिशास्त्राणां च प्रसिद्धग्रन्थेषु अधिकारपूर्णया भाषया अयम् वैदुष्यसंपन्नाः टीकाः अकरोत्। अयम् श्रीमद्भट्टोजिदीक्षितकृतप्रसिद्धव्याकरणग्रन्थे सिद्धान्तकौमुद्याम् विचार-परिप्लुते विषयस्य सर्वथा उद्बोधिके बृहच्छब्देन्दुशेखरलघुशब्देन्दुशेखराभिधे द्वे टीके रचितवान्। अत्र लघुशब्देन्दुशेखरः संक्षिप्तः सन्नपि सकलावश्यक-कोटिसंपन्नत्वात् अल्पावधौ एव लोकप्रियः संजातः। तथा च अस्य विदुषः शिष्यैः प्रशिष्यैः च अस्मिन् शेखरे विविधा मनोभिरामाः टीकाः लिखिताः सन्ति। येनास्य ग्रन्थस्य महत्त्वम् अद्यावधि समुज्जृम्भते।

अस्य द्वितीयो व्याकरणग्रन्थः परिभाषेन्दुशेखरः अत्यन्तं विद्वत्तापूर्णः सूक्ष्म-गूढविवेचनसंपन्नश्च। पाणिनिसूत्राणां यथायोग्यम् वास्तविकतथ्यज्ञानाय उपयोगिनीः उदाहरणविशेषसिद्धये प्रभावशीलाः १३० संख्याधिकाः अत्र लोकसिद्धज्ञापकसिद्धाश्च परिभाषाः प्रतिष्ठापिताः सन्ति। अत्रस्थितम् सोदाहरणं विवेचनम् विद्वन्मण्डलीषु अतिश्रद्धेयं प्रशस्यं च वर्तते। एताः परिभाषाः नागेशेन त्रिषु भागेषु विभक्ताः सन्ति। तासु षष्टिः परिभाषाः भाष्ये प्रतिपदोक्ताः वा तत्र ज्ञापकसिद्धत्वेन घोषिताः सन्ति। अवशिष्टाः परिभाषाः प्रदीपोद्योते वयं द्रष्टुं शक्नुमः। अस्मिन् ग्रन्थे महाभाष्यात् अनेकानि उद्धरणानि संगृहीतानि वर्तन्ते। अयं ग्रन्थः अत्यन्तं सारगर्भितः अर्थपूर्णश्च सन्नपि आकारे लघुः विद्यते। अतएव मुहर्मुहुः वाचनेनापि अस्य तात्पर्यज्ञानं सद्यो न जायते। कदाचित् अत एव कारणात् अस्य शिष्यप्रशिष्यैः विस्तृतम् तत्रस्थितगंभीरतात्पर्य-प्रकाशकटीकावाङ्मयम् रचितं वर्तते।

महामहोपाध्यायकैयटकृते महाभाष्यप्रदीपे "उद्योत" इत्यभिधम् सर्वोत्तमं व्याकरणग्रन्थं विलिख्य अयम् एकतः कैयटभट्टरचिते प्रदीपे संभाविताः न्यूनताः दूरीकुर्वन्, अपरतश्च संबद्धविषये अतिरिक्ताम् सामग्रीम् वर्धयन्, अव्याप्त्य-तिव्याप्तिदोषनिवारणसमर्थम् उत्तमम् व्याख्यानं प्रस्तुतवान्।

इत्थं सिद्धान्तकौमुद्याम् महाभाष्यप्रदीपे परिभाषेन्दुशेखरे च वैदुष्यं

प्रकटयन् अयम् श्रीभर्तृहरिकृतवाक्यपदीयम् कौण्डभट्टकृतवैयाकरणभूषणसारं च परिशील्य तत्रस्थितम् अर्थतत्त्वम् सूक्ष्मया धिया आत्मसात् कृत्वा ग्रन्थत्रयीम् वैयाकरणसिद्धान्तमञ्जूषाम्, लघुमञ्जूषाम्, परमलघुमञ्जूषां च अरचयत्।

इयं ग्रन्थत्रयी अद्यावधि वैयाकरणैः प्रतिपादितस्य अर्थतत्त्वस्य दर्शनशास्त्रानुगवैयाकरणसिद्धान्तजातस्य प्रकाशने अद्वितीया इति मत्वा प्रौढैः समालोचकैः समादृता वर्तते। अयं महानुभावः अस्याम् लाघवयुक्तायामपि सर्वतः अव्यर्थायाम् भाषायाम् गंभीरार्थस्य स्थापनेन स्वीयापूर्वप्रतिभायाः प्रदर्शनम् अकरोत्। एषु ग्रन्थेषु अयम् नैयायिकैः मीमांसकैः अन्यैश्च संप्रदायैः लिखितानाम् व्याकरणशास्त्रविरुद्धसिद्धान्ताधारिततथ्यानाम् सफलतापूर्वकम् अनन्यसाधारणरीत्या खण्डनं कृत्वा स्वीयं वैयाकरणत्वकर्तव्यम् संपादितवान्।

शास्त्रान्तरेष्वपि अनेन अल्पाः बृहतश्च ग्रन्थाः लिखिताः येन इदं सुनिर्धारितं भवति यदयं व्याकरणशास्त्रीयलेखनोत्तरम् अपि अविश्रान्ततया ग्रन्थरचनकार्ये संलग्नः आसीदिति। स्वनामधन्यः कैलाशवासी अभ्यंकरोपाह्वः श्रीकाशीनाथपण्डितः नागेशलिखितग्रन्थानां संख्या शताधिका इति प्रत्यपीपदत्।

नागेशरचितग्रन्थानां अथ च विभिन्नपाण्डुलिपिसूचकसूचीषु कासांचित् अप्राप्तत्वेऽपि तत्र तत्र ग्रन्थेषु उल्लेखाधारेण गणनया इतरत्र संकेतितानां एतद्रचनानां समाकलनेन च अयम् अष्टचत्वारिंशतः ग्रन्थानां निर्माता इति तु सिद्ध्यत्येव। तथ्यमिदं डा. गोडेमहाभागः सूचयति। तथापि प्रयागविश्वविद्यालयस्थे आफ्रेक्टमहोदयरचितपाण्डुलिपिसंग्रहे डा. गोडेमहोदयोक्तसंख्याया एका अधिका संख्या अस्य ग्रन्थानां निर्दिष्टा वर्तते। स च एकः अधिको ग्रन्थः नागेशविवरणम् इति अस्ति। तथापि तत्र तस्य ग्रन्थस्य विषयः न स्पष्टीकृतो वर्तते। तदनुसारेण अधोऽङ्किता इमे ग्रन्थाः निर्विवादतया नागेशरचितरूपे स्वीकार्याः सन्ति।

१. अलंकारसुधा (कुवलयानन्दटीका) २. अष्टाध्यायीपाठः ३. आचारेन्दुशेखरः ४. आशौचनिर्णयः ५. इष्टिकालनिर्णयः ६. कात्यायनीतन्त्रम् ७. काव्यप्रदीपोद्योतः ८. रसगंगाधरटीका (गुरुमर्मप्रकाशिका) ९. चण्डीटीका अथवा देवीमाहात्म्यटीका, १०. चण्डीस्तोत्रप्रयोगविधिः ११. तर्कभाषाटीका (युक्तिमुक्तावली) १२. तात्पर्यदीपिका १३. तिङन्तसंग्रहः १४. तिथीन्दुशेखरः १५. तीर्थेन्दुशेखरः १६. त्रिस्थलीसेतुः १७. धातुपाठवृत्तिः १८. णेरणिवादार्थः

१९. पदार्थदीपिका २०. परिभाषेन्दुशेखरः २१. पातंजलसूत्रवृत्तिः २२. पातंजलसूत्रवृत्तिभाष्यच्छाया (व्याख्या) २३. प्रभाकरचन्द्रतत्त्वदीपिकाटीका २४. प्रयोगसरणिः २५. प्रायश्चित्तेन्दुशेखरः २६. प्रायश्चित्तेन्दुशेखरसारसंग्रहः २७. महाभाष्यप्रदीपोद्योतः २८. रसतरंगिणीटीका २९. रसमंजरीप्रकाशः ३०. रामायणटीका ३१. लक्षणरत्नमालिका ३२. विषमपदीशब्दकौस्तुभटीका ३३. वेदसूक्तभाष्यम् ३४. वैयाकरणकारिका ३५. वैयाकरणभूषणम् ३६. वैयाकरणसिद्धान्तमंजूषा ३७. व्याससूत्रेन्दुशेखरः ३८. शब्दरत्नम् ३९. शब्दानन्तसागरसमुच्चयः ४०. सुप्तिङन्तसागरसमुच्चयः ४१. शब्देन्दुशेखरः ४२. संस्काररत्नमाला ४३. लघुसांख्यवृत्तिः ४४. सापिण्ड्यमंजरी ४५. सापिण्डयदीपिका ४६. स्फोटवादः ४७. नागोजीभट्टीयम् ४८. नागेशविवरणम्।

## नागेशरचितव्याकरणशास्त्रीयग्रन्थानां पौर्वापर्यम्।

अष्टादशशताब्द्याः आरंभिकेषु चतुर्षु पञ्चसु वा वर्षेषु कस्मिन्नपि समये अयं पण्डितः स्वीयाम् व्याकरणशास्त्रीयतथ्यमणिरत्नधारिणीम् मंजूषां रचितवान्। इदं वक्तुं शक्यते यतः सिंधियाओरिएंटलइन्स्टीट्यूट उज्जैनस्थाने पाण्डुलिपिरूपे नागेशलिखितायाः वैयाकरणसिद्धान्तमंजूषायाः प्रतिलिपिः १९३० शकसंवत्सरीया १७२० ईश्वीवत्सरायाः लभ्यते। सा च प्रतिलिपिः चैत्रशुक्लचतुर्दश्याम् बुधे कूर्मांचलप्रदेशे अलमोडा नगरे वीरेश्वरपण्डितस्य गृहसमीपे रत्नाकरत्रिपाठिना द्विजेन कृता इत्यपि तत्र वर्णितं विद्यते।

श्रीगोडेमहोदयः अन्वेषणप्रक्रियापटुः उक्ते शकवत्सरे अथ च उक्ततिथिवारयोश्च विवेचनेन निष्कर्षं प्रकटयति यत् अयम् प्रतिलिपिकरणसमयः २४ मार्च १७०८ ईस्वीवर्षे आपतति इति प्रतिपादितवान्। रत्नाकरोऽपि प्रतिलिपिकरणे एकं द्वौ वा वर्षौ यापितवान् स्यात्। अथ च अस्या मंजूषाया लेखनोत्तरमेव तामधिगन्तुम् अपि रत्नाकरपण्डितस्य कृते द्वित्राणाम् वर्षाणाम् अपेक्षा तर्कसिद्धैव। अतः उक्तपाण्डुलिपेः संसाधिततिथिं लक्ष्यीकृत्य अस्माकं धारणा जाता यत् नागेशः वैयाकरणसिद्धान्तमञ्जूषायाः रचनाम् अष्टादशशताब्द्याः आरंभात् प्रागेव द्वित्रेषु वर्षेषु कृतवान् इति।

अस्या रचनायाः प्राग् नागेशः महाभाष्यकारपतंजलिग्रन्थे महाभाष्ये कश्मीरदेशीयपण्डितकैयट (१०५० तः ११०० ईस्वीं यावत्) भट्टरचितप्रदीपे

अत्यन्तम् सारगर्भितम् व्याख्यानम् "उद्योत" इत्याख्यम् रचितवान्। श्री अभ्यंकरमहोदयः शब्देन्दुशेखरनिर्माणानन्तरम् एव अस्या मंजूषायाः रचनाम् स्वीकरोति। परंतु एतद्विधानम् विवादग्रस्तम् परस्परविरुद्धयुक्तिबलादित्यपि ध्येयमेव। अस्मिन् विषये विविधयुक्तिप्रयुक्तिदर्शनविवेचनेन च अस्माकं निर्णयः इत्थं वर्तते।

सर्वप्रथमम् अनेन सिद्धान्तकौमुदीटीकारूपेण बृहच्छब्देन्दुशेखरो रचितः। ततो लघुमञ्जूषा ततो लघुशब्देन्दुशेखरः, एतत्क्रमस्वीकारेण अत्र विषये समुपस्थिताः सर्वाः समस्याः समाहिता भवन्ति इत्यस्ति अस्माकं विश्वासः।

विशिष्टविवेचनेन बृहच्छब्देन्दुशेखरः, लघुमंजूषा, उद्योतः वै. सि. मंजूषा (गुरु-मंजूषा) ततः लघुशब्देन्दुशेखरः अयं क्रमः सुतरां ग्राह्यो वर्तते नागेशीयग्रन्थरचनायाः।

नागेशस्य व्याकरणवाङ्मये कतिपये ईदृशाः अपि ग्रन्थाः वर्तन्ते येषां पाण्डुलिपिः अस्माभिर्न प्राप्ता केवलं तेषां नामनिर्देश एव लभ्यते। एतदुदाहरणरूपे शब्दकौस्तुभटीकायाः विषमपदीनाम्न्याः टीकायाः नाम ग्रहीतुं शक्यम्।

अष्टाध्यायीपाठः, तात्पर्यदीपिका, तिङन्तसंग्रहः णेरणिवाादार्थः शब्दानन्तसागरसमुच्चयः, सुप्तिङन्तसागरसमुच्चयः—एषां पुस्तकानां पाण्डुलिपिप्राप्तिसंभावना केषुचित् पुस्तकालयेषु विद्यते परंतु अद्यावधि तानि अस्मद्दृष्टिगोचराणि न जातानि। नागेशस्य व्याकरणग्रन्थानाम् रचनाक्रमलेखने कृतोत्साहः गोडेमहोदयः अपि एषां नामनिर्देशं विहाय न किमपि महत्त्वपूर्णम् अलिखत्।

शब्दकौस्तुभटीकायाः विषमपदी इत्यभिधायाः प्राप्तेः सर्वाधिकसंभावना सरस्वताभवनपुस्तकालये, वाराणस्याम्, अन्यत्रापि च विद्यते परंतु तत्र तत्र अस्या रचनाया अविद्यमानतायाः अप्राप्यतायाः सूचना अस्माभिरधिगतैव।

वैयाकरणभूषण—ब्दरत्नविषये अस्माभिः वक्ष्यमाणचर्चया अनयोः ग्रन्थयोः कर्तृत्वम् क्रमशः कौण्डभट्टस्य एव हरिदीक्षितस्यैव चेति। न तु नागेशस्य इति तथ्यम् ध्येयमेव।

एवं नागेशीयव्याकरणवाङ्मये परमलघुमंजूषायाः परिभाषेन्दुशेखरस्य

क्रमनिर्धारणम् एव अवशिष्यते। नागेशः स्वपरिभाषेन्दुशेखरे बृहच्छब्देन्दुलघुशब्देन्दुशेखरद्वयस्य स्वीयवैयाकरणसिद्धान्तमञ्जूषायाः महाभाष्यप्रदीपोद्योतस्य च उल्लेखम् बहुधा अकार्षीत् येन प्रतीयते यत् प्रसिद्धव्याकरणग्रन्थलेखनोत्तरमेव नागेशः परिभाषेन्दुशेखरम् लिखितवान्।

श्रीगोडेसाहेबमहोदयेन सहैव महामहोपाध्यायवासुदेवशास्त्रिकृत-परिभाषेन्दुशेखरटीकातत्त्वादर्शस्य संपादनारंभे तत्पुत्रः पण्डितकाशीनाथशास्त्री सूक्ष्मदर्शी विद्वान् अपि इदं तथ्यं समर्थयते। स च विद्वान् परमलघुमंजूषाया अनन्तरमेव अस्य परिभाषेन्दुशेखरस्य रचनाम् स्वीकरोति सत्यमेवैतत् अन्यथा अस्मिन् ग्रन्थे इतरग्रन्थातिशायिनी प्रौढता सूक्ष्मदर्शिता गंभीरता च उपपन्ना न स्यात्।

## स्फोटवादः

आफ्रेक्टमहोदयेन प्रदत्तपाण्डुलिपिसंग्रहे नागेशकर्तृकस्फोटवादस्यापि नाम दृश्यते। श्रीकृष्णाचार्यः मद्रदेशीयो विद्वान् वैयाकरणः स्वीयसुबोधिनी-टीकासंवलितम् इमम् ग्रन्थम् अडयारलायब्रेरीमद्रासनगरात् १९४६ ई. वर्षे प्रकाशितवान्। तत्रायं वैयाकरणः कथयति यत् तस्य गुरुः वैयाकरणेषु प्रख्यातम् नव्यमतम् (तत्र तत्र स्थले नागेशमतम्) अवगन्तुम् काशीं गतः। ततश्च सः अपूर्वनिधिमिव इमं ग्रन्थम् वर्ण्यविषयरूपे न तु पाण्डुलिपिरूपे स्वदेशे आनीय स्वशिष्येभ्यः नागेशकृतमंजूषायाः पाठनावसरे अध्यापनमाध्यमेन प्रचारितवान्। परंतु एतद्ग्रन्थविषये लब्धपरिचयोऽपि अस्य गुरुः नैकामपि स्फोटवादग्रन्थ-पाण्डुलिपिम् प्राप्तवान्। एवमेव सुबोधिनीकारः श्रीकृष्णाचार्योऽपि अस्य ग्रन्थस्य नाम्ना विषयसामग्र्या च परिचितो जातः। सौभाग्यवशात् प्राचीनपुस्तकशोधनप्रसंगे अयं पण्डितः अडयारपुस्तकालये स्थितम् आन्ध्रलिपौ लिखितम् इमं ग्रन्थं लब्धवान्। तथा च अविलंबेनैव राजकीय-पुस्तकालयमद्रासससंस्थायाः सहयोगेन अस्य ग्रन्थस्य एका अन्या (अडयारस्थित प्रतिलिप्यपेक्षया अतिरिक्ता) प्रतिलिपिः वर्तते इति तेन घोषणा कृता। एवं च अनया सूचनया प्रोत्साहितः श्रीकृष्णाचार्यः स्वगुरोः प्राप्तज्ञानसाहाय्येन अस्मिन् ग्रन्थे अन्वर्थनाम्नीं सुबोधिनीं व्याख्याम् लिखित्वा तस्याः प्रकाशनं कारितवान्। अत्र स्थितं वर्ण्यविषयं दृष्ट्वा वयं वक्तुं शक्नुमः यत् नागेशकृतमंजूषायाम् स्थितस्य सप्रपंचस्फोटभेदनिरूपणनामकप्रकरणस्य अत्यन्तम् अपेक्षितम् एकम्

परिशिष्टम् एव स्फोटवादग्रन्थत्वेन लिखितं वर्तते इति। अतः सर्वं समीक्ष्य वयं निश्चिनुमः यत् नागेशः (नामनिर्देशतः प्राप्तान् गन्थान् विरहय्य) स्वीयान् व्याकरणशास्त्रीयग्रन्थान् वक्ष्यमाणक्रमेण निर्मितवानिति। प्रथमम् बृहच्छब्देन्दुशेखरः ततो लघुमंजूषा, स्फोटवादः, उद्योतः, वैयाकरणसिद्धान्तमंजूषा, लघुशब्देन्दुशेखरः, परमलघुमंजूषा अन्ते परिभाषेन्दुशेखरः इति क्रमेण नागेशीयव्याकरणशास्त्रग्रन्थरचना जाता इति सिद्ध्यति।

एषां ग्रन्थानां कालविषये "ओटिएंटल थॉट एण्ड नागेशभट्ट" इत्याख्ये स्वनिबन्धे डा० गोडेमहोदयः यं यं कालम् यस्य यस्य ग्रन्थस्य कृते निर्धारितवान् तं तमेव कालम् तस्य तस्य ग्रन्थस्य रचनाकालम् मत्वा अग्रेसरामः।

श्रोगोडेमहोदयस्य विचारे निष्कर्षे च समीक्षापूर्वकम् अस्माभिरत्र विस्तरभयान्नालोच्यते। वाचकाः तत्तद्ग्रन्थस्य तं तं कालम् अत्र लिखितानुसारेणैव स्वीकुर्वन्तु इति अस्ति अस्माकं सविनयं निवेदनम्।

अस्मिन् विषये कृतश्रमेण श्रीगोडेमहोदयेन स्थापिततिथ्यनुसारेण १७०० ईस्वीवत्सरस्य इतस्ततः द्वित्रिवर्षाभ्यन्तरे एव वैयाकरणसिद्धान्तमंजूषायाः महाभाष्यप्रदीपोद्योतस्य च रचना नागेशेन कृता वर्तते। अथवा प्रथमम् उद्योतः ततो वैयाकरणसिद्धान्तमंजूषा ततश्च वै. सि. लघुमंजूषा अयमपि क्रमः स्वीकर्तुं शक्यः एवम् इमे त्रयोऽपि ग्रन्थाः अष्टादशशताब्द्याः प्रारंभे द्वित्रिवर्षाणां पौर्वापर्येण निर्मिताः सन्ति।

अत एव सिंधियालायब्रेरी, उज्जैननगरे १७०८ ई. वर्षे निबद्धायाः मंजूषायाः पाण्डुलिपिः लभ्यते। तस्याम् उद्योतस्य संकेतः अतः तस्याः रचनायाः अचिरपूर्वम् एव उद्योतस्य रचना इत्यपि तथ्यं पुरतः तिष्ठति। एवं च १७०० ई०तः आरभ्य १७०८ ई. वर्षं यावत् एषां ग्रन्थानां जन्म इति निश्चीयते।

नागेशभट्टः स्वलघुशब्देन्दुशेखरे महाभाष्यप्रदीपोद्योतम् उल्लिखति, येन लघुशब्देन्दुशेखरस्य रचनाकालः १७०४ ई० वर्षात् १७१० ई० वर्षं यावत् संभवति।

उपर्युक्तक्रमे नानाविधकारणैः बृहच्छब्देन्दुशेखरस्य रचनाकालः सर्वप्रथमः इति सिद्ध्यति। येन १६९० ई०वत्सरात् १६९५ ई० वत्सरं यावत् बृ. श. शेखरस्य निर्मितिः जाता। इति ज्ञायते। अयं सुविस्तृतः ग्रन्थः चतुर्भिः

पंचभिर्वा वर्षैः समाप्यः आसीदित्यत्र नास्ति सन्देहः। एतन्निर्माणानन्तरमेव द्वित्रैः वर्षैः (१६९५ ई०तः १६९७-९८ वर्षं यावत्) उद्योतस्य रचनाकालः तत्पश्चात् अचिरादेव वा वै०सि०मंजूषाया निर्माणम् जातमिति संभाव्यते। एतेषां ग्रन्थानां निर्मितिकालादनन्तरम् नागेशकृतरसमंजरीप्रकाशटीकानुरोधेन नागेशस्य प्रवृत्तिः आलंकारिकग्रन्थानुशीलने जाता, तत्पूर्वमेव लघुशब्देन्दुशेखरस्य परमलघुमंजूषाया ततः परिभाषेन्दुशेखरस्य क्रमशः रचना जाता इति संभाव्यते। एषां त्रयाणां लेखने सः त्रयाणां चतुर्णाम् वा वर्षाणां समयं यापितवान् इत्यनुमीयते यतः एतावान् कालः एषां रचनार्थम् नागेशस्य कृते पर्याप्तः आसीत्। यतः लघुशब्देन्दुशेखरस्य प०ल०मंजूषायाश्च निर्माणम् नागेशस्य कृते न कठिनम् नापि अधिककालसाध्यम् आसीत्। इदं तु स्वरचितग्रन्थानामेव संक्षिप्तीकरणम् आसीत्। येषां वर्ण्यसामग्री लेखकस्य पुरस्तात् पूर्णतया तद्बुद्धौ च प्रथमतः एव सिद्धा आसीत्। यः कियानपि अधिकः समयः एतेषां निर्माणे आवश्यकः आसीत् स च संसारप्रसिद्धपरिभाषेन्दुशेखरस्य निर्माणे एव व्यतीतः भवेदिति संभाव्यते।

अनेन पाण्डितवर्येण द्वादशसंख्याकाः शेखराख्यग्रन्थाः रचिता इत्यनुश्रुतिः। अस्य ग्रन्थस्य निर्माणकाले नागेशः पूर्वोक्तग्रन्थानाम् बृ०श० शेखरादीनाम् निर्माणेन मननेन प्राप्तदिव्यदृष्टिः आसीत् व्याकरणशास्त्रीय-विवेचनप्रसंगे।

एवं १६९० ईस्वीवत्सरादारभ्य १७१० ई. वत्सरं यावत् वा १७१२ ई० वत्सरं यावत् उपर्युक्तक्रमेण नागेशः स्वीयान् व्याकरणशास्त्रीयग्रन्थान् अरचयत् इति कथनस्य धैर्यम् साहसो वा अस्माभिः क्रियते। अत्राभ्यन्तरे एव अष्टाध्यायीपाठप्रभृतिस्वल्पकायव्याकरणग्रन्थानाम् रचना अनेन कृता स्यात् इत्यनुमातुं शक्यम्।

इत्थं व्याकरणशास्त्रे शास्त्रान्तरेषु च प्रौढरचनावशात् अस्य अधिकारः सकलशास्त्रेषु समानः प्रशस्यः च इति अवबुध्यैव तत्काले स्थिताः श्रेष्ठा विद्वांसः अमुम् नागेशम् 'सर्वतन्त्रस्वतन्त्र' इत्यघोषयन् सुविशदया पक्षपातरहितया वाचा।

## शब्दरत्नकारः कः? नागेशः हरिदीक्षितो वा? विवेचनम्।

इयं समस्या विभिन्नैः कारणैः उत्पन्ना परंतु समीक्षया तत्कर्तृत्वं

हरिदीक्षितस्यैव सिद्धान्तितं वर्तते । तद्यथा—

निर्णयसागरमुंबईप्रकाशनसंस्थया प्रकाशिते श्रीपण्डितराजजगन्नाथ-रचिते रसगंगाधरे नागेशस्य गुरुमर्मप्रकाशिकाख्या टीकाऽपि प्राकाश्यमानीता वर्तते। तत्र तद्भूमिकालेखने पण्डितदुर्गादत्तमहोदयः भट्टोजिदीक्षितकृत-सिद्धान्तकौमुदीटीकायाम् मनोरमायाम् शब्दरत्नाख्यटीकायाः कर्तृत्वम् नागेशस्य इति प्रतिपादयति। प्रमाणार्थम् सः कथयति यत् शब्दरत्ने नागेशस्य तस्य ग्रन्थद्वयस्य शेखरमंजूषयोश्च उल्लेखवशात् सः नागेशः शब्दरत्नकर्ता इति साधयितुं शक्यते।

एवमेव नागेशकृतग्रन्थसूच्याम् बृहच्छब्दरत्नस्य लघुशब्दरत्नस्य च नाम दत्त्वा एषां त्रयाणामपि कर्ता नागेशः इति निर्णयस्य पक्षधरः श्रीयुतश्रीघर व्यंकटेशकेतकरमहोदयः स्वीये महाराष्ट्रीयज्ञानकोषे ग्रन्थे स्वमतं समर्थितवान्। येन शब्दरत्नकारः नागेशः इति साधितम्।

नागेशकृतपरिभाषेन्दुशेखरस्य सुविस्तृते सविवरणप्रक्रियासहिते स्वकृतमराठीभाषान्तरे पं० ना० दा० वाडेगांवकरमहाभागः स्वीये भूमिकाभागे शब्दरत्नकारत्वेन नागेशभट्टं स्मृतवान्।

जर्मनदेशीयः विद्वान् आफ्वेक्टमहोदयः स्वीये कैटलागारसकैटलागारम् सूचीपत्रे नागेशम् शब्दरत्नकारम् दर्शितवान्।

एतदतिरिक्तम् अलिखिता लोकश्रुतिरपि घोषयति यत् नागेशभट्टः स्वयमेव शब्दरत्नद्वयम् (लघु बृहत् च) लिखित्वा स्वगुरोः हरिदीक्षितस्य नाम्ना (लेखकत्वेन) सश्रद्धम् प्रचारितवान् यथा स्वाश्रयदातुः शृंगवेरपुराधीशस्य रामसिंहस्य नाम्ना स्वरचिताम् वाल्मीकिरामायणटीकाम् तिलकाभिधाम् प्रसिद्धिमानीतवान्।

एतानि सर्वाणि तथ्यानि मनसि निधाय किं वयं शब्दरत्नकारत्वेन नागेशं स्वीकुर्याम अथवा तन्निषेधमाश्रयाम? इति प्रश्नः समुपतिष्ठते। अस्मिन् प्रसंगे निष्कर्षप्राप्तिसाधकचर्चायाः प्रस्तुतिः अस्माकमावश्यकं कर्तव्यमिति कृत्वा तत्समीक्षामहे। सौभाग्यवशात् ईदृक्चर्चायै अनुकूलानि अत्यन्तमुद्बोधकानि तथ्यानि म० म० का० वा० अभ्यंकरमहोदयोऽपि प्रस्तुतवान्।

नागेशः लघुशब्दरत्नकारः इति पक्षस्य समर्थकानाम् वैयाकरणानां युक्तिः इत्थं वर्तते—अनेकस्थलेषु लघुशब्दरत्नकारस्य विचाराः बृ०

शब्देन्दुशेखरकारस्य विचारात् भिन्नाः सन्ति, अनेन तथ्येन सहैव लघुशब्दरत्नस्य कतिपयस्थलेषु ईदृश्यः कोट्यः ईदृशा वा विचाराः अभिव्यक्ताः सन्ति याः कोटीः यान् वा विचारान् साधारणतः तस्मिन्नेव रूपे शेखरकारो नागेशः स्वशेखरग्रन्थे प्रकाशितवान्। इमां स्थितिं दृष्ट्वा इदं तथ्यं स्वीकर्तुं शक्यं भवति यत् बृहच्छब्दरत्नं तु हरिदीक्षितेन तथा च लघुशब्दरत्नम् शेखरद्वयं च स्वयं नागेशेनैव रचितमिति। अस्मिन् तथ्ये स्वीकृते सति बृहच्छब्दरत्नेन सह लघुशब्दरत्नस्य विरोधः तथा च शेखरद्वयेन सह लघुशब्दरत्नगतं साम्यं च सरलतया उपपद्यते। अनेन विवेचनेन अयं पक्षः नागेशम् शब्दरत्नकर्तारं मन्यते।

अस्मिन् प्रसंगे डा. वेलवलकरमहोदयः अपि स्वस्य "सिस्टम्स ऑफ संस्कृत ग्रामर" इति रचनायाम् इममेव आशयम् साधयति यत् शैलीसाम्यमनुरुध्य इदं वक्तुं शक्यते यत् ल० श० शेखरकारो नागेशः एव ल० श० रत्नम् विरचय्य कृतज्ञताप्रकाशनबुद्ध्या ग्रन्थमिमं (ल० श० रत्नम्) स्वगुरवे श्रीहरिदीक्षिताय समर्पितवानिति।

## सिद्धान्तपक्षस्थापनायाः भूमिका।

अत्र न कोऽपि सन्देहः यत् बृ० श० रत्नस्य ग्रन्थशरीरम् ल० श० रत्नापेक्षया प्रायः त्रिगुणितं वर्तते तथा तत्रस्थितानेकप्रतीकानां निर्णयानां च दृष्ट्या उभयोः रत्नयोः भेदोऽपि बुद्धिग्राह्यो वर्तते अतएव च उभयोः कर्तारौ परस्परं भिन्नौ इति संभावना तु सिध्यत्येव। तथापि उभयोः ग्रन्थयोः समानं वर्ण्यविषयम् शैलीतात्पर्ययोः साम्यम् यथा च अनेकस्थलेषु समानाम् अभिव्यक्ति च दृष्ट्वा हठात् इयं बुद्धिर्भवति यत् एक एव कर्ता समानम् उद्देश्यं मनसि निधाय इमौ द्वावपि ग्रन्थौ रचितवान्। इमां स्वप्रतीतिमनुरुध्य अनयोः एककर्तृकतायां सिद्धायाम् यतः बृ० शब्दरत्नरकाररूपे निर्विवादम् हरिदीक्षितस्य कर्तृत्वम् सिद्धम् अतः ल० शब्दरत्नकाररूपेऽपि तस्यैव कर्तृत्वस्वीकारपक्षः सफलः भवति।

परंतु पक्षस्यास्य साफल्याय पूर्वपक्षे ल० शब्दरत्नकाररूपे नागेशस्य कर्तृत्वस्वीकारे प्रदत्तयुक्तीनां समाधानम् अत्यावश्यकं भवति। अत एव उपर्युक्तात् सिद्धान्तपक्षाश्रयिणः सकाशात् पूर्वपक्षस्य विरोधे इदं कथयितुं शक्यते।

हरिदीक्षित: स्वपितामहस्य कृतौ मनोरमायाम् स्वस्य शब्दरत्ननाम्नीं टीकाम् सर्वप्रथमम् अरचयत्। इमां टीकां दृष्ट्वैव स्वगुरुरिव नागेश: सिद्धान्तकौमुद्याम् बृहच्छेखराभिधां बृहतीम् टीकामरचयत्। इति संभवति।

किंचित्कालानन्तरम् स्वच्छात्राणां पाठनसौविध्यदृष्ट्या नागेश: इमं स्वीयम् बृ० श० शेखरम् लघयितुमावश्यकम् अनुभूतवान् तथा तदनुसारेण बृहतं शेखरम् स: अल्पकायमकरोत्। इदं च संभवति यत् स्वपितामहस्य श्री भट्टोजिदीक्षितस्य विरोधे नागेशेन प्रकटितान् अनेकस्थलीयान् शेखरद्वयस्थितान् कोटिक्रमान् समुचितान् अवबुध्य उदारचेता: गुरुरिव हरिदीक्षित: तान् नागेशोक्तान् अभिप्रायान् समर्थितवान्।

परंतु स: हरिदीक्षित: बृ० श० शेखरे? क्वचित् क्वचित् नागेशविरुद्धान् अभिप्रायान् प्रथममेव लिखितवान् (केषांचित् मतेन बृ० श० शेखरोऽपि हरिदीक्षितेनैव रचित:) अत एव तत्र स्थितानि नागेशाभिप्राय-विरुद्धानि तथ्यानि प्रकाश्य अपि नागेशस्य लघुशब्देन्दुशेखरदर्शनानन्तरम् तत्र स्थितम् युक्तिमत्त्वम् सारवत्त्वं च निरीक्ष्य स्वीये लघुशब्दरत्ननाम्नि टीकाग्रन्थे नागेशाभिप्रायं समर्थितवान् हरिदीक्षित: इति।

अत: स हरिदीक्षित: तान् स्वीयान् बृ० श० शेखरस्थितान् अभिप्रायान् संशोधयितुम् तथा तेषामतिविस्तारवशात् अल्पपठनीयतां दूरीकृत्य तेषामभिप्रायाणाम् पठनीयतां वर्धयितुम् लघुशब्देन्दुशेखरम् लघुशब्दरत्नं च लिखितुम् विवशो जात: स्यात्।

(अस्मिन् पक्षे शेखरद्वयस्य मुख्य: कर्ता हरिदीक्षित: संशोधकश्च नागेश इति ज्ञेयम्) एवं स: ल० श० रत्ननाम्नीम् ईदृशीम् नवीनाम् रचनाम् कृतवान् यस्याम् क्वचित् क्वचित् बृ० श० रत्नेन सह विरोध: लघुशब्देन्दुशेखरकारनागेशीयविचारै: सह साम्यं च दृश्यते। अस्य सिद्धान्तस्य उपरिदर्शितपरिस्थिते: प्रकाशे दर्शनेन उपर्युक्तस्य पूर्वपक्षस्य सर्वा: युक्तय: खण्डिता भवन्ति। तथा च अस्माकं सिद्धान्त: सुरक्षितो भवति। समीक्षया च अत्रायं निष्कर्ष: सिद्धान्तितो भवति यत् शब्दरत्नद्वयस्य (बृहत: लघोश्च) लेखक: हरिदीक्षित एव।

बृहच्छब्दरत्नरचनोत्तरम् हरिदीक्षितशिष्यो नागेश: शेखरद्वयं विलिख्य गुरो: पुरस्तात् काश्चित् स्वरचिता: नवीना: कल्पना: अकरोत्। ता: कल्पना:

स्वीकृत्यैव हरिदीक्षितः लघुशब्दरत्नम् अलिखत्। एवम्

१. बृहच्छब्दरत्नम् (हरिदीक्षितः) २. बृहच्छब्देन्दुशेखरम् (नागेशः) ३. लघुशब्देन्दुशेखरम् (नागेशः) ४. लघुशब्दरत्नम् (हरिदीक्षितः) अयं क्रमः अनयोः पृथक् पृथक् लेखकयोः अस्ति इति ज्ञातव्यम् यस्य चर्चा उपरिष्टात् कृता वर्तते।

लघुशब्दरत्नस्य लेखकः स्वयमेव तद्धितकृदन्तप्रकरणयोरन्ते स्ववाचकान् (शब्दरत्नस्य पाठकान्) उपदिष्टवान् यत् अस्य विषयस्य विस्ताराय हरिदीक्षितकृते बृहच्छब्दरत्ने तथा मत्कृते बृ० शेखरे ल० शेखरे इत्थम् शेखरयोश्च द्रष्टव्यमिति। अनेन आञ्जस्येनैव उभयोः शब्दरत्नयोः कर्ता (हरिदीक्षितः) एक एव सिद्ध्यति। सहैव हरिदीक्षितः शेखरमंजूषयोरभिप्रायम् तत्तत्स्थलीयम् स्वशब्दरत्नद्वये समावेशितवान्। एवं च सः नागेशीय-ग्रन्थानामादरं करोति इत्यपि सिद्ध्यति। इति श्रीअभ्यंकरमहोदयस्य टिप्पणी वर्तते।

परमलघुमंजूषायाः टीकाकृत् पण्डितकालीप्रसादशुक्लमहोदयः शब्दरत्नकारत्वेन नागेशभट्टस्य स्वीकृतौ विरोधं दर्शयति—एतदर्थं सः सुग्राह्यतर्कम् उपस्थापयति—उभयोः शब्दरत्नशब्देन्दुशेखरयोः ग्रन्थयोः शैलीसाम्ये सत्यपि शब्दरत्ने सापेक्षदृष्ट्या शब्दानां लाघवपूर्णः प्रयोगः विचारेषु गांभीर्यम् प्रौढता च दृश्यते परंतु तुलनात्मकदृष्टया लघुशब्देन्दुशेखरे एतानि तथ्यानि नोपलभ्यन्ते। अतएव उभयसाधारणानि विषयविशेषसंबद्धानि तथ्यानि (कर्तृ) उभयोः ग्रन्थयोः उपलभ्यमानान्यपि यद्यपि उभयोरभिन्नताया आभासं प्रकटयन्ति तथापि स आभासः आभास एव न तु वस्तुस्थितिः इति पूर्व विवेचनेन सहैव अवगन्तव्यम् इमां परिस्थितिं दृष्ट्वा अस्माकं पाठकाः शब्दरत्नकारं नागेशं न स्वीकृत्य अथ च अनुश्रुतेः (नागेश एव शब्दरत्नं लिखित्वा स्वगुरुनाम्ना तस्य प्रसिद्धिमकारयत् इत्येवंरूपायाः) व्यर्थतां स्वीकृत्य वस्तुस्थितिं ज्ञास्यन्ति इत्यस्ति अस्माकं विश्वासः।

आफ्रेक्टमहोदयस्य नागेशीयग्रन्थसूच्याम् प्राप्तमुल्लेखं विहाय कस्मिन्नपि पाण्डुलिपिसंग्रहे वयं न कामपि वै० भूषणस्य पाण्डुलिपिम् पश्यामः यामाश्रित्य नागेशः वै. भूषणस्य कर्ता साधयितुं शक्यो भवेत्। अतः अस्य ग्रन्थस्य (वैयाकरणभूषणस्य) नागेशकर्तृकताविषये मौनमाश्रयामः। अथ च अयं वैयाकरणभूषणसारग्रन्थः नागेशकृतिभ्यः सर्वथा भिन्नः इति निश्चिनुमः।

नागेशकृतग्रन्थानां केवलं मौखिकी प्रशंसा शब्दोपन्यासेन न संभवति अत: जिज्ञासुवर्ग: प्रार्थ्यते यत् स वर्ग: तेषां ग्रन्थानाम् (प्रत्येकम् पूर्णतया अशक्तिस्थितौ) कतिपयांशानामेव वाचनेन मननेन सूक्ष्मविचारेण च शास्त्रानन्दं प्राप्नोतु तथा च नागेशस्य वैदग्ध्येन परिचितो भूत्वा एव तत्प्रशंसको भवतु।

एषां नागेशीयग्रन्थानाम् लोकप्रियताया: वैदुष्यपूर्णतायाश्च एतदतिरिक्तं किं प्रमाणम् यत् एषु ग्रन्थेषु अत्यन्तं प्रौढा: विशदा: सारग्राहिण्य: अनेका: टीका: तै: रचिता: येषां यश: उच्चकोटिकवैयाकरणत्वेन वैयाकरणमण्डलीषु अद्यापि समुज्जृम्भते।

## नागेशीयव्याकरणवाङ्मये टीकाः।

संस्कृतिवशादेव भारतस्य इदं महत्त्वम् वर्तते यत् अत्र नागेशसदृशसूक्ष्मदर्शिवैयाकरणरचितानां ग्रन्थानां प्रचार: प्रसार: च यातायातक्लेशबहुलेऽपि काले संपूर्णेऽपि भारते तच्छिष्यै: प्रशिष्यैश्च कारित: वर्तते। येन अद्यापि नागेशीयं यश: अस्मिन् शास्त्रे उज्ज्वलमेव तिष्ठति। नागेशकालोत्तरमेव १७७५ ई. वत्सरादनन्तरमेव अचिरेणैव नागेशीयतात्पर्यबोधिन्य: तत्सारांशबोधिकाश्च टीकाः रचयितुमारब्धाः।

अध्यापकेषु यस्य यस्य यं यं तात्पर्यबोधं प्रति रुचि: आसीत् तत्तद्रुचिसंपन्नाभिप्रायाविष्कारिण्य: अत एव विविधा: टीकाः निरमीयन्त।

कतिपयटीका: एतदर्थमेव लिखिता: येन मूलग्रन्थस्य वस्तुभूत: अर्थ: सुलभो भवेत्। अस्य हेतो: साधनाय इमा: ईदृश्य: टीका: व्याख्यारूपेण लिखिता: सन्ति।

परंतु कासुचित् टीकासु अयं प्रयत्न: कृतो वर्तते यत् इयमियम् पंक्ति: केन हेतुना लिखिता? पंक्त्याशय: क:? पंक्तिलेखनस्य कारणं किम्? इत्येतदपि आसु टीकासु प्रपंचितम् समीक्षितं च। ईदृश्य: टीकाः पदकृत्यम् इति ग्रहीतुं न शक्यन्ते परंतु 'पंक्तिकृत्यम्' इति नाम तासां कृते अन्वर्थकमिति प्रतिभाति। कतिपयासु पूर्वोत्तरपक्षवर्णनमेव मुख्यो विषय:। क्वचित् वादे विवादे शास्त्रार्थप्रसंगे नैपुण्यवृद्धये परिष्कारात्मकभाषायाम् निबद्धकोटिक्रम-परिप्लुता: उक्तय: एव प्रधानविषयो विद्यते। एवं च किमपि स्यात् आसां टीकानां मुख्यं विवेचनम् एकमेव समानमेव। अत: उक्तरीत्या तासां बहुमुखित्वेऽपि आसु एकत्वप्रतीतिर्भवति।

नागेशस्य परमप्रियः गंभीरो विद्वान् शिष्यः पायगुण्डे इत्युपाह्वः वैद्यनाथः परिभाषेन्दौ गदाम्, ल० श० शेखरे चिदस्थिमालाम् उद्द्योते च छायाम् इमा मनोरमाष्टीकाः अरचयत्। महाराष्ट्रप्रदेशे गदाटीकायाः अध्ययनाध्यापनयोरधिकः प्रचारः दृश्यते।

स्वयुगे सम्मानितो विद्वान् श्रीभैरवमिश्रः परिभाषेन्दुशेखरे भैरवीम्, शब्देन्दुशखरे चन्द्रकलाम् निर्माय नागेशीयरचनानाम् समादरं समाजे प्रतिष्ठापितवान्। एवमेव परिभाषेन्दौ पण्डितहरिनाथः अकाण्डताण्डवम्, मन्नुदेवः दोषोद्धरणम्, भीमभट्टो भैरवीम्, शंकरभट्टो शांकरीम् लिखितवान्। एतदतिरिक्तम् अम्बाकर्त्री इति टीकायाः पठनम् पाठनम् च महाराष्ट्रप्रदेशे अतितराम् प्रचलति।

ईस्वीदृष्ट्या एकोनविंशतितमशताब्द्यां सदाशिवभट्टस्य सदाशिवभट्टी, श्रीधरस्य श्रीधरी, राघवेन्द्राचार्यगजेन्द्रगढकरस्य विषमी, श्रीभास्करशर्मणःअभ्यंकरोपाह्वस्य विवरणम् एताष्टीकाः लघुशब्देन्दुशेखरे प्रसिद्धाः सन्ति।

एतदनन्तरम् महाराष्ट्रभूमेः परमप्रसिद्धाः वैयाकरणाः पं. काशीनाथ-अष्टपुत्रेमहोदयः बालशास्त्रीरानडेमहाभागः च गोपालाचार्यकन्हाडकरः एते परिभाषेन्दौ वैदुष्यपूर्णाः टीका अरचयन्।

विनोदस्य विषयोऽयम् यत् पण्डितविष्णुशास्त्रिणा परिभाषेन्दौ रचिताया विष्णुभट्टी इत्याख्यायाः खण्डने गोपालशास्त्रिकन्हाडकरेण कृतायाः दूषकरोद्भेदाख्यटीकाया उत्तरम् पुनरपि विष्णुभट्टः चिच्चन्द्रिकालेखनेन प्रदत्तवान्।

विश्वनाथो दण्डिभट्टः उभयोः शेखरयोः व्याख्याः लिखितवान्, लघु०रे इन्दिरापतेः परीक्षा, शिवनारायणशास्त्रिणः विजया, गुरुप्रसादशास्त्रिणः वरवर्णिनी इति व्याख्याः उपलभ्यन्ते।

परिभाषेन्दौ तात्याशास्त्रिपटवर्धनमहोदयस्य भूतिः अतीव प्रसिद्धा यस्या अध्ययनम् अध्यापनम् उत्तरे भारते सम्मानपूर्णं मन्यते।

पण्डितशिवकुमारशास्त्री तथा लघुशब्देन्दुशेखरस्य सफलतमः अध्यापकः पण्डितनित्यानन्दपर्वतीयः परिभाषेन्दौ श्रेष्ठाः व्याख्याः रचितवन्तौ।

एवमेव म०म०पाध्यायः पण्डितवासुदेवशास्त्री अभ्यंकरः एताः पूर्वोक्ताः

सर्वा अपि टीकाः अनुशील्य तासु स्थितम् सूक्ष्ममभिप्रायं च परीक्ष्य लघु श०रे गूढार्थप्रकाशम् परिभाषेन्दौ तत्त्वादर्शं च लिखितवान्।

येन उपर्युक्तानां तत्तद्ग्रन्थानां टीकानां च तात्पर्यम् सरलतया ज्ञातुं शक्यते। इत्यनुभवोऽस्ति गूढार्थप्रकाश-तत्त्वादर्श्योः अनुशीलनतत्पराणाम् विदुषाम्।

एतदतिरिक्तम् जर्मनदेशीयो विद्वान् प्रो० कीलहार्नमहोदयः अपि परिभाषेन्दुशेखरस्य आंग्लभाषया अनुवादमकरोत्। आन्ध्रविश्वविद्यालयस्थाः पण्डितवेंकटेश्वरशास्त्रिणः नागेशगूढार्थदीपिकाम्, म०म०पं० जयदेवमिश्रः विजयाम् अतिप्रसिद्धाम् उपयोगिनीं च टीकामरचयत्।

अस्य परमलघुमञ्जूषायां पण्डितकालिकाप्रसादशुक्लः ज्योत्स्नाम् एकाम् अत्युत्तमाम् टीकाम् अरचयत्। आसु अनेकाः टीकाः प्रकाशिताः सन्ति याश्च अप्रकाशिताः तासां ज्ञानम् भंडारकर ओरि० इन्स्टी० पुणेतः कर्तुं शक्यम्। विस्तरभयादत्र तच्चर्चा न क्रियते।

## जन्मकालनिर्णयः।

जन्म १६७४ ई. वत्सरे वा अस्य वर्षस्य द्वित्रिवर्षाभ्यन्तराले अस्य महापुरुषस्य जन्म अभवत्। डा० पी० वी० काणेमहोदयः, नागेशः सप्तदश शताब्द्याः अन्तिमभागे अष्टादशशताब्द्याः आरंभे प्रसिद्धिमगात् इति मतं स्थापयति युक्तिपुरःसरम्।

श्रीगोडेमहोदयेन नागेशीयग्रन्थानां कालस्य पौर्वापर्यस्य च निर्णयप्रसंगे प्रदत्तसामग्रीवशात् अयमुक्तः कालः स्थिरीभवति। नागेशीयग्रन्थानां पाण्डुलिपिविषयकविचारप्रसंगे अस्माभिः तासां नागेशीयपरिभाषाणां खण्डत्रये विभाजनं कृतं वर्तते। तदनुसारेण समीक्षया सिद्ध्यति यत् अस्य ग्रन्थानां हस्तलिखितं संस्करणम् १८०३ ई० वत्सरं यावत् रचितं वर्तते।

द्वितीयखण्डमनुसृत्य कथयितुं शक्यते यत् प्रथमखण्ड-समीक्षासाधितकालापेक्षयापि पूर्वमेव अर्थात् १७३८ ई० वत्सरं यावत् अस्य ग्रन्थानां हस्तलिखितं स्वरूपम् समुपलभ्यते इति।

तृतीयखण्डस्य विचारेण १७०८ ई. वत्सरं यावदेव अस्य ग्रन्थानां प्रतिलिपिकरणम् द्रष्टुं शक्यते।

एवं १७०८ ई० वत्सरं यावत् अयं विद्वान् मनीषी स्वप्रसिद्धग्रन्थस्य

वैयाकरणसिद्धान्तमंजूषायाः निर्माणमकरोत्। इत्यस्मत्पुरतो विलसति प्रमुखो निष्कर्षः।

अयं पण्डितः स्वीये सापिण्ड्यप्रदीपे १५४० ई.तः १६०० ई. यावत् स्थितस्य शंकरभट्टस्य तथा च १६४५ तः १६७५ यावत् स्थितस्य अनन्तदेवस्य १५७५ तः १६३० यावत् स्थितस्य धर्माधिकारिनन्दपण्डितस्य च नामानि गृह्णाति। अतः सः १६७० ई० वत्सराननन्तरमेव जातः इति निश्चेतुं शक्यते।

उज्जयिनीस्थितपुस्तकालये प्राप्तायाः हस्तलिखितवैयाकरणसिद्धान्त-मंजूषायाः १७०८ ई० वत्सरः तत्र अंकितः (शक संवत्सरादिरूपेण) तस्यां नागेशः महाभाष्यप्रदीपोद्योतस्य चर्चां कृतवान् येन उद्योतः, वै० सि० मं० याः प्राक् निर्मित :इति सिद्ध्यति।

न्यूनातिन्यूनत्रिंशद्वर्षावस्थाम् अलब्ध्वा न कोऽपि विचारकः (श्रीशंकराचार्यसदृशदैवपुरुषं विहाय) ईदृशान् गंभीरविषयपरिप्लुतान् ग्रन्थान् निर्मातुम् शक्नोति। अनया युक्त्या १७०८ ई० वत्सरकालस्य पाण्डुलिपि समीक्षया अस्य जन्म १६७० ई० वत्सरादारभ्य १६७५ ई० वत्सराभ्यन्तरे कदाचित् काले जातम्। एतत्स्वीकृत्या पूर्वोक्तानाम् अनन्तदेवप्रभृतीनाम् विदुषां सन्दर्भोऽपि संगच्छते।

अत एव वयम् एतत् तथ्यं सविश्वासं घोषयामः यत् उपर्युक्त-पाण्डुलिपिमनुसृत्य तद्विवेचनेन च नागेशः १६७० ई० तः १६७५ ई० वत्सरं यावत् क्वचिदपि वर्षे मंगलं जन्म लब्धवानिति। न हि एतत्कालानन्तरं तज्जन्म। इयमस्ति तस्य जन्मविषये उत्तरकालिकसीमा।

एवमेव तस्य कार्यकालः अष्टादशशताब्द्याः पूर्वार्धः तथा १७७५ ई. वत्सरं यावत् जीवनकालः इति निश्चीयते।

सुदृढप्रमाणाभावे एतदुल्लिखितकालात्पूर्वम् अस्य जन्मकालः साधयितुम् अथ यावत् न शक्यते—भविष्ये किम्? इत्युपेक्ष्य १६७० तः १६७५ ई० वत्सरं यावत् अस्य जन्मकालः ततश्च १७७५ ई० वत्सरं यावत् कार्यकालः इत्येव प्रतिष्ठाप्यते।

जन्मकालनिर्णयप्रसंगे एतद्विषयिण्यौ द्वे अनुश्रुती अपि उक्तमतस्य समर्थिके स्तः।

अद्यापि जयपुरनगरे अन्यत्र चेयं कथा प्रसिद्धा वर्तते तद्विदाम्। सवाईजयसिंहद्वितीयः (१६८८ तः १७२८ ई० वत्सरं यावत्) १७१४ ई० वत्सरे अश्वमेधेनेष्टवान्। अस्मिन् पुण्यशौर्यमये यागे तत्काले भारते प्रसिद्धाः प्रतिष्ठिताः विद्वांसः आहूताः सादरं निमन्त्रिताश्च।

येषु नागेशोऽपि अन्यतमः आसीत्। परंतु धनार्जननिरपेक्षः शास्त्रमात्रचर्चापेक्षः नागेशः तन्निमन्त्रणम् अस्वीकृत्य जयपुरनरेशम् प्रत्युत्तरितवान् यत् अहं क्षेत्रसंन्यासम्-क्षेत्रात् काशीक्षेत्रात् बहिः कुत्रापि गमनस्य सन्न्यासम् त्यागव्रतम् गृहीतवान्, अतोऽपि यज्ञे मम उपस्थितिः नैव संभवति इति।

इमामनुश्रुतिं प्रमाणं मत्वा वयं कथयितुं शक्नुमः यत् भारतप्रसिद्ध विद्वद्वर्यैः प्राप्तव्यस्य निमन्त्रणस्य कृते विशिष्टयोग्यतासंपादनाय न्यूनतमदृष्ट्या चत्वारिंशद्वर्षायुः अपेक्ष्यते। एवं यागकालात् पूर्वम् ४० वर्षेषु १७१४–४० = १६७४ ई० वत्सरं परितः तस्य जन्मकालः युक्तियुक्तः पूर्वोक्तदृष्ट्या अधिकतरविलंबस्थितौ।

पण्डितहरप्रसादशास्त्रिमहोदयः (संस्कृतकॉलेज कलकत्ता प्राचार्यः) बंगाल रायलएशियाटिकसोसायटीसंस्थायाम् स्थितसंस्कृतग्रन्थपाण्डुलिपीनाम् अनुक्रमणिकाम् निर्मितवान्। तस्याः प्रस्तावनालेखनसमये शास्त्रिमहोदयः नागेशसंबद्धाः काश्चित् दन्तकथाः अलिखत्। यासां प्रामाण्ये संशयो विद्यते। तथापि तासामुत्कीर्तनम् कालप्राप्तम् इति मत्वा ताः अत्र प्रस्तूयन्ते।

एका दन्तकथा अनुश्रुतिर्वा कथयति—नागेशः श्री भट्टोजिदीक्षितस्य व्याकरणशास्त्रीयविचाराणां प्रबलः पोषकः अत एव सः श्रीदीक्षितस्य सर्वेष्वपि व्याकरणग्रन्थेषु टीकालेखनेन दीक्षितसंप्रदायम् उन्नतमेव अकार्षीत्। तथा च तत्पौत्रस्य श्रीहरिदीक्षितस्य व्याकरणशास्त्रे शिष्यतां च गृहीत्वा परंपरयापि श्री दीक्षितस्य समर्थकः एव आसीत् सः। शतवर्षेभ्योऽपि अधिकम् जीवन् अयम् १७७५ ई० वत्सरे तस्मिन् दिने ब्रह्मलीनोऽभवत् यस्मिन् दिने बनारसनगरीय-विद्रोहवशात् वारेनहेस्टिंगइत्याख्यस्य आंग्लशासनसचिवस्य जीवनं संकटापन्नमासीत्।

शास्त्रिवर्यस्य इयम् अनुश्रुतिः प्रामाणिकी स्वीक्रियेत चेत्तर्हि अपि नागेशस्य दीर्घजीवित्वम् विशिष्टं मृत्युदिवसं च अनुसन्धाय अस्य जन्मकालः

१६७४ ई० वत्सरानन्तरं न संभवति। इयमनुश्रुतिरपि अस्मत्पूर्वोक्तनिर्णये (अस्य जन्म १६७४ ई० वत्सरं परितः इतस्ततः वर्षे इति रूपे) साहाय्यमेव प्रयच्छति।

काशीक्षेत्रे प्रसिद्धामेकाम् आख्यायिकामनुसृत्य नागेशः स्वमृत्युकालं यावत् अतीववृद्धो जातः तथापि तस्य लेखनव्यापारक्रमः अनवरतं प्रचलन्नासीत्। अतिवार्धक्यवशात् तस्य पृष्ठे कुब्जतादोषः उत्पन्नः फलतः लेखनकाले उपवेशनकाले सः महत्कष्टमनुभवन् आसीत्। कुशलोऽयं मनीषी अस्यां स्थितौ भित्तौ एकं महद्रन्ध्रं विधाय तत्र स्वकुब्जतायुक्तं पृष्ठभागं निधाय सरलतया स्वलेखनव्यापारे संलग्नः सन्नासीत्। इयमपि आख्यायिका तस्य दीर्घजीवित्वे प्रमाणं साधयति। एवमपि तस्य जन्मकालः १६७४ ई० वत्सरः इति स्वीकारे आनुकूल्यमेव भवति अनया अनुश्रुत्या साधितेन तस्य दीर्घजीवित्वेन।

अस्य निष्कर्षस्य विरोधे वंगदेशस्थनदियास्थिते एकस्मिन् संस्कृत विद्यालये स्थितस्य एकस्य ग्रन्थस्य आधारेण ज्ञानकोशकारः कथयति—नागेशः स्वशैशवे वेदाध्ययनम् याज्ञिकम् (कर्मकाण्डम्) कर्म च शिक्षित्वा स्वोदरपूर्तिमकरोत्। परंतु तेन कर्मणा जीवननिर्वाहस्य व्यवस्था न जाता अत एव सः महाराष्ट्रप्रदेशस्य वाईक्षेत्रं गतवान्। तत्रैव संस्कृतपाठशालायाम् काव्यादीनामध्ययनं समाप्य चत्वारिंशे वर्षे काशीमागत्य व्याकरणशास्त्र-मधीतवान्। ततः मन्त्रशास्त्राध्ययनं कृत्वा वयसः पंचाशत्तमे वर्षे सप्तशत्याः टीकाम्, तथा महाभाष्यप्रदीपे उद्योताभिधां टीकाम्, अन्येषु प्रसिद्धेषु व्याकरणग्रन्थेषु च टीकाः लिखन्वयसः द्विषष्टितमेऽब्दे काश्यामेव देहत्यागमकरोत्।

इयं सूचना तस्य दीर्घजीवित्वस्य विरोधिनी परंतु अस्य तथ्यस्य स्वीकारे एका समस्या उत्पद्यते यत् ५० तमवर्षात् ६२ तमाब्दं यावत् द्वादशवर्षीयाल्पावधौ एतावन्तः महान्तो ग्रन्थाः कथं निर्मिताः स्युः इति विवेचकबुद्धौ नायाति।

प्रतिभासंपन्नाः अल्पीयस्येव काले आश्चर्यकराणि कार्याणि संपादयितुं शक्नुवन्ति इति तथ्यस्वीकारे इयमनुश्रुतिः संगच्छते तथापि अनया अनुश्रुत्या इदं निष्कृष्टम् न साध्यते यत् अस्य जन्मकालः १६७४ ई० वत्सरात् अनन्तरमेव विद्यते इति।

अतः इमां सूचनां प्रति अस्याः विश्वसनीयतां च प्रति तटस्था भूत्वा वयम् अस्मद्धारणाम् (१६७४ वर्षं यावत् अस्य जन्म अवश्यमभूत् इति) सुप्रतिष्ठिताम् कर्तुं शक्नुमः।

एवम् १७०९ तथा १७१२ ईस्वीवत्सरयोः स्थितानाम् नागेशग्रन्थप्रतिलिपीनाम् अनेकपाण्डुलिपिसंग्रहेषु प्राप्तानाम् दर्शनेन इदं तथ्यमनुभवामः यत् ईदृशगूढज्ञानोत्तरमेव ते ग्रन्थाः ताः टीकाः प्रतिलिपयो वा लिखिताः सन्ति। अतः तज्ज्ञानार्जने आवश्यकम् अपेक्षितं च समयम् अनुरुध्य नागेशस्य जन्मकालः १६७४ ई० वत्सरे तत् परितः तथा च तस्य १७७५ ईस्वीवर्षीयैतिहासिकघटनासमये एव मृत्युः इति अनुश्रुत्या सह संगच्छते।

## श्रीनागेशभट्टस्य संक्षिप्तः पद्यबद्धः परिचयः

श्रीकाशीस्थमहाराष्ट्रब्राह्मणेषु द्विजोत्तमः।
शिवभट्ट इति ख्यातो वेदवित् पंक्तिपावनः॥
काश्यपान्वयसंभूतो धार्मिकः कर्मठः सुधीः।
कालोपनामा कोऽप्यासीदृग्वेदी चाश्वलायनः॥
तस्य जाया सती नाम्नी सतीजननुताह्यभूत्।
तस्यां स जनयामास तनयं विदुषां वरम्॥
नागेश इति नाम्ना तं शिवभट्टः स्वयं पिता।
चकार भूषितं देवद्विजगुरुबन्धुसन्निधौ॥
तनयः शिवभट्टस्य सतीगर्भसमुद्भवः।
नागोजीभट्ट इति यो वाराणस्यां प्रथामगात्॥
समाराध्य प्राणपणं वागीशीं स्कन्दमातरम्।
स लेभे निर्मलां मेधां शास्त्रसारावबोधिनीम्॥
श्रीकर्णाटमहाराष्टाभिजनब्राह्मणोत्तमात्।
श्रीमदापस्तम्बसूत्राध्यायिनस्तैत्तिरीयिणः।
भट्टोजिदीक्षितसुतभानुजीदीक्षितात्मजात्॥
वाराणसेयाद्व्याकरणं लेभे श्री हरिदीक्षितात्।
आन्वीक्षिकीं श्रीकाशीस्थवंगीयद्विजपुंगवात्॥
जगृहे श्रीरामरामभट्टाचार्यात् विदां वरात्।

वेदवेदांगमर्मज्ञो धर्मशास्त्रविचक्षणः ॥
पदवाक्यप्रमाणानां मर्मभेत्ता कुशाग्रधीः ।
षड्दर्शनविवरणाचार्यः कर्मठपुंगवः ॥
गृहीतक्षेत्रसन्न्यासः पुण्यश्लोकशिखामणिः ।
सिद्धेश्वरीसन्निधाने वाराणस्यामयं वसन् ॥
अध्यापयन् बहून् छात्रान् ऋषिकल्पः प्रतापवान् ।
पाणिनीयव्याकरणव्याख्याता बुधपुंगवः ॥
बह्वानन्यसामान्यः पतंजलिरिवापरः ।
सोऽनुग्रहायच्छात्राणां प्रौढपांडित्यसंयुताम् ॥
नानाशास्त्रेषु निरमान् नानाग्रन्थान् मनोरमान् ।
शृंगवीरपुराधीशो रामवर्मास्य शिष्यताम् ॥
गतः प्रख्यातिमापेदे सभासु विदुषां पराम् ।
विद्यापारावारपारीणधुर्याः प्रौढाः शिष्यास्तस्य चासन्ननेके ॥
देशे देशे शास्त्रविद्यावदान्या, धर्माध्यक्षा राजमान्याश्च धन्याः ।

**वाराणसेयविद्वत्पुरावृत्तात्**

# द्वितीयोऽध्यायः

## द्वितीयाध्यायस्य संक्षिप्तं विषयवस्तु।

अथ शक्तिविचारः अपभ्रंशेष्वपि शक्तिःइति साधनेन नैयायिकमत समीक्षा, कारकपदस्य अर्थः संबोधनपदार्थे नागेशकौशलम्, एतत्संबद्धम् नागेशीयं विवेचनम् दीक्षितशब्दरत्नकारादिमतापेक्षया प्रशस्यम् आचार्यहरिसम्मतं चेति साधितम्। वाक्यस्फोटः, निपातार्थविचारे विशिष्टविचारः। शाब्दबोधे नैयायिकसम्मतयोग्यताया अनिवार्यत्वं खण्डितं वर्तते धात्वर्थविचारः।

एवं सप्त प्रकरणानां विचारः समीक्षा च अस्मिन्नध्याये कृता वर्तते। एषां प्रकरणानां नामोल्लेखः यथावसरं करिष्यते एव।

## द्वितीयाध्यायस्य सारांशः

*निखिलमपि नागेशचर्चितं पाणिनीयव्याकरणशास्त्रानुबन्धिलेखनम् इतस्ततः सामान्यरूपेण, क्वचित् क्वचित् गंभीररूपेणापि विमृश्य तत्रस्थितगुणैर्विवशीकृतोऽहम् यथामति यथाविस्तरं च स्वसंस्कृतेन तद्वक्तुकामः स्वकार्यं प्रति सन्नद्धोऽस्मि।*

*पूर्वोक्तविद्वच्चतुष्टयी (प्रास्ताविके निर्दिष्टाः) पोषिताः नागेशयशोवर्धकाः नागेशोक्ताः व्याकरणशास्त्रीयविचाराः अस्य निबन्धस्य मूलम् उपादानम्। ते च विचाराः मया चतुर्षु भागेषु प्रतिष्ठापिताः सन्ति। प्रथमभागे गृहीता विषयाः इमे—*

*नागेशस्य जन्म, शैशवम्, जीवनसंघर्षः, वैदुष्यातिशयार्जनम् विविधाः अनुश्रुतयः, राजसभाध्यक्षत्वम्, वैदुष्यप्रकर्षजन्ययशोवर्धनम्, ग्रन्थलेखनम्, शिवसायुज्यप्राप्तिः इत्येतान् विषयान् अधिकृत्य प्रथमो भागः संपन्नो वर्तते।*

*अथ द्वितीयप्रकरणे लघुमंजूषास्फोटवादाधारिताः अर्थतत्त्वमधिकृत्य विवेचिताः सिद्धान्ताः तत्तद्वैशिष्ट्यनिरूपणपूर्वकम् (प्रायः) स्थापिताः सन्ति।*

*यथा कारकार्थ-संबोधनार्थ-शक्तिपदार्थ-वाक्यशक्त्यात्मकवाक्य-*

स्फोटधात्वर्थ-निपातार्थ-नैयायिकाभिमतयोग्यताखण्डनादिरूपाणाम् नागेशविचाराणां मननेन तत्रत्यम् विशिष्टं गुणं दर्शयन् अहम् उक्तपारिभाषिक-पदार्थनाम् नागेशाभिमतम् संस्कृतव्याकरणशास्त्रीयदूषणापनोदकम् एतच्छास्त्रमहिम्नो वर्धकम् स्वरूपं प्रस्तोतुकामोऽस्मि। इत्थं तत्स्वरूपप्रकाशनेन सहैव मूले अध्याये विवेचितानामेषामर्थानाम् सारांशप्रकाशनमत्र आवश्यकं मत्वा तत् प्रकाश्यते येन ज्ञातेन मूलग्रन्थस्यैतद्विषयप्रवेशः अञ्जसैव भविष्यति। कारकार्थविचारे-व्यवहाररूपोपायेन भाषाशिक्षणकाले बालकः उत्तममध्यमवृद्धव्यवहाराघारितान्वयव्यतिरेकभावसमीक्षया प्रतिपदिकार्थे-क्रियाजनकतां क्रियाबोधकतां तु अनुमानप्रक्रियया जानाति।

सैव क्रियाजनकता नैयायिकैः प्राचीनवैयाकरणैः क्रियाबोधकता इत्युद्घोषिता (शक्तित्वेन) कारकता वर्तते। केवलं क्रियाजनकतादिज्ञानेन बालकस्य मनः भाषाशिक्षणकाले तथा न सन्तुष्यति यथा बालकेन कारकार्थरूपे ज्ञातया शक्त्या (कारकार्थत्वेन) तुष्यति। अत एव नागेशः एवम् अनुमितायाः जनकतायाः शक्तिरूपत्वं संसाध्य ततः शक्तिवशात् एव स प्रातिपदिकार्थः क्रियां जनयति इति घोषयति। इत्थं तत्र क्रियाजनकता उपपद्यते संगच्छते च। एतत्सर्वं विविच्य नागेशः शक्तिरेव कारकार्थः इति प्रतिष्ठापयति। भाष्यसिद्धान्तश्च नागेशं समर्थयति।

विभक्तिभेदानामुपपत्तिः यथा स्वीकृतेन शक्तिरूपकारकार्थेन भवति न तथा केवलं क्रियाजनकतादिज्ञानमात्रेण। शक्तिदृष्ट्या कदाचित् घटपदार्थः क्रियाधारः भवति आधाररूपेण अनुभूयमानत्वादेव प्रातिपदिके घटे सप्तमी विभक्तिः घटे निधेहि इति वाक्ये अनुशासनेन क्रियते। सा एव शक्तिः, घटनिष्ठा घटपदनिष्ठाच, कदाचित् घटरूपमर्थ साधनंक्रियायाः माध्यमं सिद्धयति येन घटेन जलमाहर इति वाक्यं संगच्छते। एवं च विभक्तिभेदो पपादने यादृक् सारल्यं शक्तिरूपकारकार्थस्वीकृत्या भवति न तथा क्रियाजनकता-क्रियान्वयित्वरूपकारकार्थस्वीकारेण भवति इति फलितम्। वैयाकरणपरंपरानुमोदितम् इदमेव फलितम् साधयितुं नागेशस्य प्रयत्नः अस्मिन् प्रकरणे दृश्यते।

एतन्निरूपणे महत् पाटवं दर्शितं नागेशेन। जिज्ञासुभिः अत्रत्यः अंशः लघुमंजूषातः अवश्यं द्रष्टव्यः।

संबोधनपदार्थस्य विवेचनप्रसंगे अतिमहत्त्वपूर्णम् रोचकं च तत्त्वं नागेशेन उद्घोषितम् यत् वक्ष्यमाणः संबोधनार्थः प्रातिपदिकस्यैव विभक्तिद्योत्यः अर्थः स च कस्यचित् पूर्वसिद्धस्य उद्देश्यावस्थस्य वस्तुनः पदार्थस्य वा (वक्तुरभीष्टः) अभिमुखीभावरूपः एव। एवं श्रोतृगतेन बुद्धिगृहीतेन अभिमुखीभावेन साधनेन वक्ता, श्रोतृकर्तृकां कार्यविशेषविषयिणीं प्रवृत्तिं निवृत्तिं च अभिलषति। शिष्टजनस्वीकृतसंबोधनविभक्त्यन्तपदजन्यबोध-विवेचनेन उपर्युक्तं संबोधनार्थत्वं संगच्छते। विस्तरेण स्वस्थाने विवेचितत्वात् अत्रतद्व्याख्यानतो विरम्यते।

एवमेव पदशक्तिरूपे वाक्यशक्तिस्वरूपे च पतंजलिभर्तृहर्यादिभिः स्वीकृतस्य उक्तशक्तिसाधकस्य कथंचित् शक्तिरूपस्य वा वाच्यवाचक भावसंबन्धस्य शब्दार्थयोर्मध्ये स्थितस्य, मध्यवर्तिवैयाकरणैर्दीक्षितादिभिश्च अपलापः कृतः वर्तते। इयं च वैयाकरणपरंपराया महती हानिः इति समीक्ष्य अस्य सविस्तरं वर्णनम् कृत्वा नागेशेन अस्मिन् प्रकरणे वैयाकरणाभिमतशक्तेः परंपरासिद्धम् स्वरूपम् अक्षुण्णं कृतं वर्तते। इत्यस्ति तस्य महान् उपकारः व्याकरणाध्यापकेषु छात्रेषु च।

अयं वाच्यवाचकभावः गौणतया शक्तिः कथ्यते मुख्यतः शक्तिसाधनं वर्तते। भाषाग्रहणकालिकसूक्ष्ममनोदशा(शिशिक्षोः)समीक्षणेन सिद्ध्यति। संबन्धज्ञानपूर्वकम् एव कस्या अपि भाषायाः शिक्षणार्थी व्यवहारदर्शनतदितरैः कैरपि उपायैः पदादिनिष्ठाम् शक्तिं ज्ञात्वा भाषाविद् भवति नान्यथा। अस्य मनोविज्ञानसिद्धस्य संबन्धतत्त्वस्य न केवलं नैयायिकैरेव प्रत्युत वैयाकरणैः (प्राचीनैरपि) उपेक्षा कृता, अतः हर्यादिसम्मतस्य तस्य अस्मिन् प्रसंगे अनिवार्यत्वं दृष्ट्वा नागेशः प्रयतितवान्। इदमस्ति तस्य व्याकरणं प्रति आत्मीयत्वम् तत्र अनेकेषु उपायेपु व्यवहाररूप उपायः सर्वश्रेष्ठः अत एव सः भाषाशिक्षणोपायशिरोमणिः कथ्यते तदनुसारेण प्रत्येकजीवितभाषायाः ज्ञातारौ द्वौ पुरुषौ एकः वक्ता अन्यः च श्रोता परस्परं भाषाप्रयोगं कुरुतः। वक्ता गवानयनरूपस्येष्टकार्यस्य सिद्धये गामानय इत्युच्चारयति-वाक्यपदशक्तिज्ञः श्रोता तत् श्रुत्वा सास्नादिमन्तं पदार्थम् उपस्थापयति। एवमेव अश्वमानय इत्युक्ते सः तं सास्नादिमन्तं पदार्थं नानयति एतत्सर्वं शिशिक्षुः बालकः साव धानेन मनसा पश्यति अन्वयव्यतिरेकसाधनेन अन्ततः सः ज्ञातुं शक्नोति यत् गाम् इति पदस्य कर्मीभूतसास्नादिमान् पदार्थ एव अर्थः एवं च सः पदनिष्ठां

वाक्यनिष्ठां च अर्थविशेषप्रसवित्रीं शक्तिं जानाति। अस्यां शक्तिग्रहणप्रक्रियायाम् इदमपि आयाति यत् मन्ये इदंपदं वाक्यं वा अस्य अर्थस्य जनकम्-एवमत्र अर्थजनकतारूपा नैयायिकोक्ता ईश्वरेच्छारूपा इच्छारूपावा शक्तिस्तु वर्तते एव तथापि अनयोः शद्धार्थयोः मध्ये एतावान् कः संबन्धः यद्वशात् एतादृशी शक्तिः पदादिषु तिष्ठति संबन्धाभावे तु इयं शक्तिः तत्र न संगच्छते यथा वक्तुरनपेक्षिते स्तम्भशब्दे सास्नादिमतः पदार्थस्य बोधनोपयोगिनी शक्तिः नास्ति स्तम्भसास्नादिमत्पदार्थयोः वाचकशब्दयोश्च परस्परम् असंबद्धत्वात्।

एवं शिशिक्षोर्बालस्य बुद्धिः संबन्धापेक्षिणी जायते यस्या अनुभवः श्री पतंजलिना आचार्यहरिणा, पुण्यराजेन, हेलाराजेन अन्यैश्च कृतः, दुर्भाग्यवशात् तस्य परंपरानुमोदितस्य पतंजल्याद्यनुभूतस्य शब्दार्थगतस्य संबन्धस्य चर्चापि दीक्षितेन अन्यैः नैयायिकादिभिः च न कृता, अतएव तैः बालस्य भाषाशिक्षणकालिका इयं जिज्ञासा नोपलक्षिता इति कथयितुं शक्यम्।

नागेशः कथयति-एवमन्वयव्यतिरेकाभ्याम् ज्ञाताम् पदादिनिष्ठां शक्तिम् उपपादयितुम् बालः शब्दार्थगतं संबन्धम् गवेषयति स च संबन्धःवाच्य-वाचकभावरूपः। शब्दो वाचकः अर्थः वाच्यः इति कथयन्सः संबन्धस्य कृते अनिवार्ययोग्यतात्रितयं वर्णयति-प्रसिद्ध-सर्वसंप्रदायगृहीतसंयोगरूपसंबंध पदार्थे एतत्त्रितयं संघटयन् नागेशः वाच्यवाचकभावेऽपि संबन्धत्वयोग्यतासंपादकतत्त्वत्रयव्यवस्थां साधयति अनुपदं सः स्वकथनपोषणाय आचार्यहरेः पंक्तीश्च प्रकटयति। अयं संबन्धः ज्ञातः भूत्वैव स्वाव्यहितोत्तरकाले उक्ताम् व्यवहारदर्शनपुष्टाम् पदादिनिष्ठाम् शक्तिम् समर्थयति न तु अज्ञातः सन्। एतत्संबन्धज्ञानस्य अथ च तदुत्तरं जायमानशक्तिज्ञानस्य च मध्ये अत्यल्पः कालः वर्तते यद्वशात् तादात्म्यभाववशात् इमं संबन्धमेव शक्तिं व्यवहरन्ति वैयाकरणाः। एतत्सर्वम् अतिस्पष्टया विशदीकृतवान् नागेशः यस्य दर्शनम् अस्य प्रबन्धस्य मूलविवेचने द्रष्टव्यम्।

निपातार्थविवेचने नागेशेन किमपि महत्त्वपूर्णम् उद्घोषितम्। तत्सर्वं यथा—वक्तुर्विवक्षितः वाक्यार्थः अनेकैः स्वघटकैः पदार्थैः संपादितः वर्तते। वाक्ये वर्तमानाः निपातसंज्ञकाः शब्दाः पदानि वा कदाचित् क्रियागतं विशेषम् संज्ञागतं विशेषम् बोधयन्तः एवं उभयमेव (क्रियाम् संज्ञाशब्दान् च)

विशेषयन्ति । "न" "वा" "इव" "च" "आ" एतादृशनिपातानाम् अर्थविवेचनप्रसंगे तथा च "उत्कटम्" "संकटम्" "एषां शाब्दबोधप्रसंगे च स्वपूर्ववर्तिनाम् आचार्याणाम् निपातार्थविषयकप्रतिपादितन्यूनतानाम् परिहारपूर्वकम् एतेषामर्थान् शाब्दबोधं च सुस्पष्टतया प्रकाशयति नागेशः ।

निपातार्थविवेचने इदमेकं तथ्यम् नागेशविवरणस्य । द्वितीयं च स्वपूर्ववर्तिवाङ्मयस्थनिपातविशेषाणाम् अर्थविशेषस्य अन्यैरस्पृष्टम् सूक्ष्मं सुस्पष्टं च प्रतिपादनम् । तृतीयं च तथ्यम् इदमेव यत् कतिपयनिपातसंज्ञक शब्दविशेषाणाम् शाब्दबोधप्रकारोद्बोधनम् ।

एतत्तथ्यत्रयसमावेशेन अत्रत्यं नागेशीयं विवेचनम् संस्कृतव्याकरणशास्त्रे उल्लेखनीयं वस्तु वर्तते इति धिया अस्य तथ्यत्रयस्य विशदव्याख्योपेतः समावेशः अस्माभिर्मूलाध्याये कृतः एव । तत एव विस्तरेण ज्ञातव्यम् ।

वैयाकरणपरंपरामनु नागेशभट्टः निपातानामुभयवादस्य पोषकः । अव्ययं विभक्ति० पा० सूत्रे अयं महानुभावः उपसर्गेतरनिपातानाम् उभयस्वभावस्य अर्थात् द्योतकत्वस्य वाचकत्वस्य च प्रतिपादनं कृतवान् । एषाम् "च" "न" "आ" "उत्कटम्" संकटम् अथ च अन्येषामपि निपातानाम् युक्तियुक्तशाब्दबोधप्रकारः अत्यन्तं रम्यः नागेशस्य । एवमेव द्योतकतायाः परिभाषा उदाहरणानि च मूलग्रन्थात् द्रष्टव्यानि यानि एतत्प्रसंगे नागेशवाङ्मये अत्यन्तं स्पृहणीयानि सन्ति ।

एवमेव नैयायिकाः योग्यताज्ञानं शाब्दबोधाय अत्यावश्यकं कारणं स्वीकुर्वन्ति तच्च नागेशदृष्ट्या अस्मद्दृष्ट्या च अत्यन्तम् अनुभवविरुद्धम् इति कृत्वा वैयाकरणैः खण्डनीयं च वर्तते तत् खण्डनम् इतरापेक्षया नागेशेन प्रबलतया युक्तियुक्ततया रोचकतया च कृतं वर्तते ।

नैयायिकाः आकांक्षायोग्यतासन्निधिः इत्येतत्त्रितयं शब्शक्तिज्ञानवतः श्रोतुर्मनसि यं बोधं जनयति स एकः अपूर्वो बोधः शाब्दबोधः । तत्र आकांक्षासन्निधिविषये मौनमालंब्य योग्यताविचारे वयं विमृशामः ।

नैयायिकाः, पदार्थस्य पदार्थान्तरेण सह अन्वयप्रसंगेप्रत्येकस्यापि बाधस्य अभावम् तत्रत्यशाब्दबोधरूपफललाभाय आवश्यकं मन्वते ।

वह्निना सिंचति इत्यत्र करणकारकार्थसंवलितवह्निपदार्थस्य सेचनक्रियया अन्वयकरणे बाधः वर्तते यतः व्यवहारे कदाचिदपि सेचनक्रियायाः

साधनत्वेन वह्निर्नोपयुज्यते एवं व्यवहारानुभवविरुद्धबाधवशात् बाधाभाव रूपयोग्यताया अभावेन वाक्ये नैयायिकाः शाब्दबोधं न स्वीकुर्वन्ति-नागेश-दृष्ट्या इदं नैयायिकाभिप्रेतम् सर्वथा असमीचीनम्। संक्षेपतः शाब्दबोधे प्रामाणिकशाब्दबोधे च नैयायिका आवश्यकम् भेदम् कर्तुम् न प्राभवन्। ते च अप्रामाणिकशाब्दबोधमेव मुख्यं शाब्दबोधं मत्वा अत्र वाक्ये शाब्दबोधाभावम् घोषितवन्तः।

नागेशनये यद्यत्र शाब्दबोधो न भवति तर्हि वाक्यमेतत् श्रुत्वा श्रोता कथं कथयितुं शक्नोति यत् रे मूर्ख कदापि त्वया वह्निकरणकसेको दृष्टः? येनेत्थं ब्रवीषि? वक्तुरनेन प्रश्नेन स्पष्टतया तस्य मनसि एतद्वाक्यश्रवणानन्तरम् बोधस्य उपपत्तिः सिद्ध्यति-सा व्यवहारदृष्ट्या अप्रामाणिकी इत्यन्यदेतत्। अनेन योग्यतायाः शाब्दबोधमात्रं प्रति कारणता खण्डिता भवति। एवमेव वादिप्रतिवादिनोः विरोधिनोर्मध्ये क्रोधादिवशात् यदा एकः अपरस्मै मिथ्यारोपपूर्वकम् गालिप्रदानं करोति तदा तस्य वक्तुः सर्वोऽपि वक्तव्यार्थः यद्यपि सर्वथा मिथ्या अतएव वस्तुतः तस्य अर्थस्य बाधः एवं च बाधाभावरूपयोग्यताया अभावेऽपि श्रोता तस्य ताडनादौ प्रवर्तते-श्रोतुरियं ताडनादिप्रवृत्तिः गालिप्रदानात्मकवाक्यश्रवणोत्तरमेव जाता अतः शाब्दबोधलाभोत्तरमेव योग्यताभावेऽपि शाब्दबोधः। सुबहुयुक्तिभिः नागेशः योग्यताज्ञानं नैयायिकाभितम् शाब्दबोधं प्रति कारणम् इति खण्डयित्वा समन्वय- बुद्ध्या शाब्दबोधस्य द्विधात्वं कथयति। शाब्दबोधः प्रामाणिकः अर्थात् अस्मिन् जगति शाब्दबोधानुकूलव्यवहारोपपतिर्भवति इति।

अपरश्च शाब्दबोधः अप्रामाणिकः। अप्रामाणिकत्वेऽपि बोधः जायते एव यथा वह्निना सिंचति इत्यत्र। एवमेव मिथ्यारोपस्थलीयवाक्यश्रवणोत्तरम् जायमानः ताडनादिप्रवृत्त्युत्पादकश्च बोधः। इमौ द्वौ अपि बोधौ व्यवहारदृष्ट्या वस्तुतः असत्यौ तथापि बोधौतुस्तः एव। तौ च शब्दश्रवणोत्तरम् जायमानौ अतएव शाब्दबोधौ तु वर्तेते एव अन्यथा तयोर्बोधत्वाभावे द्राविडभाषानभिज्ञस्य द्राविडभाषाश्रवणोत्तरम् जायमानमूकतावत् अनयोरपि उक्तयोः वाक्ययोः श्रवणोत्तरम् श्रोतुः सर्वथा बोधाभावे मूकतैव स्यात् (द्राविडभाषोदाहरणप्रसंगे शक्तिज्ञानाभावोऽपि मूकताहेतुः इत्यन्यदेतत्। केवलम् शाब्दबोधाभावे का दशा भवति श्रोतुः इदमेव अत्र द्रविडभाषाया उदाहरणप्रदानस्य तात्पर्यम् इत्येतत् एव प्रासंगिकम्) एवमन्यैश्च तर्कैः नागेशः नैयायिकान् उपदिशति यत्

ते प्रामाणिकस्य व्यवहार्यस्य बोधस्य कृते कामं योग्यतां हेतुं स्वीकुर्युः उक्तोदाहरणदृष्ट्या नैयायिकोक्तः सः हेतुः अयोग्य इति।

एवमेव नैयायिकाः साधुष्वेव शब्देषु संस्कृतभाषाशब्देषु एव शक्तिम् बोधजननसामर्थ्यं स्वीकुर्वन्ति तदितरासु अपभ्रंशादिभाषासु अर्थनिरूपिता बोधकतारूपा शक्तिरेव नास्ति इति ते कथयन्ति। इदमपि वैयाकरणपरंपराविरुद्धत्वात् नागेशेन तर्कविशेषैः खण्डितं वर्तते। अत एव च संस्कृतभाषाव्यवहारिणाम् तदितरभाषाज्ञानाम् स्वस्वभाषया सुचारुतया समानतया व्यवहारसिद्धिर्दृश्यते एव।

ये च संस्कृतं न जानन्ति तेऽपि स्वभाषया अर्थबोधं प्राप्य व्यवहारं कर्तुं समर्था दृश्यन्ते संस्कृतानभिज्ञत्वात् तैः अपभ्रंशशब्दस्थाने संस्कृतशब्दस्मरणेन शक्तिज्ञानं कृत्वा अर्थः बुध्यते इति नैयायिकरीतिः तद्विषये न संगच्छते—अत एव अयमाग्रहः नैयायिकानां दुराग्रह एव। अनेकप्राकृतपद्येषु ध्वन्यर्थस्वीकारः आलंकारिकैः तत्तत्पद्यश्रवणाव्यवहितोत्तरकालमेव जायमानः अनुभूयते येन तेषाम् तेषाम् पद्यस्थानां प्राकृतशब्दानाम् संबन्धिसंस्कृतशब्दस्मरणस्य अवकाश एव नोपपद्यते। एवं विशदतया एतन्मतं खण्डितम्। तैः सह सहानुभूतिदृष्ट्या मूलाध्याये अस्माभिः कारणम् उद्भावितम् यत्-कदाचित् अयं सः समयः आसीत् यदा लोकभाषा संस्कृतमेव आसीत् वैदेशिकानाम् शनैः शनैः अत्र भारते प्रवेशः आरब्धः ते च व्यवहाराय आपणे अन्यत्र च स्वभाषाशब्दप्रयोगं वस्तुक्रयार्थम् कर्तुम् विवशाः ये च उभयभाषाज्ञाः ते, तेषांभाषाम् अजानताम् पुरस्तात् तैः प्रयुक्तभाषाशब्दानां संस्कृते अनुवादं कृत्वा अर्थबोधम् अकारयन्-एवं प्राकृतभाषाभाषिभिः अत्रत्यसंस्कृताभिज्ञैः सह संस्कृतस्मरणेन वैदेशिकानां व्यवहारसिद्धिर्जाता—अस्याः वस्तुस्थितेः कारणात् [illegible] “सा च शक्तिः साधुष्वेव नापभ्रंशेषु” इति सिद्धान्तितवन्तः। [illegible]

तैः स्वकथनस्य पुष्ट्यै स्पष्टं विवरणं न दत्तम् अत एव यथ[illegible]
तस्मिन् रूपे [illegible]

धात्वर्थनिरूपणप्रसंगे [illegible]
धात्वर्थस्वरूपे गौरवदोषं दृष्ट्वा तं प्रा[illegible]
स्थापितवान्। प्राचीनवैयाकरणाः, धात्वर्थः [illegible]
अर्थौ इति स्वीकुर्वन्ति ततः धातुजन्ये अस्मिन् [illegible]

कर्मवाचकक्रियापदसान्निध्ये व्यापारावच्छिन्नफलरूपो धातवर्थः कर्तृवाचकक्रियापदसान्निध्ये तु (सकर्मकधातुस्थले) [illegible] व्यापाररूपो धात्वर्थः बुध्यते। अकर्मकधातुस्थले भाववाच्ये धातोः [illegible] एकत्वसंख्याविशिष्टस्य व्यापारस्य बोधः। कर्तृवाचकक्रियापदस्थले अकर्मकधातुस्थले कर्त्रनुगतव्यापारमात्रस्य फलरहितस्य बोधः इति ज्ञेयम्। इदमुपर्युक्तं विवेचनम् प्राचीनवैयाकरणसम्मतम् परंतु नागेशाय तन्न रोचते।

सः सर्वप्रथमम् अत्र पदार्थद्वयस्य उपस्थितिम् स्वाभिमतधात्वर्थापेक्षया अधिकाम् मत्वा अतएव इदं मतं गौरवदोषग्रस्तं मन्यते। अतः अत्रमते अन्वयकरणस्य क्लेशः वर्तते यः स्वाभिमतधात्वर्थे कदापि न विद्यते। ईदृशकारणवशात् प्राचीनमते स्थितं गौरवदोषं दृष्ट्वा तत्त्यागेन अधोऽङ्कितधात्वर्थस्य स्वीकाराय नागेशस्य प्रयासः विद्यते।

## नागेशसम्मतो धात्वर्थः।

कर्मवाचकक्रियापदस्थले व्यापारावच्छिन्नफलरूपः धात्वर्थः कर्तृवाचकक्रियापदस्थले फलावच्छिन्नव्यापाररूपः धात्वर्थः। उभयत्रापि फलव्यापारयोः पृथग्बोधाभावेन तयोरन्वयव्यवस्थाया उत्पत्तिरेव न भवति तत्र शृङ्खलात्मकम् शक्यतावच्छेदकम् यथोक्तं यद्यपि नागेशमते आकारे गुरु वर्तते तथापि अन्वयकरणरूपविवशतादिसंवलितप्राचीनमतापेक्षया एतत् लघु एव इति विस्तरः मूलाध्याये द्रष्टव्यः।

एवं फलं धात्वर्थः व्यापारस्तु प्रत्ययार्थ इति मतवादिनां मीमांसकानां विरोधे [illegible]

[illegible] कृतवान् इति

[illegible]।

[illegible] सर्वस्य

[illegible]र्थैः अनुकूलसंबन्धसंबद्धैः घटकैः

[illegible] एव अन्यनिरपेक्षस्य वाक्यार्थस्य

[illegible] सकलभाषाप्रयोक्तृणां वक्तृणां

[illegible]क्तिः वाक्यशक्तिः, वाक्यनाम्नि

ते प्रामाणिकस्य व्यवहार्यस्य बोधस्य कृते कामं योग्यतां हेतुं स्वीकुर्युः उक्तोदाहरणदृष्ट्या नैयायिकोक्तः सः हेतुः अयोग्य इति।

एवमेव नैयायिकाः साधुष्वेव शब्देषु संस्कृतभाषाशब्देषु एव शक्तिम् बोधजननसामर्थ्यं स्वीकुर्वन्ति तदितरासु अपभ्रंशादिभाषासु अर्थनिरूपिता बोधकतारूपा शक्तिरेव नास्ति इति ते कथयन्ति। इदमपि वैयाकरणपरंपराविरुद्धत्वात् नागेशेन तर्कविशेषैः खण्डितं वर्तते। अत एव च संस्कृतभाषाव्यवहारिणाम् तदितरभाषाज्ञानाम् स्वस्वभाषया सुचारुतया समानतया व्यवहारसिद्धिर्दृश्यते एव।

ये च संस्कृतं न जानन्ति तेऽपि स्वभाषया अर्थबोधं प्राप्य व्यवहारं कर्तुं समर्था दृश्यन्ते संस्कृतानभिज्ञत्वात् तैः अपभ्रंशशब्दस्थाने संस्कृतशब्दस्मरणेन शक्तिज्ञानं कृत्वा अर्थः बुध्यते इति नैयायिकरीतिः तद्विषये न संगच्छते—अत एव अयमाग्रहः नैयायिकानां दुराग्रह एव। अनेकप्राकृतपद्येषु ध्वन्यर्थस्वीकारः आलंकारिकैः तत्तत्पद्यश्रवणाव्यवहितोत्तरकालमेव जायमानः अनुभूयते येन तेषाम् तेषाम् पद्यस्थानां प्राकृतशब्दानाम् संबन्धिसंस्कृतशब्दस्मरणस्य अवकाश एव नोपपद्यते। एवं विशदतया एतन्मतं खण्डितम्। तैः सह सहानुभूतिदृष्ट्या मूलाध्याये अस्माभिः कारणम् उद्भावितम् यत्-कदाचित् अयं सः समयः आसीत् यदा लोकभाषा संस्कृतमेव आसीत् वैदेशिकानाम् शनैः शनैः अत्र भारते प्रवेशः आरब्धः ते च व्यवहाराय आपणे अन्यत्र च स्वभाषाशब्दप्रयोगं वस्तुक्रयार्थम् कर्तुम् विवशाः ये च उभयभाषाज्ञाः ते, तेषांभाषाम् अजानताम् पुरस्तात् तैः प्रयुक्तभाषाशब्दानां संस्कृते अनुवादं कृत्वा अर्थबोधम् अकारयन्-एवं प्राकृतभाषाभाषिभिः अत्रत्यसंस्कृताभिज्ञैः सह संस्कृतस्मरणेन वैदेशिकानां व्यवहारसिद्धिर्जाता—अस्याः वस्तुस्थितेः कारणात् एव नैयायिकाः "सा च शक्तिः साधुष्वेव नापभ्रंशेषु" इति सिद्धान्तितवन्तः।

तैः स्वकथनस्य पुष्ट्यै स्पष्टं विवरणं न दत्तम् अत एव यथार्थज्ञो नागेशः तस्मिन् रूपे नैयायिकमतम् खण्डितवान्।

धात्वर्थनिरूपणप्रसंगे नागेशः मुख्यतः प्राचीनवैयाकरणाभिमत धात्वर्थस्वरूपे गौरवदोषं दृष्ट्वा तं प्राचीनोक्तं धात्वर्थं प्रति अश्रद्दधानः स्वमतं स्थापितवान्। प्राचीनवैयाकरणाः, धात्वर्थः फलम् व्यापारश्च पृथक् पृथक् द्वौ अर्थौ इति स्वीकुर्वन्ति ततः धातुजन्ये अस्मिन् अर्थद्वये परस्परम् अन्वयः ततः

*कर्मवाचकक्रियापदसान्निध्ये व्यापारावच्छिन्नफलरूपो धात्वर्थः कर्तृवाचकक्रियापदसान्निध्ये तु (सकर्मकधातुस्थले) फलावच्छिन्नव्यापाररूपो धात्वर्थः बुध्यते। अकर्मकधातुस्थले भाववाच्ये धातोः भावमात्रस्य एकत्वसंख्याविशिष्टस्य व्यापारस्य बोधः। कर्तृवाचकक्रियापदस्थले अकर्मकधातुस्थले कर्त्रनुगतव्यापारमात्रस्य फलरहितस्य बोधः इति ज्ञेयम्। इदमुपर्युक्तं विवेचनम् प्राचीनवैयाकरणसम्मतम् परंतु नागेशाय तन्न रोचते।*

*सः सर्वप्रथमम् अत्र पदार्थद्वयस्य उपस्थितिम् स्वाभिमतधात्वर्थापेक्षया अधिकाम् मत्वा अतएव इदं मतं गौरवदोषग्रस्तं मन्यते। अतः अत्रमते अन्वयकरणस्य क्लेशः वर्तते यः स्वाभिमतधात्वर्थे कदापि न विद्यते। ईदृशकारणवशात् प्राचीनमते स्थितं गौरवदोषं दृष्ट्वा तत्त्यागेन अधोऽङ्कितधात्वर्थस्य स्वीकाराय नागेशस्य प्रयासः विद्यते।*

## नागेशसम्मतो धात्वर्थः।

*कर्मवाचकक्रियापदस्थले व्यापारावच्छिन्नफलरूपः धात्वर्थः कर्तृवाचकक्रियापदस्थले फलावच्छिन्नव्यापाररूपः धात्वर्थः। उभयत्रापि फलव्यापारयोः पृथग्बोधाभावेन तयोरन्वयव्यवस्थाया उत्पत्तिरेव न भवति तत्र शृङ्खलात्मकम् शक्यतावच्छेदकम् यथोक्तं यद्यपि नागेशमते आकारे गुरु वर्तते तथापि अन्वयकरणरूपविवशतादिसंवलितप्राचीनमतापेक्षया एतत् लघु एव इति विस्तरः मूलाध्याये द्रष्टव्यः।*

*एवं फलं धात्वर्थः व्यापारस्तु प्रत्ययार्थ इति मतवादिनां मीमांसकानां विरोधे तत्त्वचिन्तमणिकारस्य डा. कपिलदेव द्विवेदिमहाभागस्य च विरोधे नागेशेन सुबहु युक्तियुक्तम् च उक्तम् तत्तुमूलत एव दर्शनीयम् एवं विविच्य नागेशः वैयाकरणपरंपरानुमोदितधात्वर्थस्वरूपरक्षायाः शुभं कर्म कृतवान् इति हेतोरस्मिन् प्रकरणे सः अभिनन्दनीयः वर्तते।*

*वाक्यस्फोटविवेचनप्रसंगे नागेशः सर्वप्रथमम् वक्तुर्विवक्षितस्य अर्थस्य स्वरूपं प्रदर्शितवान्। वक्ता सदैव अनेकपदार्थैः अनुकूलसंबन्धसंबद्धैः घटकैः निर्मितस्य कियार्थघटितस्य स्वपूर्णस्य अत एव अन्यनिरपेक्षस्य वाक्यार्थस्य प्रेषणं श्रोतरि कर्तुम् वाञ्छति—अयं स्वभावः सकलभाषाप्रयोक्तृणां वक्तृणां वर्तते। एवं च उपर्युक्तवाक्यार्थनिरूपितशक्तिः वाक्यशक्तिः, वाक्यनाम्नि ध्वनिसमूहे तिष्ठति।*

*एवं वाक्यशक्तिस्थापने अत्र नागेशेन स्वविरोधिनाम् मुख्यतः नैयायिकानाम्, गौणतः अन्येषां च खण्डनं कृतम्। प्रसंगप्राप्तम् वाक्यखण्डपरिचयमपि दतवान् नागेशः अत्र। कश्चित् वाक्यघटकः अर्थः कर्ता कश्चित् व्यापाररूपः, कश्चित् फलरूपः कश्चित् संख्यारूपः कश्चित् वर्तमानाद्यन्यतमकालरूपः। इत्थं वाक्यार्थस्य खण्डकरणम् वाक्यार्थबोधनप्रयोजनसिद्धये उपायत्वेन स्वीकृतं वैयाकरणैः। एते सर्वे घटकाः संभूय एकस्यैव वाक्यार्थस्य स्वपूर्णस्य अन्यनिरपेक्षस्य सिद्धिंकुर्वन्ति। अनयैव दृष्ट्या एषां घटकानाम् पदपदार्थरूपाणाम् पदशक्तेश्च उपयोगिता स्वयमेव सिद्धा भवति-इति कथयन्नपि नागेशः पदशक्तिम् उपायस्वरूपाम् अत एव गौणीम् वाक्यार्थं मुख्यम् अत एव वाक्यशक्तिम् प्रमुखाम् मन्यते। अत्र विरोधिनां खण्डनरीतिः नागेशस्य मूलग्रन्थे एव द्रष्टव्या। एतत्संबद्धं सुबहु अन्यदपि विचारजातं अवलोकनीयम्।*

## अथ शक्तिविचारः

*अस्मिन् प्रकरणे नागेशाभिमतम् शक्तिस्वरूपं भाष्यकारसम्मतम् आचार्यहरिसम्मतं च वर्तते। मध्ययुगवर्तिभिः दीक्षितप्रभृतिभिः वैयाकरणैः भाष्यकारस्य हरेश्च विचारं सर्वथा विस्मृत्य पदे वाक्ये च व्यवहारदर्शनरूपोपायप्रसंगे बालकेन अनुमिताम् अर्थजनकताम् अर्थबोधकतां वा अधिकृत्य सैव शक्तिरिति उद्घोषितम्।*

*तत्र नागेशः दोषोपन्यासपूर्वकम् व्यवहारदर्शनकाले बालकस्य मनसःबुद्धेश्च दशायाः सूक्ष्ममध्ययनं कृत्वा मतं स्थापयति यत् बालकः एवम् उत्तममध्यमवृद्धव्यवहारानुमोदितपदादिनिष्ठाम् पदार्थादिबोधिकाम् शक्तिम् (पदप्रकृतिप्रत्ययवाक्यनिष्ठाम्) जानात्येव। ततः स वाच्यवाचकयोः शब्दार्थयोर्मध्ये संबन्धं पश्यन्नेव अनुमिताम् बोधकतां बोधजनकतां वा स्वीकरोति न तु संबन्धदर्शनं बिना बालकस्य बुद्धिः ताम् अनुमिताम् जनकतां निःसन्दिग्धं स्वीकरोति इति तत्रत्यं तत्त्वम् नागेशाभिप्रायस्य भाष्यकारहरिसम्मतस्येति। एतत्सर्वं वैशद्येन विविच्य सा च शक्तिः साधुष्विव अपभ्रंशेष्वपि वर्तते इति प्रबलयुक्तिभिः संसाध्य एतद्विषये नैयायिकस्वीकृतिम् (अपभ्रंशेषु शक्तिर्नास्तीति सा च अपभ्रंशशब्दश्रवणोत्तरम् स्मृतसाधुशब्दनिष्ठा एव ज्ञायते इति स्वरूपाम्) खण्डयति नागेशः।*

## कारकविचारे नागेशः

*नागेशः द्रव्यनिष्ठां पदार्थनिष्ठां वा शक्तिम् (क्रियाजननसमर्थाम्) एव कारकं स्वीकरोति। शक्तिशक्तिमतोरभेदः इति न्यायेन वस्तुतः द्रव्यादिनिष्ठापि सा शक्तिः पदे वाक्ये च शक्तिमत्त्वाद् हेतोः वर्तते एव।*

*पदार्थस्थिता विविधक्रियारूपकार्यकारिणी विचित्रा शक्तिः विविधान् व्यवहारदृष्टान् अनुभवान् प्रत्याययति। अत एव तत्तद्द्रव्यबोधकपदादौदृष्टस्य विभक्तिभेदस्य उपपत्तिर्भवति। अनुभवानां वैविध्यात् कदाचित् स एव पदार्थः स्वनिष्ठक्रियाविशेषवशात् स्वजन्यक्रियावशात् कर्मत्वं द्वितीयाविभक्तिं लभते कदाचित् क्रियाजनकत्वस्य स्वनिष्ठात् प्रकारान्तरवशात् स एव पदार्थः अन्या विभक्तीः लभते। अयं भेदः (परस्परविभक्तिभेदः) शक्तिरूपकारकार्थस्वीकारेण सारल्येन व्याख्येयः बुद्धिगम्यश्च भवति अत एव शक्तिरूपकारकार्थस्य उद्घोषकः नागेशः सविशेषम् प्रशंसनीयः इति कृत्वा तन्मतम् एतत्प्रसंगीयम् एतन्निबन्धे अस्मिन् प्रकरणे उपन्यस्तम्। अस्मिन् प्रकरणे नैयायिकोक्तस्य अर्थजनकतारूपस्य बोधकतारूपस्य क्रियाकारकरूपस्य वा कारकार्थस्य खण्डने नागेशस्य युक्तिः प्रबला। शिशिक्षुणा बालकेन जिज्ञासितस्य संबन्धतत्त्वस्य व्यवस्था नैयायिकादीनाम् मते न संभवति अर्थजनकता बोधजनकता वा अनुमिता सती शब्दार्थयोः संबन्धज्ञानाय बालकं प्रेरयति—स च संबन्धः जनकतादिरूपः इति कथनं तु कार्यज्ञानार्थम् प्रवृत्तः पुरुषः यथा कारणमेव कार्यत्वेन उपस्थापयति तथैव वर्तते अत्र नैयायिकोक्त जनकतादौ संबन्धतत्त्वस्य कृते अनिवार्यम् तथ्यत्रयम् नास्ति। इति हेतोरपि जनकता बालकेन अनुमिता संबन्धपदवीं ग्रहीतुम् अक्षमा—संबन्धस्य अपेक्षा च स्वाभाविकी अत एव एतन्न्यूनतावशात् नैयायिकादिमतम् उपेक्षणीयमिति नागेशः प्रतिपादयति।*

## संबोधनार्थकथने नागेशः

*संबोधनार्थकथनप्रसंगे नागेशः सुरम्यं प्रबलयुक्तिपूर्णम् प्राचीनमतस्थितदोषापनोदनपूर्वकम् वक्तव्यं प्रकटयति। तदनुसारेण संबोधनविभक्तिः तत्रैव साधुर्यत्र किमपि द्रव्यं सिद्धावस्थंसत् वक्तुः विधेय विशेषस्य उद्देश्यभूतं स्यात्। अथ च उद्देश्यभूतस्य द्रव्यस्य विनियोगः प्रवर्तनाविषयक्रियायामवश्यं स्यात्। अयं संबोधनार्थः प्रातिपदिकात्*

*प्रातिपदिकार्थत्वेन जायते स च अर्थः विभक्तिद्योत्यः भवति।*

*राजपुत्रस्य कुमारावस्थायां नृपत्वसिद्धेः प्राक् तमुद्दिश्य "राजन् युध्यस्व" इति प्रयोगाभावः। इत्थं नागेशः संबोधनार्थस्य सिद्धावस्थाम् संबोधनविभक्तये अनिवार्यां साधयति। अत एव इन्द्रशत्रुर्वर्धस्व इत्यत्र एतद् वाक्यप्रयोगावसरे इन्द्रस्य शातयितृत्वस्य असिद्धिवशात् सिद्धावस्थाभावात् एव इन्द्रशत्रुशब्दात् संबोधनविभक्तिर्न जायते।*

*संबोधनविभक्तिप्रयोगे संबोध्यकर्तृकप्रवृत्तिनिवृतिज्ञापनमपि फलतः अनुभूयते न केवलम् अर्थविशेषस्य ज्ञापनमात्रम्। एतत्संबद्धं विशदं विवेचनम् मूलतः एव अवगमनीयम्। यत्र केवलं ज्ञापनमेव न तु संबोध्यकर्तृकप्रवृत्तिनिवृत्तिसंवलितं ज्ञापनम् तत्र गौणतया संबोधनविभक्तिः यथा—सक्तून् पिब देवदत्त इत्यत्र वात्सीबन्धुः इत्यत्र भाष्योदाहरणे च वास्तविकसंबोधनविभक्तेरभावः इति स्पष्टीकृतं वर्तते नागेशेन।*

## वाक्यस्फोटः (सारांशः)

*वक्ता सदैव यं पूर्णम् अर्थम् परसंक्रान्तं कर्तुमिच्छति सः वाक्यार्थः एव न तु पदार्थः इति साधयित्वा तदर्थप्रतिपादने वाक्यशक्तेरावश्यकतां द्रढयति नागेशः। भाषाशिक्षणप्रसंगे प्रत्ययादीनामर्थाः पाणिन्याद्युक्ताः एवं पदार्थाश्च ज्ञाताः। तत्तदन्वयमुखेन पर्यवसाने वाक्यार्थमेव घटयन्ति एते पदार्थाः। तेनैव श्रोतुःमनःशान्तिः प्रवृत्तिनिवृत्त्यन्यतरोपपादनं भवति। अन्यदेतत् अयं पूर्णोऽपि अर्थः वाक्यान्तरसापेक्षोऽपि भवति तथापि स्वस्मिन् सः पूर्णः अतः तदर्थे वाक्यशक्तेरावश्यकता सुस्पष्टा। एवं च शक्त्याश्रयवाक्यस्वरूपम् शक्तिस्वरूपं च विरोधिनां नैयायिकादीनां मतखण्डनपूर्वकम् नागेशेन उपन्यस्तम् वर्तते। कखगादिरूपेण रूषितो वर्णध्वनिः वर्णरचितपदध्वनिः पदसमूहस्वरूपध्वनिसमूहरूषितवाक्यध्वनिः विवर्तावस्थः स्फोटः एव।*

*वैयाकरणैः वाक्यार्थस्य अनेके खण्डाः कृता वर्तन्ते यथा कर्ता, वर्तमानाद्यन्यतमः कालः, संख्या, कर्माद्यन्यतमकारकार्थः एवमादि एते खण्डाः सारल्येन वाक्यार्थपरिचयार्थं कल्पन्ते। एवं तेषां परिचयेन तदालिंगितपिण्डीभूतक्रियार्थप्रधानसमूहालंबनरूपवाक्यनिष्ठवाक्यशक्तिबोध्यः अर्थः वाक्यार्थः बालेन ज्ञायते। अस्याः वाक्यशक्तेः विरोधे स्थितानां नैयायिकादीनां खण्डनपुरःसरम् वैयाकरणपरम्परानुमोदित*

*वाक्य-वाक्यशक्ति-वाक्यार्थ-सत्ताविषये अस्मिन्नध्याये नागेशेन सुबहु उक्तम्। तच्च ततः एव मननीयमिति प्रार्थ्यते।*

## अथ निपातार्थविचारः

*एतत्प्रकरणे नागेशः स्वपूर्ववर्तिनाम् आचार्याणां निपातार्थविचारे दृष्टानां न्यूनतानां परिहारं कृतवान्। इत्येकं विशिष्टं तथ्यं प्रकरणेऽस्मिन् नागेशेन विवेचितं वर्तते। द्वितीयं च नागेशाभिमतं तथ्यम् स्वपूर्ववर्तिसाधुशब्दरूप-संस्कृतवाङ्मये स्थितानां निपातविशेषाणाम् अर्थविशेषस्य अन्यैर्विचारकैः अस्पृष्टस्य सूक्ष्मार्थस्य सुस्पष्टतया प्रतिपादनम्। तृतीयं च तथ्यम्-कतिपयनिपातसंज्ञकानाम् शब्दविशेषाणाम् शाब्दबोधप्रकारोद्भावनम् येन तेषां तेषां निपातानामर्थविषये शाश्वतः सन्देहाभावः उपलभ्यते।*

*अत्रायं वैयाकरणः कांश्चित् स्वतन्त्रतया वाचकान् कांश्चित् निपातान् स्पष्टतया द्योतकान् एवं द्विविधानेव मन्यते न तु संभूयार्थवाचकान् सः स्वीकरोति।*

*प्रसंगतः द्योतकतायाः परिभाषां सामान्यां दत्त्वापि "प्रादेशं विलिखति" जपमनुप्रावर्षत् इत्यत्र तस्याः सामान्यरूपेण दत्तायाः द्योतकतापरिभाषायाः संगतिं न दृष्ट्वा सः अस्याः परिभाषायाः परिष्कारं कृत्वा "क्रियाक्षेपकत्वम्" अथवा "संबन्धपरिच्छेदकत्वं" च द्योतकत्वं घोषयति येन उक्तोदाहरणद्वये व्यवस्था भवति। फलतः तस्येयं परिभाषा, पर्यवसायिनी सकललक्ष्यसाधिका च सिद्ध्यति।*

*"च" "न" (अर्वागित्यर्थकः) "आ" उद्गतः इत्यत्र स्थितः "उत्" संकटम् इत्यत्र स्थितः सम् इति एषां निपातानाम् शाब्दबोधप्रकाशनावसरे नागेशेन प्रासंगिकं सुरम्यं विवेचनं कृतम्। तत् अदृष्ट्वा अस्मद्वाचकाः न तिष्ठेयुः इति प्रार्थनापूर्वकम् उक्तार्थस्य निपातार्थविवेचनप्रसंगीयम् पठन्तु इति संदिश्य सारांशमिमं समाप्नोमि।*

## "योग्यताखण्डनम्" अस्य प्रकरणस्य सारांशः

*नैयायिकाः आकांक्षायोग्यतासन्निधिम् शाब्दबोधे कारणं मन्यन्ते। तत्र योग्यतायाः कारणत्वं नागेशदृष्ट्या व्यर्थम्। पदार्थानां परस्परसंबन्धे बाधाभावः एव योग्यता। वह्निना सिंचति इत्यत्र बोधस्तु वह्निकरणकसेचनव्यापारः एवं रूपेण भवति। तत्र व्यवहारे वह्निसेचनपदार्थयोः परस्परान्वयबाधवशात्*

योग्यताया अभावेन शाब्दबोधो न भवतीति नैयायिकः प्रतिपादयति। परंतु एतन्नैयायिकमतम् अनुभवविरुद्धम्। विरोधे कथयितुं शक्यते यत्—यद्यत्र शाब्दबोधो नास्ति तदा एतद् वाक्यं श्रुत्वा पृच्छकः श्रोता कथं वदिष्यति—रे मूर्ख! कदाचिदपि वह्निकरणकसेकः त्वया दृष्टः? एवं चायं प्रश्नः साधयति यत् अत्र श्रोत्रा किंचित् ज्ञातम् एव। तच्च ज्ञानम् व्यवहार्यम् अव्यवहार्यम् वा इत्यन्यदेतत्। एवमेव द्वयोर्विरोधिनोः मध्ये क्रोधपूर्णसंभाषणावसरे प्रतिवादी असत्यमेव दोषारोपणं वादिनि कृत्वा वादिनं निर्भर्त्सयति। तत्र वस्तुतः प्रतिवादिनः उक्तिः असत्या व्यवहारजगति अघटिता तथापि दोषारोपवाक्यानि योग्यतारहितानि अपि वादिनं शाब्दबोधभाजं कुर्वन्त्येव। अत एव सः वादी दोषारोपपूर्वकम् गालिप्रदानादिकम् असत्यम् अव्यवहार्यम् नैयायिकाभिमतयोग्यतारहितम् श्रुत्वापि शाब्दबोधवशादेव उत्तेजितःसन् प्रतिवादिताडने प्रवर्तते।

एवं च तत्रस्थिता परिस्थितिः बाधसत्त्वेऽपि शाब्दबोधसत्तां साधयति। अतः शाब्दबोधे तस्याः बाधाभावरूपायाः योग्यतायाः हेतुत्वं नैव स्वीकार्यम्।

एवं नैयायिकमतं खण्डयित्वापि उदारतावशात् नागेशः कथंचित् नैयायिकपक्षस्य परिमार्जनं करोति। सः कथयति—नैयायिकाः प्रामाणिकाप्रामाणिकयोः शाब्दबोधयोः भेदं न जानन्ति। शाब्दबोधस्तु नैयायिकाभिमतयोग्यताहीनस्थलेष्वपि भवति, परंतु सः अप्रामाणिकः यथा वह्निना सिंचतीत्यादौ। यथा च एष बन्ध्यासुतो यातीत्यादौ। श्लोकमिमं श्रुत्वा हास्योत्पत्तिः बोधं बिना न संभवति—अन्यदेतत् यदयं बोधः अप्रामाणिकः इति।

एवमेव घटं पश्यतीत्यादौ अर्थस्य व्यवहार्यत्वात् प्रामाणिकः शाब्दबोधः। एवं भेदव्यवस्थया नैयायिकमतखण्डनपूर्वकम् सर्वं सिद्ध्यति। इति व्यवस्था अस्मिन् प्रकरणे प्रतिपादिता वर्तते।

## धात्वर्थविचारः

प्रत्येकं वक्तुर्विवक्षिते वाक्ये क्रियार्थस्य प्राधान्यम् स च अर्थः फलस्वरूपः तदनुकूलव्यापारस्वरूपश्च। प्राचीनवैयाकरणाः—फलम् व्यापारश्च क्रियापदघटकधातुरूपस्य अंशस्य अर्थः उभयत्रापि पृथक् पृथक् अर्थौ। धातौ वस्तुतः एकाऽपि वाचकशक्तिः खण्डशः भूत्वा इदम् अर्थद्वयं

*प्रसूते-ततस्तयोरन्वयः ततः कदाचित् कर्तृवाचकक्रियापदसन्निधाने फलानुकूल व्यापाररूपः अर्थः कदाचिच्च कर्मवाचकतिङन्तक्रियापदसन्निधाने व्यापारानुकूलफलं धात्वर्थः अनुभूयते। परंतु नागेशः प्राचीनमते गौरवदोषं साधयति। स्वमते तु नागेशः कदाचित् फलविशेषावच्छिन्नव्यापारः कदाचिच्च व्यापारावच्छिन्नफलम् धात्वर्थः इति स्वीकरोति।*

*प्राचीनमते—शक्तिद्वयस्वीकृतिः शक्तिद्वयोपस्थापित-पदार्थद्वयोपस्थितिकल्पना, तत्र का स्थितिः? कर्तृप्रत्ययसमभिव्याहारः? कर्मप्रत्ययसमभिव्याहारो वा? इति समीक्षणम्, उक्तनिरीक्षणोत्तरम् तत्रस्थितवस्तुस्थित्या अन्यतरविधस्य अन्वयविशेषस्य संपादनम्। इयं व्यवस्था प्राचीनमते नागेशमते तु केवलम् कर्तृप्रत्ययसमभिव्याहारः कर्मप्रत्यपयसमभिव्याहारो वा इति समीक्षा आवश्यकी। तथा च एकैव बोधकशक्तिः धातौ वर्तते इति तथ्यद्वयमेव अपेक्षितं वर्तते। प्राचीनमते उक्तानि चत्वारि तथ्यानि आवश्यकानि इति कृत्वा प्राचीनमते दोषास्पदं गौरवं वर्तते, अतः तन्नादर्तव्यमिति नागेशः।*

*अस्मिन्नध्याये मीमांसकानाम् व्यापारस्य प्रत्ययार्थत्ववादिनाम् खण्डनं कृत्वा वैयाकरणपरंपरानुमोदितपर्यनुयोगरहितधात्वर्थस्य निरूपणं नागेशेन कृतं वर्तते। तत् मूलत एव द्रष्टव्यम्।*

## अथ द्वितीयोऽध्यायः

नागेशः शक्तिपदार्थविचारे भूमिकारूपेण कतिपयान् अर्थान् प्रकाशयति।

तत्र प्रथमं तु इदमेव तथ्यं वर्तते यत् भाषाविशेषानभिज्ञः शिशिक्षुर्बालः यावत् पदादिनिष्ठाम् वृत्तिम् (शक्तिम्) लक्षणाव्यञ्जने वा न परिचिनोति तावत् सः पदार्थादिबोधमनुभवितुं न शक्नोति। अथ च गुड इत्युक्ते गुडशब्दगतवृत्तिग्रहवतः अर्थप्रतीतौ जातायाम् यत् मधुरत्वं गम्यते न तत् शाब्दम् ज्ञानम् प्रत्युत तत् अनुमित्यात्मकं ज्ञानम् इति अवश्यं ध्यातव्यम्। इत्थम् अगृहीतवृत्तिकस्य विस्मृतवृत्तिकस्य तदर्थवाचकपदमजानतः, एवं च घटपदात् ज्ञातार्थस्य आश्रयतया शक्तिग्रहं विनापि उपस्थितस्य आकाशस्य, जनकतया उपस्थितचौत्रादेश्च न बोधः अर्थात् शाब्दबोधो न भवति।

इत्थम् अर्थज्ञानाय जागृतशक्तेः (पदादिनिष्ठायाः) ज्ञानस्य आवश्यकता (उपर्युक्ततथ्य प्रकाशनेन) अर्थप्रतीतौ हेतुभूता इति नागेशस्य दृष्टिः।

शक्तिज्ञानवतः अर्थात् गृहीतवृत्तिकस्य पुंसः जायमाना अर्थप्रतीतिरेव शाब्दबोधः कथ्यते। तस्य अनुमित्यात्मकज्ञानपदे स्थापनम् महती त्रुटिः। इति नागेशस्य स्पष्टः संकेतः।

भाषाशिक्षणोपायेषु प्रमुखम् व्यवहारदर्शनरूपम् उपायम् अश्रित्य जायमानं वाक्यपदप्रकृतिप्रत्ययार्थज्ञानम् यदा भवति तदा शिशिक्षोः बुद्धिः उत्तममध्यमवृद्धयोः व्यवहारम् तदुत्तरम् प्रवृत्तिनिवृत्ती च पश्यन्ती अन्वयव्यतिरेकभावमुखेन तत्तद्वाक्यादौ तत्तदर्थनिरूपिता शक्तिर्वर्तते इति ज्ञातुमारभते।

अस्यां प्रक्रियायाम् शब्दे जनकताम् शिक्षिक्षुणा उक्तरीत्या ज्ञाताम् एव शक्तिं स्वीकुर्वन्तः नैयायिका दोषभाजः इति नागेशमतम्। तत्र जनकताज्ञाने जाते ततः शब्दार्थयोर्मध्ये संबन्धजिज्ञासा भवत्येव यस्याः नैयायिकादिभिः उपेक्षा कृता वर्तते। इदमेव विशदतया इत्थं द्रष्टव्यम्॥

यदा केनापि उपायेन अस्मद्बुद्धौ तथ्यमिदं प्रकाशितं भवति यत् वाक्यपदान्यतरश्रवणानन्तरम् अनेन अर्थविशेषेण सह अस्य शब्दविशेषस्य वाचकत्वेन संबन्धः वर्तते तदा सः अस्माकं बुद्धिविशेषः सामान्यतः शक्तिग्रहः कथ्यते। यतः तदनुसारेण श्रोतुः बुद्धिविशेषः, तां पदनिष्ठाम् वाक्यनिष्ठाम् प्रत्ययादिनिष्ठां वा शक्तिं गृह्णाति यामाश्रित्य अर्थविशेषस्य स्फुरणम् अस्मन्मनसि जायते।

अस्माकमनुभवोऽप्येवमेव वर्तते यत् शक्तिग्रहं विना वयम् कस्यापि वाक्यस्य पदस्य पदांशस्य वा अर्थं बोद्धुं न प्रभवामः। यथा अज्ञातभाषाविषये भवति। अत एव शाब्दबोधरूपप्रमेयोपलब्धये शक्तिग्रहस्य आवश्यकता अनिवार्या सिद्ध्यति।

भाषाविशेषस्य शिक्षार्थी बालकः, भाषाशिक्षणप्रसंगे इमाम् पदादिनिष्ठाम् शक्तिं गृह्णाति इदं तथ्यम् नैयायिकाः प्राचीनवैयाकरणाः इतरे संप्रदायाश्च स्वीकुर्वन्त्येव। परंतु नागेशभट्ट इव वयमपि नैयायिकैः प्राचीनवैयाकरणैः प्रकाशितम् परंतु समीक्षणदृष्ट्या (वक्ष्यमाणया) आक्षेपर्हम् एतत्प्रसंगीयम् शक्तिस्वरूपम् न स्वीकुर्मः। प्रत्युत तत्रस्थितं दोषं दृष्ट्वा अथच तास्मिन् शक्तिस्वरूपे पतंजलिभर्तृहरिसदृशाचार्यमतप्रातिकूल्यं च दृष्ट्वा नागेशपरिष्कृतं तत् शक्तिस्वरूपं प्रस्तोतुकामाः स्मः यत्स्वरूपम् प्राचीनवैयाकरणनैयायिकमतस्थदोषरहितम् अथ च पतंजलि-

भर्तृहरिसदृशवैयाकरणानुमोदितं वर्तते। दीक्षितादिप्राचीनवैयाकरणोत्तरम् विद्यमान: अयं वैयाकरणकेसरी नागेश: यदा दीक्षिताद्युक्तशक्तिस्वरूपम् पतंजल्यादिवैयाकरणमत-प्रतिगामि दृष्टवान् अथ च प्राचीनमतसमीक्षणेन पक्षपातरहितबुद्ध्या भर्तृहरिपतंजलिमतं समीचीनम् युक्तिसिद्धम् अनुभवसिद्धं च दृष्टवान् तदा स: वैयाकरणपरंपरानुमोदितनिर्दुष्टशक्तिस्वरूपप्रकाशने उन्मुखः बद्धपरिकरश्चाभवत् संभवतः एतादृशस्य वक्ष्यमाणस्वरूपस्य प्रकाशनम् सः स्वीयं सांस्कृतिकम् नैतिकम् कर्तव्यम् बुद्धवान्।

एवं च एतन्मतपरिष्कारकार्यं नागेशस्य कृते अवसरप्राप्तं चासीदिति वक्तुं शक्यते।

## शक्तिग्रहकाले बालकेन अनुभूयमानस्य संबन्धज्ञानस्य (शब्दार्थगतस्य) वास्तविकं स्वरूपम्

क: शब्द: कम् अर्थम् बोधयति इति ज्ञानाय अर्थात् अज्ञातभाषाज्ञानाय अनेके उपाया: विद्यन्ते यथा भाषाया: व्याकरणम्, उपमानप्रयोग:, कोशा:, आप्तवाक्यानि तथा व्यवहारदर्शनं च। भाषाविशेषानभिज्ञ: पुरुष:, (बालक:) तत्तद्भाषाविशेषस्य प्रयोक्तृणाम् मध्येस्थित: तेषां शब्दप्रयोगान् तदाधारितप्रवृत्तिनिवृत्त्यात्मकान् व्यवहारान् प्रत्यहं दर्शं दर्शम् तत्तद्भाषाया: सुविज्ञो भवति। भाषाशिक्षार्थी बालक: (भाषाविशेषानभिज्ञ: कस्मिन्नपि वयसि स्थित: यावत् भाषाविशेषेण सह परिचितो न भवति तावत् तद्भाषाज्ञानदृष्ट्या स: शिक्षार्थी बालक: कथ्यते) तटस्थ: सन् अपि वक्त्रा उच्चारितान् शब्दान् शृणोति तदुत्तरमेव जायमानाम् श्रोतृकर्तृकाम् कार्यविशेषे प्रवृत्तिं निवृत्तिं च पश्यत्येव। एवं पश्यन् बाल: अनेन एभि: उक्तै: उपायै: अन्यतमेन वा उपायेन क: शब्द: कम् अर्थं बोधयति इति प्रश्नस्य उत्तरस्वरूपम् भाषाज्ञानम् लब्धुं समर्थो भवति। भाषाज्ञानस्य प्रक्रिया यथावसरं व्याख्यास्यते एव। इत्थम् भाषाज्ञानाय नैते समुदिता एव व्याकरणाद्युपाया: कल्पन्ते अपितु पृथक् पृथक् ते उपाया: एतत्कार्याय सफला: सन्ति। एवं च एषु अन्यतम: अपि उपाय: भाषाबोधं कारयतीति तथ्यम्। एषु उपायेषु सफलतमत्वाच्च व्यवहारदर्शनरूप: उपाय: एव मुख्यत: भाषाज्ञानकारियतृत्वेन विद्वद्भिरभिनन्दित: अत एव स: शक्तिग्राहकशिरोमणि: कथ्यते। प्रसंगवशात् तमेव उपायमधिकृत्य शक्तिग्रह-विषयिणी चर्चा अस्माभि: अध: उल्लिख्यते।

उक्तरीत्या तत्तद्भाषानभिज्ञः बालकः पुरुषो वा तत्तद्भाषाप्रयोक्तृणां मध्ये स्थितः सन् तेषां शब्दप्रयोगान् तदाधारितप्रवृत्तिनिवृत्त्यात्मकान् व्यवहारान् प्रत्यहं पश्यति। तद्दर्शनेन क्रमशः सः तत्तद्भाषाभिज्ञः भवति। अस्मिन् व्यवहारदर्शनप्रसंगे शब्दान्श्रुत्वा तदुत्तरम् मध्यमवृद्धेन कृतां प्रवृत्तिंनिवृत्तिं वा दृष्ट्वा तटस्थः सन्नपि वाक्यपदान्यतररूपेण उच्चारितान् शब्दान् अनेकशः शृणोति तदुत्तरमेव तत्तद्वाक्यपदार्थज्ञानाधारितक्रियाकलापांश्च श्रोत्रादिकृतान् अपि पश्यति तदा बालस्य बुद्धिः, अन्वयव्यतिरेकभावोन्मुखी संपद्यते। अनेन शतशः दृष्टेनव्यवहारेण (अन्वयव्यतिरेकभावावगाहनात् प्राप्तेन निर्णयेन हेतुना) स बालः इमं निष्कर्षमधिगच्छति यत् यदा यदा गामानय इत्युच्चरितम् तदा तदा अस्य सास्नादिमतः पशोः आनयनादि दृश्यते। तत्स्थाने यदा अश्वमानय इतुच्यते तदा सास्नादिमन्तं पशुमधिकृत्य न कोऽपि प्रवृत्तिनिवृत्त्यात्मकः व्यवहारः। एवं च व्यवहार एव अन्वयव्यतिरेकभावोन्मेषप्रक्रियया बालकस्य मनसिइदं स्थापयति यत् गाम् इति पदम् सास्नादिमदर्थनिरूपितां शक्तिं धारयति। अतः भविष्ये यदा यदा सास्नादिमदर्थबोधनेच्छा भविष्यति मन्मनसि तदा तदा "गाम्" (एवं विभक्त्यन्तरप्रयोगोऽपि) इति प्रयोगः कर्तव्य इति।

इत्थं व्यवहाराधारितेन अन्वयव्यतिरेकभावेन तटस्थो बालकः, तत्तत्पदादिनिष्ठायाः तत्तदर्थनिरूपणसमर्थायाः शक्तेः ग्रहणं करोति। तेनैव सह स बालकः शब्दार्थयोः परस्परम् कार्यकारणभावस्य जन्यजनकभावस्य शब्दगतबोधजननसामर्थ्यस्य च अनुमानं करोति। अत्र कारणम् शब्दः कार्यं च अर्थः। अनुमानेन च सः कार्यकारणादिज्ञानं लभते। शब्दार्थोभयगतस्य कार्यकारणतादिज्ञानस्य उत्पत्त्यनन्तरमेव सः चिन्तयति—अस्मिन् ध्वनिरूपे (ध्वनिभिः) व्यज्यमाने वाक्यपदान्यतरस्फोटरूपे शब्दे अस्मिन् प्रवृत्तिनिवृत्तिसाधनभूते अर्थे च अवश्यं कोऽपि संबन्धो वर्तेत यद्वशात् पदादिषु (पदेषु वाक्येषु च) तत्तदर्थबोधनशक्तिः अथ च उक्तश्च (अनुमितः) कार्यकारणभावः जन्यजनकभावश्च उपपद्येत।

स संबन्धः कीदृशः? इति ज्ञातुम् प्रबला इच्छा अस्मिन्नवसरे (शक्ति-कार्यकारणभाव-जन्यजनकभावेषु ज्ञातेषु समीक्षितेषु च) बालकस्य मनसि उत्पद्यते। इदं मनोविज्ञानसिद्धं तथ्यम् अनुभवितुम् आचार्यपतंजलिः आचार्यो हरिः तदनुयायिनश्च समर्था आसन्। अत एव तैः बालकस्य इमां जिज्ञासां शमयितुम् बहु उक्तम्। न तथा दीक्षितादिभिः प्राचीनैर्वैयाकरणै-

रुक्तम्। यच्च वचनम् दीक्षितयुगस्य प्रतिनिधिविचाराणां कृते अत्यावश्यकमासीत्। इति विचार्य विशुद्धव्याकरणशास्त्रीय सिद्धान्तवैभवप्रकाशनतत्परः नागेशः स्वीयं कर्तव्यं मत्वा दीक्षितादिमतस्य समीक्षाम् अथ च पतंजल्याद्युक्तमनोविज्ञानसम्मतस्य आशयस्य स्पष्टताम् विशदया भाषया उपन्यस्तवान् (स्वमञ्जूषाग्रन्थे)।

एवं व्यवहारदर्शनेन अन्वयव्यतिरेकभावसहयोगेन बालकः, "गाम्" इत्यादिपदेषु तत्तदर्थबोधनसमर्थाम् योग्यताम्: शक्तिम्: अनुमिनोति। तेनैवसह शब्देषु पदादिरूपेषु कारणताम् बोध्यार्थेषु कार्यतामपि सः बालकः (उक्तप्रक्रियायाम् भाषाग्रहणशक्तिग्रहणकाले) अनुमिनोत्येव। सा च शब्दनिष्ठा कारणता एव बालकस्य इतरेषां च तत्त्च्छब्दबोध्यार्थदृष्ट्या न्यूनाधिकरूपेण नैयायिकैः प्राचीनवैयाकरणैः शक्तिः स्वीकृता।

परंतु एतद् भाष्यकार-भर्तृहरि-नागेशविरुद्धम्। इत्थं शब्दस्य अर्थप्रसवं प्रति ज्ञातायाः कारणतायाः अनुमानोत्तरम् बालकः शब्दार्थयोर्मध्ये संबन्धं ज्ञातुमिच्छति यद्वशात् ईदृशी कारणता शब्देषु उपपद्यते। इयं बालकस्य मनःप्रवृत्तिः एभिः दीक्षितादिभिः उपेक्षिता न अवबुद्धा वा।

सा एव संबन्धजिज्ञासा शिशिक्षोर्मनसि वर्तते इति एतत्प्रक्रियान्तर्गतमनोविज्ञानसिद्धम्।

एवं मनोविज्ञानप्रमाणितायाः बालकस्य जिज्ञासायाः कारणादेव तेन बालकेन व्यवहारकाले अनुमिता अर्थप्रसवजनकतारूपा कारणता शब्दार्थोभयगतं संबन्धम् अपेक्षते।

अस्य तथ्यस्य अपलापेन दीक्षितादीनां महत्त्वम् ह्रसति फलतः तेषां मतं एतद्दृष्ट्या हीनमिव दृश्यते यत्र स्वभावसिद्धस्य बालकापेक्षितस्य संबन्धस्य चर्चैव नास्ति।

उक्तरीत्या बालकस्य मनसि जिज्ञासितस्य शब्दार्थसंबन्धस्य यादृक् रूपम् व्यवहारदर्शनानुमित—पदनिष्ठ (अर्थबोधकार्यस्य) कारणतां समाधातुं शक्नोति तदेव रूपम् तादृगेवरूपम् प्रकाशनीयं भवति इति उच्यते अस्य प्रकरणस्य मर्मज्ञैः समीक्षकैः। तदेव संबन्धस्वरूपम् उक्तरीत्या बालकस्य मनसि स्थितानाम् अनुमितशक्तिशब्दार्थगतकार्यकारणभाव-जन्यजनकभावानाम् सुष्ठुतया उपपत्तिं कर्तुं शक्नोति। एतादृशस्यैव संबन्धस्य ज्ञानेन बालकः इदं

स्वीकर्तुं विवशः भवति यत् शब्दार्थनिष्ठः अयमेव संबन्धः ज्ञातः सन् शब्दविशेषनिष्ठाम् अर्थविशेषरूपिताम् शक्तिम् उपपादयन् मन्मनसि (श्रोतुः बालकस्य मनसि) ईश्वरेच्छादिरूपायाः इच्छारूपायाः बोधकतारूपायाः वा पदादिनिष्ठशक्तेः परिचयं दातुं समर्थः विद्यते इति ।

एवं संबन्धज्ञानम् तदुत्तरम् पूर्वानुमितत्वेऽपि पोषितम् (संबधज्ञानेन) शक्तिज्ञानम् च परस्परम् अत्यन्तं संश्लिष्टम् वर्तते । अत एव अनयोर्मध्ये घटमानम् अपि पौवापर्यं सामान्यतः नानुभूयते । सूक्ष्मदर्शिनस्तु इदं शक्तिज्ञान-संबन्धज्ञानयोः पौवापर्यं कालभेदकृतं जानन्त्येव । अनयैव वस्तुस्थित्या संबन्धज्ञान-शक्तिज्ञानयोः एवमेव संबन्धपदार्थशक्तिपदार्थयोः अभेदोऽपि अनुभूयते । अयमनुभूयमानः अभेदः (शब्दार्थयोः) विचारकैः शब्दार्थ-योस्तादात्म्यानुभवरूपेण व्याख्यातः । वस्तुतः परस्परं भिन्नौ अपि पदार्थौ केनापि कारणेन अभिन्नौ प्रतीयेते तदा तयोर्मध्ये अभेदानुभवः भवति स एव तादात्म्यानुभवः कथ्यते । अयमेव शब्दार्थस्वभावः । यत् वस्तुतः भिन्नौ अपि तौ अभेदेन व्यवह्रियेते । एवम् उक्तः तादात्म्यानुभवः नागेशसमर्थितः वर्तते ।

यथा अर्थं संकेत्य अयं घटः इति व्यवहारः भवति । शब्दार्थयोः तादात्म्यवशादेव । एवमेव शक्युत्थापकसंबन्धार्थस्य तदनुमोदितस्य अनुमित्या ज्ञातस्य विविधरूपात्मकशक्तिपदार्थस्य च स्वभाव एव तयोः (संबन्धज्ञान-शक्तिग्रहयोः) अभेदम् उपपादयति ।

भाषाशिक्षण (शक्तिग्रह) प्रक्रियादृष्ट्या प्रथमं व्यवहारदर्शनम्, ततः अन्वयव्यतिरेकभावेन शब्दार्थयोः अनुमितस्य जन्यजनकभावस्य कार्यकारणभावस्य च ज्ञानम्, ततः जिज्ञासावशात् सम्बन्धज्ञानम् इति क्रमः ।

अनया दृष्ट्या अनुमितशक्तिज्ञानस्य उपपादकं भवति संबन्धज्ञानम् संबन्धज्ञानोत्तरमेव शक्तिज्ञानं संगच्छते । (शक्त्युत्पत्तिर्वा) अत एव कालकृतभेदवशात् तयोर्भेदेसत्यपि (संबन्धज्ञान-शक्त्योरिति ध्येयम्) तयोर्मध्ये एतावान् स्वल्पतमः कालः उपयुज्यते यत्स्वल्पतावशात् उभयस्थितो भेदः अलक्षितो भवति । उत्पत्तौ तयोः पौर्वापर्यं न लक्ष्यते-इदं व्यवहारदृष्ट्या । सिद्धान्तदृष्ट्या तु संबन्ध ज्ञान-शक्तिग्रहयोः भेदः अस्त्येव । परंतु अयं प्रसंगः भाषाशिक्षणसमीक्षायाः वर्तते । भाषाग्रहणकाले विद्यमानोऽपि अयं भेदः बालकेन न गृह्यते अत एव आचार्यो हरिःशक्तीनामप्यसौ शक्तिः इत्याद्युद्घोषेण

संबन्धमेव शक्तिम् तयोर्भेदावगमविरहं च समर्थयते। अत एव च तदनुयायिनः वैयाकरणाः वाच्यवाचकभावरूपम् संबन्धमेव शक्तिं स्वीकुर्वन्ति।

अथ यावत् उल्लिखिता भाषाग्रहणप्रक्रिया, वाक्यस्फोट-पदस्फोटान्यतररूपायाः भाषायाः ग्रहणकाले बालकेन अनुभूयमाना मनोविज्ञानशास्त्रप्रमाणिता इति वक्तुं सुवचम्।

पाठकानामुत्सुकता अस्य संबन्धस्य नामज्ञानार्थम् स्वाभाविकी एव इति विचार्य विद्वभिर्वैयाकरणैः अस्य संबन्धस्य नाम वाच्यवाचकभाव इति निर्णीतं वर्तते।

अयमेव वाच्यवाचकभावः उपर्युक्तरीत्या शक्त्या सह अभेदबुद्धिवशात् शक्तिरेव कथ्यते। आचार्यहरिस्तु इमम्संबन्धम् शक्तीनामप्यसौ शक्तिः इत्युक्त्या शक्तिमेव अभिदधाति।

अस्य विरोधे नैयायिकाः उक्तप्रक्रियायाम् बालकस्य समाधानार्थम् ईश्वरेच्छाम् इच्छाम् बोधजनकताम् वा संबन्धं वक्तुं विवशाः भविष्यन्ति कुतोऽयं शब्दः इममेवार्थं प्रतिपादयति कस्माच्च? प्रतिपादयति इति शिशिक्षोर्जिज्ञासायाः तेषां नैयायिकादीनां समीपे न किमपि समाधानम् तत्तदीश्वरेच्छादिकं विहाय। ततश्च अनेके दोषाः समापतन्ति येषां चर्चा अचिरादेव नैयायिकादिपक्षखण्डनावसरे भविष्यति। अत एव केवलं वाच्यवाचकभावसंबन्धरूपशक्तिस्वीकारे एव इयम् शिशिक्षोर्मनसः जिज्ञासा समाधानयोग्या सुव्याख्याता च भवति नान्यथा। इति सिद्ध्यति।

उक्तरीत्या बालकः व्यवहारदर्शनेन अर्थविशेषं प्रति शब्दविशेषस्य कारणतां मनुते। सहैव शब्दे कीदृशीकारणता? (अर्थजननसामर्थ्यम्) (संबन्धं विना) शब्दार्थयोः परस्परम् कमपि संबन्धं विना न घटतेसा। अतः कः सः संबन्धः? इत्यपि सः बालकः अनुसंधत्ते। फलतः वाच्यवाचकभावरूपम् संबन्धमेव अनयोर्मध्ये निश्चित्य सः सारल्येन शब्दे अर्थबोधनसामर्थ्यम् शक्तिं वा बोद्धुं समर्थो भवति। एवं च शब्दार्थयोः स्थितस्य अस्य वाच्यवाचकरूपसंबन्धस्य ज्ञानमेव भाषाग्रहणप्रकियायाम्, अनुमितशब्दनिष्ठ-शक्तिं समर्थयते।

एतज्ज्ञानं विना अनुमिता अपि बोधजननसमर्था ईश्वरेच्छारूपा इच्छारूपा बोधकतारूपा वा शब्दनिष्ठा शक्तिः बालकस्य मनस्तृप्त्यै

जिज्ञासाशान्त्यै निराकांक्षबोधाय वा न प्रभवति।

यावत् शब्दार्थयोः परस्परं संबन्धं नावगाहते शिशिक्षोर्बुद्धिः तावत् अनुमितायाः अपि नैयायिकाद्युक्तायाः ईश्वरेच्छादिरूपायाः शक्तेः सत्तामाधिकृत्य बालकस्य मनसि सन्देहः तिष्ठत्येव। असंबद्धपदार्थेषु परस्परं कार्यकारणभावोनास्ति इति स्वाभाविकानुभवस्य सिद्धत्वात् तस्य मनसि एतत्सर्वं पूर्वपंक्तिषु उल्लिखितमेव वर्तते। इत्यं शिशिक्षोर्बुद्धिः शब्दार्थयोः संबन्धस्य जिज्ञासायाम् धावति अतः सः प्रत्येकशास्त्रज्ञैः उपस्थापनीयः एव एतद्विचारप्रसंगे।

यदि नैयायिकादिभिः ईश्वरेच्छादिरूपशक्तिवादिभिः संबन्घपदे ईश्वरेच्छादिपदार्थाः स्थाप्यन्ते तर्हि अन्यदोषापेक्षया महान् दोषः तत्र वर्तते यतः ते ईश्वरेच्छादयः पदार्थाः संबन्धतत्त्वस्य कृते अनिवार्यम् आवश्यकम् योग्यतात्रितयं न धारयन्ति। अतस्ते ईश्वरेच्छादिरूपाः पदार्थाः संबन्धपदवीम् आरोढुमेव न शक्नुवन्ति। संबन्धत्वं विना ते ईश्वरेच्छादयः पदार्थाः बालकस्य समाधानं कर्तुं न शक्नुवन्ति अतः तत्स्थाने वाच्यवाचकभावरूपस्य संबन्धस्य स्वीकाररूपः पन्था एव ज्यायान् इति आचार्यहरेः परामर्शः वर्तते।

कोऽपि पदार्थः तदैव संबन्धपदवीमारोढुं शक्नोति यदा स अर्थः अधोङ्कितयोग्यतात्रयम् धारयति।

१. संबन्धतत्वस्य कृते द्विष्ठत्वमनिवार्यम्

२. संबन्धः, संबन्धिभ्याम् उभाभ्यामपि सर्वथा स्वरूपतः भिन्नः।

३. आश्रयतया वृत्तिनियामकः

संबन्धपदार्थस्य सर्वस्वीकृतम् उदाहरणम् वर्तते संयोगरूपम्। संयोगशब्दात् यः वाच्यार्थः अस्मद्बुद्धौ तिष्ठति स एव संबन्धपदार्थः अथ वयम् अस्य संयोगाख्यस्य संबद्धपदार्थस्य अन्तःपाति योग्यतात्रितयम् (अधुनैवोक्तम्) अस्मिन् वर्तते न वा इति परीक्षामहे।

कांचनमणिसंयोगः, आवयोः संयोगः इत्यादिपु उदाहरणेषु स्थितः संयोगरूपः संबन्धः स्पष्टतः पदार्थद्वयनिष्ठः काञ्चननिष्ठः मणिनिष्ठश्च, एवमेव मन्निष्ठः त्वन्निष्ठश्चेति।

एवम् संयोगः प्रथमां कक्षामुत्तीर्य द्वितीयकक्षामवगाहते।

संबन्धस्य द्वितीया विशेषता-संबन्धस्य संबन्धिभ्यां भिन्नत्वम् अयं च बुद्धिस्थः संयोगपदार्थः अवश्यमेव कांचनात् मणेश्च सर्वथा भिन्नः यद्यपि

तदुभयनिष्ठः एवमादिविविधोदाहरणैः संबन्धपदार्थस्य संबन्धिभ्यां भिन्नत्वम् अभिमतं वर्तते ।

तृतीया विशेषता आश्रयतया वृत्तिनियामकत्वरूपा ।

संयोगार्थः, आश्रयम् उभौ अपि घटकौ स्पृशतिइत्यनुवसिद्धाभवति आश्रयतया वृत्तिनियामकता । यथा संयोगवत् कांचनम् संयोगवान् मणिः इत्यत्र संयोगरूपः संबन्धः, आश्रयतया संबन्धी कांचनरूपोऽर्थः । एवमेव संयोगवान् मणिः इत्यत्र विशेष्यत्वेन अनुभूते मणौ अर्थे संयोगस्य संबन्धार्थस्य आश्रयत्वं सुलभम् अतएव सः मणिः संयोगवान् ।

एवं संयोगरूपे संबन्धेऽर्थे तृतीयापि योग्यता विद्यते येन संयोगार्थः निर्विवादम् संबन्धरूपः अर्थः इति सर्वैरपि अनुभूयते ।

## नैयायिकमतखण्डनम्

शक्तित्वेन नैयायिकसम्मतेश्वरेच्छायाः स्वीकारे नवीननैयायिकसम्मतेच्छामात्रस्वीकारे दीक्षितादिवैयाकरणाभिमत बोधकतास्वीकारे मीमांसकमते बोधजनकतास्वीकारे तासु ईश्वरेच्छादिषु शक्तित्वेन गृहीतासु शक्तिषु अनिवार्यम् संबन्धपदार्थस्य प्राणभूतम् तथ्यत्रयं न घटते । अतोऽपि तत्तद्रूपाः शक्तयः न संबधाः, बालकस्तु संबन्धमेव अपेक्षते उक्तभाषाशिक्षणप्रसंगे । शब्दे अर्थजननसामर्थ्यं ज्ञात्वापि सः शिशिक्षुः तयोः शब्दार्थयोः संबन्धज्ञानम् अपेक्षते एव । तज्ज्ञानं (संबन्धज्ञानं) विना अनुमितमपि अर्थबोधजननसामर्थ्यम् तस्य जिज्ञासां शमयितुम् नालम् । इत्यनुभवः भाषाग्रहणकालिकमनोदशापर्यालोचकानाम् नागेशसदृशवैयाकरणानाम् । ईश्वरेच्छादीनां स्थाने वाच्यवाचकभावसंबन्धं तु स शिशिक्षुर्बालकः सद्यः ग्रहीष्यति । अर्थो वाच्यः शब्दः वाचकः अयमेव संबन्धः शब्दार्थयोः । एकः वाचकत्वेन अर्थसंबद्धः अपरः वाच्यत्वेन संबन्धेन शब्दसंबद्धः इति तत्तात्पर्यम् । एवम् शब्दार्थौ परस्परं संबन्धिनौ । अयमेव संबन्धः हरिणा उपकार्योपकारकभावरूपः घोषितः । तत्र उपकार्यः अर्थः उपकारकः शब्दः अनयोरेव संबन्धः । इति तस्याशयः ।

एवं ज्ञात्वा बालकः सद्य एव अनुभवति ओम् अयमस्ति शब्दार्थयोः संबन्धः स एव बोधजननसामर्थ्यम् ईश्वरेच्छारूपां शक्तिम् इच्छारूपां वा शक्तिम् समर्थयते उपपादयति च इति तस्य बालस्य मनसि विश्वासः जायते ।

तमेव संबन्धम् शक्त्युत्थापकं मत्वा तस्य सविशेषम् महत्त्वं वर्णयति आचार्यो हरिः जिज्ञासुभिः सहेलाराजात् वाक्यपदीयात् तत्सर्वं द्रष्टव्यम्।

एवं शक्त्युत्थापकसंबन्धः तत्समर्थिता पदनिष्ठा शक्तिः परस्परं भिन्नौ पदार्थौ तथापि तौ कारणविशेषवशात् अभिन्नौ इव तादात्म्यभावापन्नौ एकत्वेन अभेदत्वेन अनुभूयेते।

एवं च वाच्यवाचकभावः शक्तिः इति व्यवह्रियते वैयाकरणसमाजेषु इति नागेशस्य निजः अभिप्रायः।

## नैयायिकानां स्वमतपोषणाय कोटिः

वाच्यवाचकभावरूपतादृशसंबन्धानुभवसत्तायाः अस्वीकारपूर्वकम् नैयायिकाः वक्तुं शक्नुवन्ति यत् ईश्वरेच्छारूपः इच्छारूपः सबन्धः (बालकापेक्षितः) स्वीकृतः अपि न दोषाय। (यद्यपि वैयाकरणमतेन पूर्वपंक्तिषु आचार्यहरिदृष्टिप्रकाशनेन ईश्वेरेच्छारूपसंबन्धस्वीकारे इच्छारूपसंबन्धस्वीकारे च युक्तिविरोधः दर्शितः एव तथापि नैयायिकादीनामुत्तरप्रदानाय अस्मन्मतस्य वैशद्यसिद्धये च पुनरालोच्यते तत् नैयायिकखण्डनम्।)

व्यवहारदर्शनेन अनुमानप्रक्रियया ईश्वरेच्छा इच्छा वा बालकबुद्धौ अर्थविशेषबोधजननस्य कारणम् अनुमीयते।

एवम् अनुमानेन पदे ईश्वरेच्छाया इच्छाया वा कारणता ज्ञाता तिष्ठति-यस्याः स्वरूपम् ईदृशम्—ईश्वरस्यइच्छा वर्तते यदयं शब्दः एतमर्थं वक्तुं समर्थः अतएव अस्मिन् पदे ईश्वरेच्छा इच्छा वा वर्तते। एवं च ईश्वरेच्छावशात् इच्छावशात् वा शब्दस्य अर्थं प्रति कारणता एव ज्ञायते न संबन्धः ज्ञायते। अनेन प्रकारेण बालकस्य मनसि ईश्वरेच्छाकृतः इच्छाकृतः वा शब्दार्थगतः कार्यकारणभावः जन्यजनकभावः एव अनुभूतिविषयो भवति। बालकस्य मनसि उपस्थितस्य शब्दार्थगतकार्यकारणभावस्य उपपत्ति (संबन्धाश्रित) ज्ञानार्थम् यस्य संबन्धस्य अपेक्षा वर्तते तस्यैव संबन्धस्य स्थाने कारणताश्रयीभूतायाः ईश्वरेच्छाया इच्छाया वा स्थापनं सर्वथा अनुचितम्।

यतः या ईश्वरेच्छा इच्छा वा संबन्धज्ञानं वांछति सा स्वयमेव संबन्धस्वरूपा स्यात् एतत्समानम् एतत्स्वभावकं अन्यत् किमपि उदाहरणं नोपलम्यते-यत्र कार्यज्ञानार्थम् प्रसक्तम् कारणमेव कार्यत्वेन उपस्थापितं भवेत्। यथा अत्र कारणभूताज्ञाता ईश्वरेच्छा इच्छा वा स्वयमेव

स्वापेक्षित-कार्यस्थलीय-संबन्धत्वरूपा नैयायिकादिभिः कथिता।

इच्छाया ईश्वरेच्छाया वा संबन्धस्वीकारस्तु दूरे तिष्ठति यतः बालकस्य मनसि जिज्ञासितसंबन्धार्थगवेषणायाम् ईश्वरेच्छैव कारणत्वेन पुनरपि ज्ञाता भविष्यति। कारणस्वरूपेश्वरेच्छायाः शक्तिवादे च संबन्धतत्त्वस्य उपपत्तिव्यवस्था नास्ति—परंतु संबन्धश्च बालकेन अपेक्षित एव। अतः वाच्यवाचकभावरूपशब्दार्थसंबन्धस्वीकारं विना नैयायिकाः एतत्प्रसंगे हीना एव दृश्यन्ते।

यथा रूपरसादिज्ञानजननसमर्था चक्षुर्जिह्वादिनिष्ठा शक्तिः केनापि नाम्ना अभिधीयेत परंतु सा रूपादिज्ञानस्य कारयित्री योग्यता एव। एवमेव अर्थबोधजननकारयित्री पदनिष्ठा शक्तिस्तु सर्वैरपि मन्यत एव परंतु मतभेदः अस्ति तस्याः शक्तित्वसंपादने बालकापेक्षितशब्दार्थसंबन्धस्य स्वरूपविषये। नागेशमतेन अयं बालकापेक्षितः संबन्धः वाच्यवाचकभावरूपः स एव पतंजल्यादिसम्मतः आचार्यहरिणा समर्थितः पोषितश्च। अन्यैः विकारं प्रापितोऽपि नागेशेन उद्धृतः विशदतया व्याख्यातश्च वर्तते।

**नैयायिकमतस्य पुनः परीक्षणपूर्वकम् तेषाम् अन्येषां च वैयाकरणमतविरोधिनाम् खण्डनम्।**

बालकः उत्तममध्यमवृद्धव्यवहारं दृष्ट्वा अन्वयव्यतिरेकभावेन यदा अर्थविशेषजनने शब्दविशेषस्य कारणतां निश्चिनोति तदा सः (बालकः) शब्दार्थयोः मध्ये स्थितम् संबन्धं ज्ञातुं वांछति। ईश्वरेच्छाशक्तिवादिनः नैयायिकाः ईश्वरेच्छाम् अन्ये नैयायिकाः इच्छां संबन्धत्वेन ग्रहीतुम् विवशाः सन्ति। संबन्धज्ञानं विना बालकेन व्यवहारदर्शनाद्युपायेन ज्ञाता पदनिष्ठा अर्थविशेषजननिरूपिता कारणता नोपपद्यते इत्यनुपदमेव अस्माभिः उक्तप्रायमेव। तस्याः कारणतायाः उपपत्तिरेव पदनिष्ठकारणतायाः औचित्यज्ञानम्। बालकः यदा शब्दार्थयोर्मध्ये वाच्यवाचकभावं जानाति तदा सः पदस्य कारणताम् अनुमोदते। सः अनुभवति यत् सत्यमेव, पदम् अर्थविशेषबोधरूपकार्यस्य कारणम् यत् अनयोः वाच्यवाचकभावः संबन्धः वर्तते। एवं च वाच्यवाचकभावस्थाने नैयायिकः उक्तविवशतावशात् ईश्वरेच्छाम् इच्छां वा बालकस्य उक्तकारणजिज्ञासा-समाधायकत्वेन स्थापयिष्यति न तत् बुद्धिग्राह्यं भवति नैयायिककथनम् ईश्वरेच्छाज्ञानम् इच्छाज्ञानमेव वा संबन्धज्ञानापेक्षां जनयति, तदेव संबन्धरूपम् मन्यते तर्हिसंबन्धत्वेन तस्य ज्ञानात् पूर्वम् एव

बालकबुद्धौ तस्य विद्यमानत्वात् अर्थात् समाधायकतत्वस्य पूर्वमेव (जिज्ञासोदयात् पूर्वमेव) बालकबुद्धौ सत्त्वात् बालकस्य मनसि संबन्धजिज्ञासैव उदेतुं न शक्नोति परंतु जिज्ञासोदयस्तु अनुभवसिद्ध एव अतः ईश्वरेच्छा इच्छा वा बालकापेक्षितसंबन्धस्य स्थानं ग्रहीतुम् न क्षमा इति सिद्ध्यति।

अथ च सः जन्यजनकभावः कार्यकारणभावः, ईश्वरेच्छाज्ञानं विना इच्छाज्ञानं विना स्वयमेव व्यवहारदर्शनेन बालकेन ज्ञातो भवति तदर्थम् ईश्वरेच्छारूपस्य इच्छारूपस्य अर्थस्य ज्ञानम् सर्वथा अनपेक्षितमिति वस्तुस्थितिः। ईश्वरेच्छाज्ञानम् इच्छाज्ञानम् वा केवलम् अनुमितम् न तु तत् जन्यजनकभावम् प्रकाशयति न तु तत् वाच्यवाचकभावसदृशम् संबन्धतत्त्वम् उपपादयति बालकस्य मनसि येन तस्य समाधानं भवेत्।

एवं च कार्यकारणताज्ञानम् संबन्धजिज्ञासोत्पादकम् सत् स्वयमेव संबन्धजिज्ञासाशामकं कथं भविष्यति? अस्मादेव हेतोः नैयायिकोक्ताम् ईश्वरेच्छाम् इच्छां वा तादृशसंबन्धबहिर्भूताम् साधयित्वा योग्यसंबन्धकथने असमर्थतावशात् इदं नैयायिकमतम् अरुचिकरमिति नागेशस्य अभिप्रायो विद्यते।

नैयायिकमते अन्योऽपि दोषः—संबन्धत्वेन गृहीते ईश्वरेच्छारूपे इच्छारूपे वा अर्थे आश्रयतया वृत्तिनियामकत्वं नास्ति यत् कस्यापि अर्थस्य संबन्धत्वसिद्धये अनिवार्यहेतुस्वरूपम् स्वीकर्तव्यमेव। ईश्वरेच्छाया इच्छाया वा संबन्धत्वेन गृहीतायाः तथात्वे (आश्रयतया वृतिनियामकत्वे सति) "ईश्वरेच्छावत् पदम्" ईश्वरेच्छावान् अर्थः एवमादयः अनुभवाः अपेक्षिता भवन्ति। परंतु तादृशा अनुभवा न भवन्ति। अतः इदम् आश्रयतया वृतिनियामकत्वम् अत्र नास्ति इति सिद्ध्यत्येव।

एवं च संबन्धत्वस्यकृते परमावश्यकस्य अस्य आश्रयतया वृत्तिनियामकत्वरूपहेतोः अभावात् ईश्वरेच्छा, इच्छा, कदापि त्रिकालेऽपि संबन्धपदार्थः भवितुं नैव शक्नोति। इत्थं नैयायिकमतं खण्डयित्वा प्राचीनवैयाकरणमतम् (दीक्षितादिमतम्) संशोधयति यथा—नागेशस्य मंजूषायाः कलाटीकामनुसृत्य इदं स्पष्टं भवति यत् दीक्षितभूषणकारौ बोधजनकत्वम् एव पदनिष्ठाम् शक्तिम् स्वीकुरुतः। शब्दकौस्तुभग्रन्थे दीक्षितः बोधजननसामर्थ्यमेव शक्तिम् घोषयति। परंतु बोधजनकत्वरूपः अर्थः बोधजननसामर्थ्यरूपः अर्थश्च इमौ द्वौ अर्थौ, संबन्धपदार्थस्य स्थानं ग्रहीतुम् न

शक्नुत: यत: पूर्वदर्शितनैयायिकमतस्थदोषवत् अस्मिन् मतेऽपि दोष: विद्यते एव। वस्तुत: जन्यजनकरूपेणैव बोधजनकताया: बोधजननसामर्थ्यस्य वा व्यवहारदर्शनादिना ज्ञाने जाते सत्येव बालकस्य बुद्धि: शब्दार्थयो: संबन्धज्ञानापेक्षिणी भवति। अत एव संबन्धज्ञानप्राप्त्युन्मुखी भवति सा बुद्धि:। एवं संबन्धजिज्ञासाया उत्पादिका बोधजनकता बोधजननसामर्थ्यं वा कथं स्वयमेव उक्तजिज्ञासोदयानन्तरम् बालकस्य मनसि उक्तजिज्ञासाशामकं शब्दार्थगतसंबन्धरूपेण उपतिष्ठेत—कारणमेव अपेक्षितकार्यत्वेन न क्वचिदपि दृश्यते—व्यवहारदर्शनेन ज्ञाता बोधजनकता एव "कारणम्" बुद्धौ प्रकाशते बुद्धौ प्रकाशिता सा कारणत्वेन (अर्थजननकार्यस्य कारणत्वेन) ज्ञाता शब्दार्थगतसंबन्धरूपकार्यापेक्षिणी स्वयमेव कार्यस्वरूपा संबन्धस्वरूपा भवितुं कथमपि न शक्नोति। अत: भाषाशिक्षणव्यवहारस्य समीक्षावसरे केवलं पदे बोधजनकतां बोधजननसामर्थ्यं ज्ञात्वा बालकस्य मन: जनकताज्ञानोत्तरम् अपेक्षितसंबन्धं गवेषयति–तस्य जिज्ञासापूर्ति: बोधजनकतादिं शक्तिम् मत्वा न भवति अत: तस्यै पूर्तये वाच्यवाचकभावस्य अवतारणा आवश्यकी।

बोधजनकता वा तादृशं सामर्थ्यं वा पदे ज्ञातमपि यावत् सुप्तं तावत् बालकस्य मनसि शब्दार्थोभयगतसंबन्धज्ञानं न उत्पद्यते। तावत् सा बोधजनकता (सामर्थ्यं वा) सुप्तावस्थायाम् सती अपि बालकस्य मनसि अनुमितकारणताया उपपादकं समाधानं विश्वासं वा उत्पादयितुं न समर्था। बालकमन:समाधानव्यवस्थां विना भाषाग्रहणप्रक्रिया अपूर्णा इति कृत्वा प्राचीननैयाकरणा: उपायान्तरम् गवेषयेयु: परंतु वाच्यवाचकभावातिरिक्तम् नास्ति किंचित् उक्तप्रक्रियान्तर्गतबालकमनोजिज्ञासाशमनाय। अत: तैरपि स्वदुराग्रहम् त्यक्त्वा "अयं संबन्ध: एव बालकेन ज्ञायते तेनैव पदजन्यकारणता, व्यवहारे दृष्टा सती उपपन्ना भवति नान्यथा।" इदं स्वीकर्तव्यम्

एवं च बोधजनकता तादृशं सामर्थ्यं वा एतत्प्रसंगे अपूर्णम्। सुग्राह्यसंबन्धज्ञानानन्तरमेव बालक: प्रत्येति यत् अस्मादेव संबन्धात् अस्मिन् पदे एतदर्थबोधकता अथवा एतदर्थबोधजननसामर्थ्यं विद्यते इति।

तत एव बोधकशक्ते: परिचयो भवति। अत: इदं प्राचीनवैयाकरणमतम् संबन्धतत्त्वस्य अप्रकाशकत्ववशात् अरुचिकरम् इति नागेशाभिप्राय:। पदे बोधजनकसामर्थ्यम् इव दीपे वस्तुप्रकाशनसामर्थ्यसत्त्वेऽपि वस्तुन: दीपस्य च मध्ये संयोगरूपे संबन्धे ज्ञाते सत्येव दीक्षिताद्युक्ता पदनिष्ठा बोधजनकता कार्य

कारिणी भवति शिशिक्षोर्मनसि। अतः बोधजनकतामात्रम् एव शक्ति स्वीकृत्य प्राचीनवैयाकरणाः व्यवहारकाले जायमानायाः बालकस्य मनोदशायाः समाधानं कर्तुं न समर्था इत्युक्तमपि तथ्यम् स्पष्टस्वरूपप्रतिपत्तये पुनरुच्यते इति न पुनरुक्तिदोषः अपितु गुणः एव।

दीपवस्तुदृष्टान्ते दीपात् भिन्नः प्रकाश्यवस्तुनः भिन्नः उभयस्मात् अपि भिन्नः संयोगपदार्थः पूर्वसिद्धः एव दीपगताम् प्रकाशनशक्तिम् प्रकटयति। तथैव अत्रापि शब्दात् अर्थात् च भिन्नः एव संयोगस्थानीयः वाच्यवाचकभावरूपः संबन्धः, व्यवहारदर्शनान्वयव्यतिरेकानुमिताम् (बालकेन) पदनिष्ठाम् बोधजनकतां प्रकाशयति। एवं बालकस्य बुद्धौ प्रकाशिता शक्तिः बोधजनकता कार्यकारिणी भवति। समाधानं बालकस्य मनसः करोति अर्थबोधाय कल्पते च इति तात्पर्यम्। इयं संबन्धतत्वस्य प्रथमा स्थितिः वर्णिता।

द्वितीयस्थितिस्तु—संबन्धः सदैव द्विष्ठो भवति—द्वयोः संबन्धिपदार्थयोर्मध्ये प्रत्येकं स्पृशति अतः सः द्विष्ठः कथ्यते। यथा संयोगः, दीपगतः वस्तुगतश्च एवं द्विष्ठः अतएव संबन्धः कथ्यते एवमेव वाच्यवाचकभावः संबन्धः शब्दात् अर्थात् उभयस्मादपि संबधिपदार्थात् भिन्नः उभयस्पर्शी च अतः संबन्धतत्त्वस्य द्वितीयवैशिष्ट्यं धारयति इति अस्मिन् वाच्यवाचकभावे सिद्धं भवति।

तृतीया च विशेषता आश्रयतया वृतिनियामकत्वम् संयोगे वर्तते, अतः संयोगवान् दीपः, संयोगवत् वस्तु इति अनुभवो भवति। एवमेव वाचकबोधितवाच्यतावान् अर्थः वाच्यार्थनिरूपितवाचकतावत् पदम् इति बोधोऽपि अनुभवसिद्धः। इत्थं तृतीयवैशिष्टयं संबन्धपदार्थस्य यथा संयोगे (सर्वस्वीकृतसंबन्धस्थानीये अर्थे) तथैव वाच्यवाचकभावेऽपि विद्यते एव। फलतः यथा संयोगः सम्बन्धः तथैव वाच्यवाचकभावेऽपि विद्यते एव। फलतः य़था संयोगः संबन्धः तथैव वाच्यवाचकभावोऽपि संबन्धः इत्यत्र न कापि विप्रतिपत्तिः स एव संबन्धः बालकेन भाषाग्रहणकाले ज्ञायते इति मूलं न विस्मर्तव्यम्।

एवं स्थितौ अपि ईश्वरेच्छादिरूपशक्ति कारणं मत्वा अर्थबोधरूपकार्यस्य समर्थनं नोचितम्। यतः एतादृशवाच्यवाचकभावरूपम्-संबन्धानुभवं विना बालकः, पदनिष्ठं शक्तिरूपं कारणत्वं पूर्णतया समर्थयितुम्

तत्परो न भवति। यदा तु सः शब्दार्थोभयगतसंबन्धज्ञानवान् जायते तदा स एव ज्ञानसंस्कारः उक्तकारण (बोधजनकतादिरूपे ईश्वरेच्छादिरूपे स्थितस्य कारणत्वस्य ग्रहणे) ग्रहणे बालकं प्रेरयत्येव। इत्यस्तिविशदम् आचार्यहरिमतम्।

शब्दार्थयोः परस्परं वाच्यवाचकभावः संबन्धः एव पदादिनिष्ठ बोधजनकतारूपां शक्तिं ग्राहयति। अर्थात् बालकस्य मनसि बौद्धः वाच्यवाचकभावः ज्ञातः सन् संबद्धपदनिष्ठाम् ताम् अर्थविशेषप्रकाशयित्रीं शक्तिम् बालकस्य मनसि स्थापयति। इत्थं सः शब्दार्थयोः संबन्धः शक्तिग्राहकः विद्यते। शब्दः उपकारकः भवति अर्थः उपकार्यः, अनयोर्मध्ये उपकारस्वभावः वर्तते। यः स्वभावः पदादिनिष्ठम् अर्थनिष्ठं च बोध्यबोधकभावम् उपपादयितुम् सर्वथा अनुकूलः समर्थश्च। सः उपकारस्वभाव एव वाच्यवाचकभावापरपर्यायः विद्यते।

व्यवहारे शाब्दबोधावसरे श्रोता वक्ष्यमाणं तथ्यत्रयं जानाति- शाब्दबोधविषयीभूतः सकलोऽपि अर्थः कतुर्गोचरः (कर्त्राज्ञातः) एवास्ति। इति श्रोतृनिश्चयः प्रथमं तथ्यम्। एतेन सहैव शब्दोऽपि शाब्दबोधविषयीभूतो भवति बोधकघटपदसहचरितघटत्वावाच्छिन्नघटकर्तृका सत्ता इत्यर्थः विद्यते घटो विद्यते इत्यस्य। अत एव श्रोतुर्बुद्धौ शब्दोऽपि प्रकाशते। इति द्वितीयं तथ्यम्। अथ च वक्तुर्विवक्षितः अर्थोऽपि श्रोतुर्बोधविषयो भवति इति कथनस्य आवश्यकतैव नास्ति। अयमर्थबोधः सर्वैरेव अनुभूयते। एवमर्थस्य श्रोतुर्बुद्धिवर्तित्वं तृतीयं तथ्यमिति ज्ञेयम्।

एवं शाब्दबोधवान् श्रोता, वक्तुर्ज्ञानम् वाचकशब्दस्वरूपम् वाच्यार्थम् चेति त्रितयमपि शाब्दबोधविषयत्वेन जानाति। एतच्च त्रितयं श्रोतुर्मनसि तावत् उपपन्नं न भवति यावत् एषु त्रिष्वपि कोऽपि संबन्धः ज्ञातो न भवेत् यतः शाब्दबोधे एतत्त्रयं बुद्धौ भासते अतः कारणात् इदं त्रितयम् श्रोतुर्मनसि उपपन्नं वर्तते। श्रोता एतत्त्रयस्य सहस्थितिम् युक्तिसिद्धां मन्यते। इदं तदैव सेत्स्यति यदा एषु कोऽपि संबन्धः ज्ञातः स्यात्। संबन्धस्य ज्ञानाभावे एषां स्थितिः श्रोतुर्मनसि शाब्दबोधविषयतया जायमानापि सन्देहभावाक्रान्ता स्यात्। एवं तेषु त्रिष्वपि पदार्थेषु ज्ञातेष्वपि युक्तियुक्तत्वं नायाति तेषु। अत एव एषु संबन्धः विद्यते, स च पूर्वसिद्धः। (बोधात् प्राक् वस्तुस्थितौ सिद्धः) न तु नवीनः इत्येतत् सविस्तरम् हेलाराजेन वाक्यपदीयकारेण च उल्लिखितं वर्तते। जिज्ञासुभिः तत एव विस्तरशो द्रष्टव्यम्।

श्ब्दविषये अर्थविषये च इयं प्रतीतिर्जायते यत् अयम् (शब्दः) अस्य (अर्थस्य) वाचकः वर्तते। एवंविधा वाच्यवाचकप्रतीतिः, असंबद्धपदार्थेषु न भवति। ये पदार्थाः परस्परम् असंबद्धाः ते परस्परं स्वतन्त्राः न, तेषु कोऽपि संबन्धः दृश्यते इति स्पष्टप्रायमेव। घटः पटश्च अन्योऽन्यस्मात् सर्वथा स्वतन्त्रौ अर्थौ अत एव तयोर्मध्ये "घटस्य पटः" "पटस्य घटः" इति वा व्यवहारः ईदृशी प्रतीतिर्वा न भवति। एवं वयं विद्मः संबन्धहीनपदार्थयोः षष्ठीविभक्तेः प्रयोगः अनभिमतः। अतः शब्दार्थयोर्विषये अयमस्य वाचकः अयमस्य वाच्यः इत्यादिस्थले प्रतिपादितस्य शिष्टाभिमतसंबन्धस्य प्रयोगवशात् संबन्धसत्ताया निश्चयः अधिकतरं दृढीभवति। परंतु यथा पदार्थानां स्वरूपं विचार्यैव तत्तत्स्वरूपप्रत्यायकशब्दनिवेशेनैव (वाक्ये) तस्य पदार्थस्य लक्षणम् अभिधीयते। तेनैव रूपेण अस्य संबन्धरूपस्य तथ्यस्य (अर्थस्य) वाचकं न किमपि पदं विद्यते केवलं षष्ठीविभक्तिरेव तं संबन्धम् प्रकाशयति।

वाक्यपदीयतृतीयकाण्डे संबन्धसमुद्देशप्रकरणे अस्य वाच्यवाचकभावरूपस्य संबन्धस्य विषये सुबहु विशदं च उक्तम् विस्तरभयान्नात्र तत् निवेशितम्। केवलं शब्दार्थयोर्मध्ये अनुभूयमानसंबन्धकतैव दृढीक्रियते तच्चर्चया।

एवं च शाब्दबोधे बोधविषयीभूतसंबन्धः ज्ञातःसन् बालकस्य मनसि अन्वयव्यतिरेकभावाश्रितव्यवहारदर्शनसमीक्षया अर्थविशेषं प्रति अनुमिताम् शब्दविशेषनिष्ठाम् बोधकताम्, उपपादयति समर्थयति, द्रढयति च। तदनन्तरमेव सा बोधकता, अर्थबोधं कारयति। एवं बोधकतामात्रशक्ति-वादिनाम् ईश्वरेच्छादिमात्रशक्तिवादिनाम् तादृशशक्तेः संबन्धपदार्थत्वाभावात् अनुमितकारणताया उपपत्तये शिशिक्षोर्बालस्य मनःस्थितिः न प्रभवति न संतुष्यति वा। अत एव तेषां मतेषु दोषः।

अथ च दीक्षितादिभ्यः प्राग्वर्तिनः आचार्यहरेः एतादृशं सुग्राह्यमपि मतम् व्याकरणवाङ्मयात् दूरीभवति। तच्च वैयाकरणानां पुरस्तात् पुनरानेयम् इति धिया नागेशः इमां चर्चाम् व्याकरोत् स्वीयलघुमञ्जूषायाम्। आचार्यहरेः मतस्य अभिप्रायः अयमेव यत् संबन्ध एव शक्तिप्रकाशकत्वात् शक्तिः इत्यस्ति। एवं च शक्तिशक्तिमतोरभेदेन परस्परं तादात्म्यबुद्ध्या च संबन्धमेव शक्तिं मन्वते वैयाकरणाः।

संकेतेनापि क्वचित् संबन्धः प्रकाश्यते यथा अयमस्य पिता अयमस्य

पुत्रः इति हस्तसंकेतैरेव जन्यजनकभावः प्रकाश्यते। एतदुदाहरणप्रदाने नागेशस्य अभिप्रायः एतावानेव आसीत् यत् पूर्वसिद्धयोरेव वस्तुनोः संबन्धो भवति न तु असिद्धयोरिति। उक्तोदाहरणे पूर्वसिद्धपितृपुत्रवत् शब्दार्थस्थले पूर्वसिद्धशब्दार्थयोरेव वाच्यवाचकभावः बालकेन बुद्धो भवति।

तयोः संबन्धद्योतकः संकेतः जन्यजनकभावं संबन्धं द्योतयति। एवं च संबन्धः पूर्वसिद्धयोरेव भवति न तु नवीनयोरच्यमानपदार्थयोः। एवं शब्दार्थयुगलस्य पूवसिद्धतावशादेव तत्र पूर्वस्थितस्य संबन्धस्य ज्ञानं व्यवहारदर्शनेन अनुमानेन च भवति। बोधकतादिरूपशक्तिपदार्थेषु एवं विधस्य संबन्धस्य भानं न भवति। भाषाग्रहणकाले बालकस्य मनसि संबन्धत्वेन शब्दार्थयुगलस्य पूर्वसिद्धत्वाभावात्। वाच्यवाचकभावे शब्दे अर्थे च अयं संबन्धपदार्थः सुतरां समन्वितो भवति। युक्तिसिद्धश्च अनुभवसिद्धश्चेति अत्र विशेषः। संबन्धस्वीकृतौ पूर्वसिद्धयोः घटकरूपयोः शब्दार्थयोः पूर्वसिद्धिः विद्यते एव या संबन्धत्वं घटयति। अतः वाच्यवाचकभावरूपः एव पूर्वोक्तः शक्तिपदार्थः ग्रहणीयः भवति इति निष्कर्षः। वाच्यवाचकभावस्य वस्तुतः पदानिनिष्ठशक्तिजागरणकर्तृत्वम् एव। एवम् अयं संबन्धःशक्तिम् पदादिनिष्ठाम् अपि समर्थयति अतः तयोरभेदावभासेन तादात्म्यवशात् सः,शक्तिः इत्युच्यते। संबन्धरूपस्य अर्थस्य कृते अनिवार्याः त्रयोऽपि हेतवः अस्मिन् वाच्यवाचकभावे वर्तन्ते—अयम् संबन्धिभ्यां शब्दार्थाभ्याम् भिन्नः अथापि शब्दार्थरूपघटकद्वयनिष्ठः एवमेव आश्रयतया वृत्तिनियामकः यद्वशात् "अयमर्थः वाच्यतावान्" "अयं शब्दःवाचकतावान्" अयं व्यवहारो भवति। एवमयं वाच्यवाचकभावः शुद्धः निर्विवादः संबन्धः इति सिद्धयति।

वाक्यपदीयग्रन्थे संबन्धसमुद्देशप्रकरणे अस्य वाच्यवाचकभावस्य संबन्धत्वसाधने बहुउक्तं वर्तते।

## नैयायिकानांकोटिः

भाषाशिक्षणकाले बालकेन अनुमितः (व्यवहारदर्शनेन) जन्यजनकभावः कार्यकारणभावो वा आश्रयतयावृत्तिनियामकत्वदृष्ट्या वाच्यवाचकभावेनसमः अतः जन्यजनकभावोऽपि संबन्धः शक्तिर्वा यथा संबन्धशरीरम् द्विधाकृत्वा "अयमर्थः वाच्यतावान्" अयं शब्दः वाचकतावान् इति आश्रतत्या

वृत्तिनियामकत्वम् स्वीक्रियते तथैव "अयमर्थः जन्यतावान्" अयं शब्दः जनकतावान् इति आश्रयतया वृत्तिनियामकत्वम् सिद्ध्यत्येव अतः कथं न सः संबन्धः ?

## उत्तरम्, नैयायिककादिमतखण्डनम्

यद्यपि जन्यजनकभावः पूर्वसिद्धवस्तुनोरेव भवति तथापि अस्य भावस्य ज्ञातत्वात् पूर्वम् न किंचिदपि बोधयति सः, अनुमितेरनन्तरम् बालकः यदा शब्दार्थगतं जन्यजनकभावम् जानाति तदैव संबन्धजिज्ञासा तन्मनसि जायते। एवं च जन्यजनकभावः अनुमित्या ज्ञातः सन् संबन्धम् अपेक्षते। एवं च यः स्वयं संबन्धजिज्ञासाम् दधाति सः जन्यजनकभावः बुद्धिस्थः कथं बालकस्य जिज्ञासां शमयेत्। वाच्यवाचकभावे तु अन्यः प्रकारः तत्र शक्त्यपेक्षया संबन्धस्य वास्तविकं भिन्नत्वम् तादात्म्यगृहीतमभिन्नत्वमपि अत एव तज्जनितजिज्ञासाशामकत्वमपि वर्तते वाच्यवाचकभावे।

एवं च उक्तरीत्या आश्रतया वृत्तिनियामकत्वसाधनेनापि जन्यजनकभावः संबन्धो भवितुं नार्हति यतः स एव ज्ञातःसन् संबन्धजिज्ञासां बालकस्य मनसि उत्पादयति—स एव जिज्ञासोत्पादकः जिज्ञासाशामकश्च कदापि नैव भवितुं शक्नोति अतः जन्यजनकभावः नास्ति संबन्धः अपितु शब्दार्थयुगलस्थित-संबन्धाकांक्षी विद्यते सः।

अस्मिन् प्रकरणे कालकृताविर्भावकथनेनापि जन्यजनकभाव-वाच्यवाचकभावयोः भेदं दर्शयन् नागेशभट्टः सुतरामभिनन्दनीयः। सः कथयति बालकस्य बुद्धिः अनुमितमपि जन्यजनकभावं ज्ञात्वापि कथमयं शब्दः अस्यार्थस्य जनकः ? कथं वा अयमर्थः अस्य शब्दस्य जन्यः इतिस्वभावकस्य संबन्धविशेषस्य जिज्ञासां प्रकटयति एव। एवं च जन्यजनकभावः पूर्वकालिकः समाधानं च उत्तरकालिकम्।

यदि जन्यजनकभावसंबन्धः, उक्तजिज्ञासाशामकः संबन्ध इति गृह्यते चेत् तर्हि तदपि दोषायैव यतः समाधायकम् तत्त्वम् उत्तरकालवर्ति भवति तत्पूर्वमेव तस्य समाधायकतत्त्वस्य भूमिकारूपेण यत् ग्रहणम् तत् कारणस्वरूपम् एव विद्यते न तु कार्यरूपे तिष्ठति तत्। यथा अत्र जन्यजनकभावरूपः संबन्धः बालकेन अनुमित्या गृहीतः अयं पूर्वकालिकः तथापि जिज्ञासोत्पादकः शब्दार्थगतजिज्ञासोत्पादकः, अत एव अस्य

उत्तरकालिकत्वाभावात् नास्ति अस्मिन् संबन्धे बालकस्य जिज्ञासाशमनशक्तिः परंतु वाच्यवाचकभावे सा शक्तिः अस्त्येव यतः पूर्ववर्तिनः अनुमितजन्यजनक-भावस्य समुत्पन्नजिज्ञासाशामकोऽयम् उत्तरवर्ती अत एव नियमानुसारेण अयमेव जिज्ञासाशामकः न तु जन्यजनकभाव इति सिद्ध्यति। एतादृशम् किमपि उदाहरणम् अदृष्टश्रुतपूर्वम् यस्मिन् तथ्यविशेषज्ञानम् जिज्ञासां जनयति तां च स्वयमेव शमयति युगपत् इति। वाच्यवाचकभावस्तु अस्य ज्ञानात् समुत्पन्नजिज्ञासोदयात् अनन्तरमेव बुद्धौ जायते अतः पदनिष्ठाया अनुमितज्ञातशक्तेः भिन्नः उत्तरवर्ती च उक्ताम् जिज्ञासाम् सारल्येन शमयति तथापि पदादिनिष्ठशक्त्या सह तस्य अभेदोपचारः तादात्म्योपचारः एव अनयोर्मध्ये भेदज्ञानं वस्तुतः सदपि, शक्तिज्ञानोत्तरजिज्ञासाकालस्य एतसंबन्धज्ञानकालस्य च अल्पाल्पतमावकाशगृहीतत्वात् न बुध्यते प्रत्युत तत्र शक्ति-वाच्यवाचकभावयोर्मध्ये अभेदः स्थितिविशेषवशात् असन्नपि प्रतीयते अत एव सः संबन्धपदवीमारोहति।

एवं संबन्धतया यथाकथंचित् ज्ञातोऽपि जन्यजनकभावः संबन्धजिज्ञासां वर्धयत्येव न तु उपपादयति शमयति वा इति सिद्धम्।

इदं नागेशभट्टस्यैव योगदानम् यत् सः एवं व्याख्यात-दोषशालिशक्तिस्वरूपं निषिध्य आचार्यहरिप्रतिपादितस्य भाष्यमूलकस्य वाच्यवाचकभावरूपसंबन्धविषेषस्य प्रकाशनेन एतत्प्रकरणे अस्मान् उचितसमीक्षां प्रदर्श्य निर्दुष्टेन आक्षेपशून्येन संबन्धेन वाच्यवाचकभावरूपेण अस्माकं परिचयं स्पष्टतया अस्मन्निजपरिश्रमाधिक्यं विना सरलतया च कारितवान्। इममेव संबन्धं भाषाग्रहणप्रक्रियायाम् बालकः अवगच्छति। शक्तीनां शक्तिरूपस्य अस्य संबन्धस्य ज्ञानोत्तरमेव बालकः अनुमितकार्यकारणभावजन्यजनकभावगतकारणतायाः उपपत्तिम् स्वीकरोति। अस्यां स्थितौ सः स्पष्टं जानाति यत् अस्मादेव संबन्धवशात् पदविशेषः वाक्यविशेषो वा अर्थविशेषं जनयति। एवं चायं संबन्धः अर्थविशेषजननकारणं च भवति। अस्य संबन्धस्य ज्ञानोत्तरमेव तादृशम् अनुमितम् पदादिनिष्ठम् सामर्थ्यम् सः निःशंकं स्वीकरोति। अस्यां मान्यतायां न कोऽपि विरोधः संभवति।

व्यवहारदर्शनरूपमुपायं विहाय शक्तिग्रहस्य अन्येष्वपि व्याकरणदिषु साधनेषु आवश्यकम् शक्तिग्रहस्थलीयम् सुबहु तथ्यजातम् नागेशः

प्रदर्शितवान्। तज्ज्ञानं जिज्ञासुभिः नागेशकृतलघुमञ्जूषातोलभ्यमिति संदिश्य प्रकरणादस्मात् विराममाश्रयामः।

## शक्तिः साधुशब्देषु इव अपभ्रंशेषु अपि विद्यते।

सा च वाच्यवाचकभावापरपर्याया व्यवहारदर्शनाद्युपायवशात् अनुमितजन्यजनकभावसमन्वयकर्त्री अर्थविशेषबोधजननसमर्था पूर्वोक्तरीत्या व्याख्याता शक्तिः न केवलम् साधुष्वेव शब्देषु वर्तते प्रत्युत सा असन्देहम् अपभ्रंशशब्देष्वपि अवश्यं वर्तते इति सकलवैयाकरणसिद्धान्तः।

यस्य विरोधे नैयायिकाः कथयन्ति—इयं शक्तिः वस्तुतः साधुष्वेव अर्थात् व्याकरणशास्त्रानुमोदितेषु शिष्टजनैः साधुत्वेन स्वीकृतसंस्कृतभाषाशब्देषु एव (अर्थविशेषबोधजननशक्तिः) विद्यते न तु अपभ्रंशशब्देषु व्याकरणनियमानामलक्ष्येषु शब्देषु सा अस्ति इति। अपभ्रंशशब्दैः यत् ज्ञानम् अनुभूयते तत्तु अपभ्रंशशब्दसदृशसाधुशब्दस्मरणजन्यशक्तिग्रहज्ञानवशादेव भवति। साधुनिष्ठया शक्त्यैव अपभ्रंशशब्दैरपि अर्थबोधः इति तेषां नैयायिकानां प्रक्रिया वर्तते। एवमेव मीमांसका अपि साधुष्वेव शक्तिं स्वीकुर्वन्ति।

अस्मिन् प्रकरणे भूषणकारापेक्षया नागेशभट्ट एव वैयाकरण पक्षमनुसृत्य सुबहुशः सारगर्भिताः युक्तीः प्रदर्शयति। यासां महत्त्वमालोच्य एतप्रकरणीयः नागेशविचारः अचिरादेव अस्माभिः उपस्थाप्यते।

नैयायिकाः असाधुशब्दव्यवहारं दृष्ट्वा अथवा असाधुशब्दान् श्रुत्वा साधुशब्दस्मरणपूर्वकमेव अर्थबोधः साधुशब्दस्मरणं विना कदाचिदपि नार्थबोधः इति वस्तुस्थित्या शक्तिस्तु साधुष्वेव पदेषु वर्तते सा एव साध्वसाधु-शब्दगतसादृश्यवशात् अपभ्रंशेषु आरोप्यते ततोऽर्थबोधः इति प्रतिपादयन्ति। तद्विरोधे नागेशः कथयति।—

अनुभवस्तु अयमपि वर्तते यत् अनेकस्थलेषु साधुशब्दानाम् स्मरणंविनैव अर्थबोधो जायते अथवा वक्ता श्रोता च अपभ्रंशशब्दसंबद्धसाधुशब्दम् नैव जानाति तथापि तस्य बोधोऽनुभूयते सच नैयायिककादिपक्षविरुद्धः एवं च अपभ्रंशशब्दोत्तरम् साधुशब्दस्मरणम् तत एव साधुशब्दनिष्ठशक्त्या अर्थबोधः इति नैयायिकाद्युक्तं परास्तम् अनुभवविरुद्धं च इति वक्तुं शक्यते। अथ नैयायिकपक्षाभ्युपगमाभिनिवेशवशात्

उक्तवस्तुस्थितेः उपेक्षायामपि यथाकथंचित् स्मृतः अपि साधुशब्दः, श्रोतृबुद्धौ आरूढः सन्नपि, शक्ततावच्छेदिकायाः आनुपूर्व्याः प्रत्यक्षरूपेण उपस्थितायाः तत्र अभावेन वाच्यार्थोपस्थितिं कर्तुम् न शक्नोति। उच्चरित एव शब्दः प्रत्यायको भवति नानुच्चरित इति सिद्धान्तात्।

अथ च वाचकस्य पदस्य व्यञ्जकतासाधनप्रकरणे आलंकारिकाः प्राकृतभाषाया उदाहरणानि प्रस्तुवन्ति। अपभ्रंशेषु शक्तिर्न चेत् तर्हि प्राकृतभाषास्थितम् वाचकं पदम् किमाश्रित्य वाच्यार्थम् व्यङ्ग्यार्थं वा प्रकाशयेत्? अतः एषामुदाहरणानाम् उपपत्तये तेषां सार्थक्याय च इदमवश्यंस्वीकार्यं भवति यत् साधुष्विव अपभ्रंशेष्वपि अभिधा शक्तिर्वर्तते एव।

तत्तद्देशीयाः शिष्टजनाः स्वीयाभिः तत्तद्भाषाभिः अर्थबोधवशात् अनुभवन्ति अनुभूयमाना च प्रतीतिः भ्रमः इति घोषयितुं न शक्यते। यतः तस्याः प्रतीतेः तस्य भ्रमस्य वा उत्तरकाले बाधाभावः। अत एव ते शिष्टाः स्वभाषाशब्दानाम् उपयोगं तासां स्त्रीणाम् तेषां बालकानां च सन्देहस्य निवृत्तये कुर्वन्ति यः सन्देहः अपभ्रंशसंबद्धसाधुशब्देन तासां तेषां च मनसि उत्पद्यते। तेषु शिष्टजनोच्चरितेषु अपभ्रंशशब्देषु शक्तिर्न स्यात् तर्हि ताः स्त्रियः ते च बालकाः एवं रीत्या अभीष्टमर्थं कथं गृह्णीयुः।

एता युक्तीः विरहय्य "समानायामर्थावगतौ शब्देन धर्मः क्रियते नापशब्देन" एवंरूपां भाष्योक्तिम् उद्घृत्य नागेशः कथयति–उक्तविधः नियमः शास्त्रसम्मतः वर्तते अत एव अस्मात् पतंजलेः आप्तवाक्यात् अपि एतत्सिद्ध्यति यत् साधुशब्दः इव अपभ्रंशशब्दोऽपि अर्थबोधनकार्ये समानरूपेण समर्थः भवति। "वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः" एकः साधुशब्दः पुण्यकृत् अपरः अपभ्रंशशब्दः न तथा इति तथ्येसत्त्वेऽपि अर्थबोधकता तु उभयत्र समाना इति भाष्यकारहरिमतयोः तात्पर्यम् एवमपि उक्तविद्वद्द्वयीसमर्थितत्वात् अपभ्रंशेषु शक्तिस्वीकार आवश्यकः इति।

मीमांसाशास्त्रे आर्यम्लेच्छाधिकरणविचारोऽपि अस्मदुक्तव्याख्यानुसारेण अपभ्रंशानां वाचकत्वसिद्धये सहायकोऽस्ति। तद्यथा आर्याः यवशब्दं दीर्घशूके धान्ये प्रयुञ्जते म्लेच्छास्तु तमेव यवशब्दं प्रियंगौअर्थे प्रयुञ्जते। यज्ञे यवशब्देन कः अर्थः (दीर्घशूकः प्रियंगुर्वा) ग्राह्य इति संशयः उत्थापितः आर्य म्लेच्छाधिकरणे। ततश्च आर्यप्रसिद्धेर्बलवत्त्वात् तत्र दीर्घशूकधान्यस्य ग्रहणं

विधिसम्मतं निर्णीतम्। अस्मिन् विचारे—यदि अपभ्रंशे शक्तिर्नास्ति तर्हि म्लेच्छप्रयुक्तात् अपभ्रंशशब्दात् प्रियंगुपदार्थस्य बोधाभाव: एवं च कतरस्य अर्थस्य ग्रहणमिति संशय: एव भवितुं न शक्नोति। कुत: प्रश्न: निर्णयस्य? संशये सत्येव निर्णय: क्रियते न तु तत्पूर्वम्। अस्मिन्नधिकरणे म्लेच्छभाषावशात् यवशब्देन प्रियंगुरूप: अर्थ: उच्यते तदाकार: एव यवशब्द: आर्यभाषात्वात् साधुशब्द: दीर्घशूकमर्थम् अभिदधाति। एवं दीर्घशूक-प्रियंगू पदार्थौ समानाकारात् यवशब्दात् उच्यमानौ एव संशयोत्पादकौ न तु अन्यतरार्थप्रसवेन संशयकारकौ भवितुमर्हत:।

अत्र प्रियंगुपर: यवशब्द: कथम् अपभ्रंश: तदाकार: सन्नपि दीर्घशूकपर: किमर्थम् साधुशब्द: इति प्रश्नस्य उत्तरं दत्तमेव- एक: म्लेच्छभाषितत्वाद्धेतो: अपभ्रंश: अन्यश्च आर्यभाषितत्वात् साधु: अत्र शब्दस्य आकारसमानतायामपि एक: यवशब्द: आर्यै: स्वपरंपरानुमोदिते अर्थे प्रयुज्यते अत एव स यवशब्द: आर्याणां भाषा। आर्याणांभाषा, संस्कृतम्। अत एव तै: अर्थविशेषे प्रयुक्त: यवशब्द: साधु:। म्लेच्छै: स्वपरंपरानुमोदिते अर्थे प्रयुक्त: पूर्वोक्तयवशब्दस्य समानाकार: यवशब्द: अपभ्रंशशब्द: म्लेच्छोदितत्वात्।

एवम् अनयोः यवशब्दयो: अपभ्रंशत्वाच्च संस्कृतभाषात्वाच्च भिन्नार्थत्वम् अत एव ग्रहणार्थविषये विचार: प्रसक्त:। इत्यादि विवेचनम् संगच्छते।

सिद्ध्यति च अनया चर्चया अपभ्रंशानां वाचकत्वमिति नागेशस्य मुख्य: अभिप्राय:। अर्थद्वयोपस्थितिकारकौ उभौ अपि शब्दौ प्रियंगुदीर्घशूकवाचकौ सन्तौ एव तयोर्मध्ये कतरस्य ग्रहणम् इति विचारम् जनयत:। तत्र एकस्यैव ग्रहणं विधिसम्मतम्। एवं मीमांसकैरपि अपभ्रंशेषु शक्तिस्वीकारमन्तरा उक्तविवेचनवशात् नास्ति अन्य: उपाय: ग्राह्यो भवति। अत: तेऽपि अपभ्रंशेषु शक्तिस्वीकाराय विवशा: इति नागेशस्य तात्पर्यम्।

इत्थं न केवलं साधुष्वेव शब्देषु अपितु असाधुष्वपि अपभ्रंशशब्देषु अर्थजननसमर्था शक्तिरस्ति। उभयत्रापि समानार्थबोधकवाक्ययो: वाक्यार्थ: समानरूपेण बोधविषयो भवति। अन्यदेतत् यत् एकत्र स वाक्यार्थबोध: केवलम् व्यवहारसाधक: एव न तु पुण्यप्रद: इति। इति आप्तवचनेन सिद्धे सत्यपि न तत् कारणं पश्याम: यद्वशात् अपभ्रंशेषु शक्तिस्वीकारे बाधा भवेत्।

अतः तत्रापि शक्तिः । अत एव च नैयायिकैः स्वमतदुराग्रहं त्यक्त्वा व्यवहार-साधिका अर्थजननसमर्था शक्तिः साधुष्विव अपभ्रंशेषु अपि सादरं स्वीकर्तव्या ।

यद्यपि नैयायिकविरोधे भूषणकारेणापि उक्तं वर्तते तथापि भूषणाकारापेक्षपा अधिकतरयुक्तिप्रदानेन विविधयुक्तिप्रदानेन च नागेशीयम् अत्रत्यम् विवेचनम् भूषणकारोक्तविवेचनम् अतिशेते । अत एव तद् विवेचनं महत्त्वशालि मत्वा अस्माभिर्निवेशितम् अत्र ।

इमां चर्चां कृत्वा श्रुत्वा वा अस्मन्मनसि एकं कुतूहलम् उत्पद्यते यत् एतावत्सु विपरीततथ्येषु सत्सु अपि नैयायिकाः मीमांसकाश्च केवलम् संस्कृतभाषाशब्देषु एव शक्तिसत्ताया आग्रहम् किमर्थं कुर्वन्ति? अस्य कुतूहलस्य समाधानं प्रस्तोतुम् वयम् इत्थम् विमर्शयितुं शक्नुमः यत् यस्मिन् युगे नैयायिकाः इमं स्वसिद्धान्तं स्थापितवन्तः तस्मिन् युगे संस्कृतभाषैव लोकभाषारूपे प्रचलिता स्यात् तथा अन्याः भाषाः बहिस्तः आगत्य शनैः शनैः जनजीवने प्रवेष्टुमारभन्त । अतएव अन्यभाषायाः कमपि शब्दं श्रुत्वा अत्रत्यः संस्कृतज्ञः लोकः सदृशसंस्कृतशब्दस्मरणेनैव तदर्थस्य तस्य सुनिश्चितार्थलाभाय निर्णयमकरोत् । एवं नैयायिकानां सिद्धान्तविशेषः युगविशेषस्य स्थितिविशेषवशात् एव प्रचारितः जातः स्यादिति स्वीकार्यं भवति । अनया समीक्षया उक्तम् कुतूहलम् समाधिम् एष्यति इत्यस्ति विश्वासः ।

## अथ कारक-संबोधनार्थयोर्विचारः

वाक्यार्थं श्रुत्वा श्रोत्रा वाक्यार्थे ज्ञाते सति तस्मिन् एकस्मिन् वाक्यार्थे घटकत्वेन क्रियादयः अनेके अर्थाः श्रोतुः अनुभवविषया जायन्ते । तेषु कश्चन बुध्यमानः अर्थः जातिरूपः लिंगरूपः कारकरूपश्च विद्यते । सर्वे घटकीभूताः अर्थाः, वाक्यस्थितसुबन्तप्रातिपदिकात् श्रोतुर्बुद्धौ प्रकाशन्ते । एषु कश्चन अर्थः प्रातिपदिकनिष्ठया अभिधया बोध्यते कश्चन प्रत्ययनिष्ठाभिधया । अथवा मतमतान्तरदृष्ट्या एषु अन्यतमः अर्थः प्रत्ययगतद्योतकतावशात् प्रातिपदिकादेव द्योत्यते एषां सर्वेषां कतिपयानां वा अर्थानां बोधः वाक्यस्य मध्येस्थितात् कस्मात् घटकात् भवति? अस्य प्रश्नस्य उत्तरप्रदानपूर्वकम् समाधानपुरःसरम् विवेचनम् हस्ते गृहीतविषयात् दूरीभूतम् अतएव एतद्विवेचनविशेषात् विरम्य

वयम् सुबन्तपदश्रवणोत्तरकालिकमध्यवृद्ध-बुद्धिस्थितकारकपदार्थस्य स्वरूपविषये इदं प्रासंगिकम् विवेचनम् उपस्थापयामः। स च कारकपदार्थः प्रतिपदिकस्य वाच्यार्थो भवेत् द्योत्यार्थो भवेत् प्रत्ययस्य वाच्यार्थः द्योत्यार्थो वा भवेदिति अन्या चर्चा। कथमपि प्राप्तः कारकत्वेन वैयाकरणैरभिमतः अर्थः किंस्वरूपः? इत्येव अस्माकम् मुख्यं तात्पर्यम् अत्र वर्तते।

सुबन्तपदं श्रुत्वा अन्यैः अर्थैः सह कारकरूपः अर्थः अपि श्रोतुर्बुद्धौ भासते अर्थात् शाब्दबोधविषयो भवति। इत्यत्र नास्ति सन्देहः। अत एव तत्स्वरूपविषये अस्माकं चर्चा उपपद्यते।

सुबन्तप्रातिपदिकार्थस्य कारकस्य स्वरूपविषये सर्वप्रथमं पतंजलिकृतम् सुविशदं विवेचनं द्रष्टव्यम् इति विचार्य अग्रेसरामः। इदं च पतंजलिव्याख्यातम् कारकार्थस्वरूपम् (परिभाषा वा) मुनित्रयमतप्रतिनिधित्वेन स्वीकार्यम्। इत्थं पाणिनिकात्यायनपतंजलिमते "क्रियाजनकता" "क्रियासाधकता" कारकपदार्थः सैव साधकता उक्तशाब्दबोधे सुबन्तपदात् प्रातिपदिकार्थरूपेण जायते ज्ञायते च इति मुनित्रयाभिमतम् इति निष्कर्षः ज्ञातव्यः।

इयं साधकता व्यक्तिरूपप्रातिपदिकार्थद्रव्यादिनिष्ठा वर्तते। अत एव यावत् व्यक्तिरूपः प्रातिपदिकार्थः बुद्धौ नोपस्थितः तावत् तन्निष्ठा क्रियाजनकता क्रियासाधनता वा ज्ञातुं न शक्या इति तथ्यमपि अस्मिन् प्रसंगे स्मरणीयं विद्यते। व्यक्तिश्च कदाचित् द्रव्यरूपे कदाचिच्च चेतनपुरुषरूपे चेतनप्राणिरूपे तिष्ठति—इत्यन्यदेतत्।

परंतु भाष्यमतानुगामी सन्नपि आचार्यो भर्तृहरिः अनया कारकपदार्थस्य परिभाषया नातुष्यत्। यतः क्रियाजनकतारूपे धर्मे बुद्धे सति सद्य एव श्रोतुश्चित्ते इयं जिज्ञासा समुदेति यत्—अस्मिन् प्रातिपदिकार्थे क्रियाजनकता कथमायाता? अस्याः श्रोतुर्जिज्ञासायाः समाधानस्य एक एव उपायः आचार्यस्य मते अवशिष्यते स च कारकपदार्थः शक्तिरूपः इति श्रोतुः ज्ञानम् एव सः उपायः येन ज्ञातेन इदं स्पष्टं भवति यत् एतेन शक्तिरूपेण कारकार्थेनैव अस्मिन् द्रव्ये क्रियाजनकता उपपद्यते।

यद्यपि "क्रियान्वयित्वं कारकत्वम्" इत्यभिप्रायः श्रीभट्टोजिदीक्षितस्य इति लिखितरूपेण न प्राप्यते तथापि श्रुतिपरंपरया दीक्षितः अस्य मतस्य पोषकः इति मत्वा नागेशः तत्र अरुचिं प्रदर्शयन् युक्त्या तस्य खण्डनं करोति। उपर्युक्तमतस्य दीक्षितमतत्वसाधने प्रबलाः युक्तयः दृश्यन्ते, यद्बलात्

निःसन्दिग्धं दीक्षितमहाशयः कारकस्य लक्षणम् क्रियान्वयित्वमेव वांछति इति साधयितुं सुशकम्। अस्य मतस्य मंजूषाग्रन्थे यत्र खण्डनं कृतं वर्तते तत्र टीकाकर्त्रा पण्डितवैद्यनाथपायगुण्डेमहोदयेन इदं खण्डनीयं मतं श्रीभट्टोजिदीक्षितस्य इति स्पष्टीकृतम्। कारकविषयमधिकृत्य चर्चायां श्री दीक्षितः, क्रियान्वयित्वं कारकत्वस्य स्वरूपभूतयोग्यता अथ च तदेव लक्षणमस्ति कारकस्य इति अप्रत्यक्षरीत्या प्रतिपादितवान्।

इत्थं कश्चित् विद्वान् स्वमतं प्रतिपदोक्तशब्दैः अप्रकाशयन्नपि श्रुतिपरंपरया तस्य मतविशेषस्य कर्ता सिद्ध्यति यथात्र श्रीदीक्षितः अस्य कारकलक्षणस्य कर्ता। एवमेव अद्यत्वे श्रीदीक्षितकृतशब्दकौस्तुभस्य कश्चिदंशः अप्राप्तः एव-तत्रापि अस्य मतस्य उल्लेखः श्रीदीक्षितेन कृतः स्यात् यः साधनाभावात् अस्माभिरद्यापि न ज्ञायते परंतु श्रुतिपरंपरया ज्ञातत्वात् इदं निःसन्दिग्धं दीक्षितमतमिति स्वीकृत्य तद्विरोधं दर्शयति नागेशः।

## श्रीदीक्षितमते प्रथमो दोषः

यत्र कारकाणां भावनान्वयः इदं वाक्यम्, सर्वसम्मतप्रयोगरूपे मान्यं भवति तत्र इदानीम् कारकस्य क्रियान्वयित्वात् क्रियान्वयिनां क्रियान्वयः इति ईदृशः पर्यायप्रयोगोऽपि स्वीकार्यः स्यात्। स च स्वीकारः उक्तरीत्या पुनरुक्तदोषग्रस्तः अत एव च असंगतिपूर्णश्च।

**द्वितीयस्तु दोषः** अयमेव यत्—एतस्मिन् कारकलक्षणे स्वीकृते सति कारकाणां भावनान्वयः अस्य वाक्यार्थस्य स्थले अपेक्षिता उद्देश्यविधेयभाव-प्रतीतिः दुर्लभा भविष्यति। अत्र कारकत्वमुद्दिश्च भावनान्वयत्वं विधीयते। अस्मिन् मते उद्देश्यकोटौ एव क्रियान्वयित्वस्य ज्ञानेन तस्मिन् ज्ञाते (उद्देश्यभूते अर्थे) पुनः क्रियान्वयनस्य कथनम् असंगतम् इति स्पष्टमेव।

अधिकरणस्य कारकत्वेन क्रियान्वयः इति भवदीय व्यवहारासंगत्यापत्तेश्च इति मंजूषायाम् नागेशभट्टः। इमां पंक्तिम् रचयन् नागेशः श्रीदीक्षितकौण्डभट्टयोः इदं पूर्वोक्तं प्राचीनोक्तं कारकमतम्ः क्रियान्वयित्वं कारकत्वम् इतिरूपम् खण्डयति। एतन्मतस्वीकारे तु अधि ..... क्रियान्वयः इति स्थाने अधिकरणत्वेन क्रियान्वयिनां क्रियान्वयः ईदृशः अन्वयः संभवति यस्य व्याख्या प्राचीनैरपि अशक्या भविष्यति। अत एव उक्तदोषत्रयघटितत्वात् क्रियान्वयित्वं कारकत्वम् इति मतम् अस्वीकार्यम्।

अनया दृष्ट्या क्रियान्वयित्वरूपः अर्थः न कारकलक्षणरूपः अपितु स अर्थः तात्पर्यकथनरूपः निष्कर्षकथनरूपः फलरूपः अभिमतः इति स्वीकारे गुणः इत्यपि प्रेरयति—नागेशः।

श्रोता जानाति यत् प्रातिपदिकार्थत्वेन ज्ञातः अयम् (कारकपदार्थः) कारकार्थः, व्यक्तिद्रव्यान्यतरनिष्ठः। तत्र अर्थे एवंविधाशक्तिः वर्तते याम् वैयाकरणाः कारकरूपेण परिचिन्वन्ति या च शक्तिः संबद्धक्रियायाः निष्पत्तिं च कर्तुं समर्था भवति। अत एव अस्याः कारकरूपेण ज्ञातायाः शक्तेः कारणात् श्रोतुश्चित्तं क्रियाजनकतायाः उपपत्तिम् अनुभवति। उक्तजिज्ञासायाः समाधानं च अधिगच्छति। एवं च कारकार्थः शक्तिस्वरूपः एव वाक्यार्थघटकैः अन्यैः पदार्थैः सह प्रातिपदिकार्थरूपेण श्रोतुश्चित्ते प्रकाशते। येन शक्तिसहकृता मुनित्रयोक्ता क्रियासाधकता क्रियाजनकता वा सूपपन्ना भवति श्रोतुश्चित्ते। इत्थं भाष्यकारादिभिः क्रियाजनकतयैव सह अस्याः क्रियाजननसमर्थशक्तेरपि उल्लेखः कर्तव्यः आसीत् इति परिष्कृतस्य उक्तस्य मतस्य आग्रही आचार्यो हरिः मन्त्रयते।

क्रियान्वितत्वं कारकत्वम्—इति मतेऽपि क्रियान्वयिपदार्थे शक्तिरेव उक्तरीत्या कारकपदार्थो मन्तव्यः वाक्यपदीयग्रन्थस्य तृतीयकाण्डे दिक्समुद्देशे हरिःकारकत्वमधिकृत्य विचारमुपन्यस्तवान्—अनुभूयमानस्य विश्वस्य (ब्रह्माण्डस्य) जगत्प्रपंचस्य (सकलव्यवहारस्य) उपपत्तये अन्यैः तत्त्वैः सह दिक् नामकम् एकं विभु तत्त्वम् अवश्यं स्वीकार्यम् इति अस्मिन् प्रकरणे आचार्यो हरिः उपदिशति।

अयं पौरस्त्यः अयं पाश्चात्यः अयमग्रस्थः अयं पृष्ठस्थः इत्यादिरूपाः अपारमार्थिका व्यवहाराः दिक्तत्त्ववशादेव कर्तुं शक्यन्ते। दिक्शक्तिरूपार्थस्य स्वीकृतिं विना आचार्यः न कमपि हेतुं पश्यति यमाश्रित्व इमे परस्परविरुद्धाःपूर्वोक्ता व्यवहाराः एकस्यैव वस्तुनः (अनेकेषां च कृते) उपपादयितुं शक्याः स्युः। अत एव दिक्नामकं तत्वम् एकम् विभु च एतादृशापारमार्थिकव्यवहारोपपादकं स्वीकृतं सत् तदेव विभिन्नद्रव्यनिष्ठशक्तिभेदम् उपपादयत् द्रव्यनिष्ठक्रियाजनकतां साधयति। इदमेव तात्पर्य विशदीकृत्य अग्रिमा चर्चा प्रवर्तते यथा।

## दिक्शक्तिरेव कारकशक्तिः

एकमेव वस्तु कदाचित् पौरस्त्यम् कदाचिच्च तद् विरुद्धंपाश्चात्त्यं

भवति—इदं व्यवहारसिद्धम् तथ्यम् परंतु तत्त्वभूतैकवस्तुविषये एवं पाश्चात्यम् पौरस्त्यमिति परस्परविरुद्धं विशेषणद्वयम् न संगच्छते। न वा उपपद्यते सामान्यदृष्ट्या। अत एव परस्परविरुद्धविशेषणविशेषितत्त्वादेव एकस्यैव वस्तुनः कृते उपर्युक्तः व्यवहारः अतत्त्वभूतः अपारमार्थिको वा कथ्यते। यानि वस्तूनि अधिकृत्य अयं व्यवहारो जायते घटते वा तेषु सर्वेषु वस्तुषु दिगाख्या (दिक् इति प्रसिद्धा) शक्तिः विद्यते। तस्याः शक्तेः विभुत्वात् लौकिकपदार्थेषु अनुभूयमाना तन्निष्ठा इयं शक्तिः एतादृशान् पौरस्त्यादीन् अपारमार्थिकान् व्यवहारान् तु निष्पादयत्येव सहैव सेयं दिगाख्या शक्तिः सकलपदार्थेषु सामर्थ्यरूपेण साधनरूपेण वा तिष्ठति यत्सामर्थ्यात् साधनाद्वा विभिन्नाः वस्तुकृताः क्रियाः घटिताः सन्ति।

तस्याः शक्तेरभावे अस्मिन् जडजगति संचलनात्मका व्यापाराः क्रिया वा घटितुं न शक्नुवन्ति। पदनिष्ठा कारकाख्या सैव शक्तिः कदाचित् परिभाषिककरणत्वरूपेण निमित्तेन संवलिता कदाचिच्च सम्प्रदानाख्यरूपेण अन्येन च रूपेण व्यापृता भवति। एवं करणत्वादिरूपनिमित्तभेदवशात् सा कारकाख्या शक्तिः करणादिकारकविशेषान् स्वभेदान् तत्तन्निमित्तानुसारेण अधिगच्छति। अत एव तृतीयादि-परस्पर-विरुद्ध-विभक्ति-सत्ता करणत्वादिशक्तिवैविध्यपोषिता स्वीकार्या भवति।

द्विजाय मोदको रोचते इत्यत्र द्विजरूपः पदार्थः एकतः रोचनक्रियासाधकशक्तिमत्त्वात् कारकम् इत्युच्यते अपरतश्च संप्रदान-परिभाषापरिभाषितत्वरूपनिमित्तभेदशालिन्या तयैव कारकाख्यशक्त्या अनुगतत्वाद् युक्तत्वाद्वा संप्रदानाख्यं कारकम् इत्युच्यते।

अत एव कारकविशेषसंप्रदानसंज्ञायुक्तः स द्विजपदार्थः फलतः द्विजपदं च "चतुर्थी संप्रदाने" इति पाणिन्यनुशासनेन चतुर्थ्यन्तं प्रयुज्यते।

इयमेव रीतिः विभिन्नविभक्तिबोध्यविभिन्ननिमित्तजविभिन्नविभक्ति-बोधसहकृतकारकत्वयुक्तपदार्थविषयेषु द्रष्टव्या। तत्र सर्वत्र क्रियाजनकत्वस्य निमित्तविशेषस्य च भानम् एतच्छक्तिवशादेव भवति इति आचार्यस्य हरेराशयो विद्यते। एवं च अस्माभिः गमादिधातुभिः अभिधीयमानाः सकला व्यापाराः क्रियाः वा द्रव्यनिष्ठैतच्छक्तिमूलका एव।

तत्तद्विभक्तिनिमित्तभेदात् परस्परभिन्नकारकसमर्थिताः व्यापाराः क्रियान्तर

साधकबोधका: भवन्ति एवं तासां विभिन्नक्रियाणाम् संपादकानि द्रव्याणि पदार्था वा तत्तत्कारकसंज्ञायुक्तानि युक्ता वा भवन्ति। इति आचार्यप्रतिपादिता सूक्ष्मा दृष्टि: अस्माकमभिनन्दनीयैव भवति।

विभक्तिभेदसंपादनाय द्रव्यादिनिष्ठशक्तिरिव केवलं ज्ञाता क्रियाजनकता क्रियासाधकता वा न प्रभवति। दिक्शक्तिं विहाय क्रियाजनकताम् क्रियासाधनतां च आवहन् अर्थ: कारकपदार्थ: इति मते तु परस्परविभक्तिभेदसिद्धये कारकत्वरूपे समाने अर्थे विद्यमानेऽपि सर्वासु विभक्तिषु भेद: करणादिकारकत्वविशेषवशात् अनुभूयते एव। तस्यैव भेदस्य सिद्धये अनेके उपाया: कर्तव्या भवन्ति। तदपेक्षया शक्तिरूपस्य कारकत्वमुद्दिश्य करणत्वादिनिमित्तकृततृतीयादिविभक्तिभेदस्य अधिकम् सफलत्वम् अनुभवसिद्धम्।

यानेन गच्छति ग्रामे गच्छति यागाय गच्छति इत्यादौ अनुभूयमानशाब्दबोधभेदसमीक्षया कर्मत्वाद्यर्थानां निमित्तानि कर्तुरीप्सिततमं कर्म इत्याद्यनुशासनोक्तानि अर्थस्वरूपाणि तत्त्वानि तदैव घटादिप्रातिपदिकार्थानाम् कर्मत्वं साधयन्ति यदा कर्मत्वादिसाधनात् पूर्वम् तेषु घटाद्यर्थेषु कारकत्वम् वर्तेत।

अन्यथा—पूर्वसिद्धकारकत्वाभावे न कोऽपि पदार्थ: कर्मत्वादिसंज्ञा: लब्धुं शक्नोति इत्यभिप्राय:। शक्तिसहकृतक्रियाजनकता-क्रियासाधकतावशादेव तृतीयादिविभक्तिभेद: अनुभूयते।

यद्यपि सर्वत्र यानादौ ग्रामादौ च क्रियासाधकता एकस्वरूपा एव। अयमस्ति महिमा शक्तिरूपकारकतत्त्वस्य।

कारके इति सूत्रस्य उभयविधपाठे (सप्तम्यन्तपाठे प्रथमान्तपाठे च) तस्य अधिकारसूत्रत्वम् अक्षुण्णम् अत एव अधिकारवशात् प्रथमं कारकत्वशक्तिमानेव विशिष्टै: परिभाषितै: हेतुभि: कोऽपि पदार्थ: कर्मत्वकरणत्वादिसंज्ञा: लभते। कर्तुरीप्सिततमं कर्मेत्यादीनि सूत्राणि कारकत्वमुद्दिश्यैव कस्यापि प्रातिपदिकार्थस्य कर्मत्वादि साधयन्ति।

इत्थं कर्मादिसंज्ञानां निमित्तभूता: अर्था:, अपरिहार्यतया क्रियाजननयोग्यां शक्तिम् धारयन्ति इति तु स्पष्टमेव भवति। सदैव क्रियाजनयोग्यशक्तिधारका: प्रातिपदिकार्था: पाणिन्युक्तकरणत्वादिरूपनिमित्तभेदवशात्

करणसंप्रदानादिसंज्ञककारकविशेषसंज्ञाः लभन्ते। फलतः तद्वाचकपदानि च करणत्वादिकारकविशेषसंज्ञाः लभन्ते (गौणदृष्ट्या) एवं च उक्तशक्तिरिव विभिन्नविभक्तिनिमित्तभूताः कर्मत्वादयः द्रव्ये पदार्थे वा तिष्ठन्त्येव। तद् द्रव्यं क्रियाजनकम् अत एव तत्र क्रियाजनकता। अत एव च तद् द्रव्यं पदार्थो वा कारकं भवति अथ च तदेव निमित्तभेदात् (कारकं सत्) कर्मकरणत्वरूपकारकत्वेन श्रोतुर्मनसि प्रकाशते। उक्तस्वरूपां शक्तिं विना ये प्रातिपदिकार्थेषु कारकत्वं कारकविशेषत्वं वा मन्यन्ते तेऽपि अयं पौरस्त्यः अयं पाश्चात्यः इत्याद्यपारमार्थिकव्यवहारोपपत्तये पदार्थेषु शक्तिविशेषं स्वीकर्तुं विवशाः सन्ति। एकस्मै कार्याय अनिवार्यतया ग्राह्या शक्तिः अपरस्मै कार्याय उपयोगिनी सिद्ध्यति (इत्थं कारकत्वप्रयोजिका शक्तिः करणत्वादिकारक विशेषोपपत्तये सारल्येन कल्पते इति वक्तुं शक्यते।)

इति चेत्तर्हि का हानिः न कापि हानिः प्रत्युत लाभः एव। एवं च "क्रियाजनकं कारकम्" इत्यादिपरिभाषायाः स्वीकारकैरपि अपारमार्थिक व्यवहारसिद्धये विवशतया स्वीकार्या भवति पदनिष्ठा शक्तिः शक्तिविशेषो वा। सा एव शक्तिः तैर्विवशतया स्वीक्रियमाणा कारकस्य स्वरूपं सत् उक्तनिमित्त-भेदकृतविभक्तिभेदोपपादिका भवति। अत एव च शक्तिस्वरूपकारकत्वस्वीकारे एव लाघवम्। अन्यथा शक्तिनिरपेक्ष क्रियाजनकतारूपकारकार्थस्वीकारे श्रोतुः मनसि अनुमानजन्यक्रियाजनकता अस्मिन् पदार्थे कथमागता? इति जिज्ञासा भविष्यति। तदुत्तरम् च शाब्दबोधविषयीभूतपदार्थबोधकाले पदार्थे अनुभूयमानविभिन्नक्रियाजनक-शक्तिग्रहणस्य भानम् अनुमित्या भवति इति इति स्वीकार्यं भविष्यति। तदनन्तरमेव विभक्तिभेदस्य निमित्तकृता उपपत्तिर्भवति।

शक्तिरेव कारकार्थः इति मते द्रव्यनिष्ठक्रियाजनकशक्तेः शब्दादेव बोधः तत्तत्प्रातिपदिकस्य जात्याद्यर्थैः सह शक्तिरूपकारकार्थेऽपि शक्तिगहः संकेतग्रहो वा भवति। अत एव अत्रत्यःशक्तिग्रहः शाब्दः न तु अनुमितिसिद्धः। एवं बोधे लाघवं स्पष्टतया प्रतीयते।

दिङ्मात्रेणोदाहृतम् शक्तिरूपकारकार्थनिरूपणम्, एवंविधविभक्ति-भेदोपपत्तये सापेक्षदृष्ट्या शीघ्रतरकारकपदार्थबोधसिद्धये च अत्यन्तमुपकारकं दृष्ट्वापि तस्य हरिकथनस्य उपेक्षा तत्र ताटस्थ्यं वा परवर्तिभिः दीक्षितादिभिः कृता (कृतं वा) नेयं शिष्टजनानुमोदिता रीतिः।

आचार्यहरिणा प्रदर्शितस्य कारकस्य समर्थनं वा खण्डनं वा दीक्षितशब्दरत्नकारयोः कृते आवश्यकं कर्तव्यमासीत्, यदि हरिमते इमौ विद्वांसौ दोषमेव पश्यतः न कमपि गुणम् अत एव तन्मतस्य चर्चा आभ्यां न कृता इति मन्यते चेत् तर्हि इममारोपं सुस्पष्टतया प्रकाश्य स्वदृष्टया दोषपूर्णाम् व्याकरणशास्त्रीयसामग्रीं दृष्ट्वा ताभ्यां तस्याः खण्डनम् अवश्यं कर्तव्यमासीत्।

एतच्च ताभ्यां न कृतम्। अनेन तयोर्मौनावलम्बनेन तौ मुनित्रयसम्मते कारकार्थे अन्धश्रद्धाम् अधत्ताम् इत्यपि साधयितुं शक्यम्। अत एव तौ मुनित्रयोक्तम् क्रियाजनकतारूपम् क्रियासाधकतारूपम् वा कारकत्वं समर्थयन्तो हरिमतस्थाम् न्यूनताम् महत्ताम् वा कथमपि न विमृशितवन्तौ इत्यनुमातुं शक्यम्।

परंतु एतद्विद्वद्द्वयीपरवर्ती नागेशभट्टः इमां हर्युक्ताम् रीतिम् अत्युपयोगिनीं मत्वा अथ च तत्पोषणस्थाने दीक्षितशब्दरत्नकाराभ्यां प्रदर्शिताम् उपेक्षां च दृष्ट्वा ताभ्यां कुपित इव हरिमतस्य समर्थनं प्रकाशनं च महता संरम्भेण कृतवान्।

अस्मिन् प्रकरणे नागेशीयविवेचनस्य उल्लेखः उक्तस्य शक्तिरूपकारकार्थसिद्धान्तस्य पिष्टपेषणमिव भविष्यति। तथापि वस्तुमाहात्म्यम् पुनरुक्तिदोषं न गणयति यथा श्रीविष्णोः एकेनापि नाम्ना इष्टसिद्धिसंभवेऽपि श्रीनारायणस्य अलौकिकमहिमवशात् तस्य सहस्रेण नामभिः स्तुतिः कृता वर्तते। अस्त्वेतत्।

नागेशः पूर्वोक्तमभिप्रायं विशदयन् कथयतिः द्रव्यगता पदार्थगता वा क्रियाजनकशक्तिरेव कारकरूपेण साधनरूपेण वा ज्ञायते। वाक्यार्थबोधसमकालमेव द्रव्यनिष्ठा क्रियाजननशक्तिरपि अस्मद्बुद्धौ स्थानं लभते। अस्मिन् मते अनुभव एव प्रमाणम् इति वदति नागेशः।

वाक्यार्थगत-शाब्दबोधविषयीभूतपदार्थबोधकाले न केवलं क्रियाजनकतायाः अपितु क्रियाजनकशक्तेरपि भानं भवति इति सूक्ष्मधियां शाब्दबोधपरीक्षकाणामनुभवः। यतः किमपि द्रव्यम् बोधविषयीभूतं सत् केवलं क्रियाजनकताम् प्रकाशयितुम् असमर्थम् भवति। यावत् तत् सिद्धं द्रव्यं शक्तिविशिष्टतया ज्ञातं न भवेत्। बुद्धेः इमां स्वभाविकीं प्रवृत्तिम् उपलक्ष्यैव सफल-सूक्ष्ममनोवैज्ञानिक इव नागेशः कारकस्वरूपशक्तिबोधविषये दृढतां धारयति।

अस्मद्बुद्धिः यदा उक्ताम् शक्तिम् प्रातिपदिकार्थत्वेन गृह्णाति तदा वाक्यार्थबोधकाले जायमानक्रियाजनकतायाः सिद्धिरपि तस्यां बुद्धौ जायते एव। सिद्धं द्रव्यं शक्तियुतं सदेव क्रियाजनकं भवति इत्यनुभववशात् तस्य द्रव्यस्य क्रियाजनकताहेतुं शक्तिं ज्ञात्वैव सा उपर्युक्ता अस्मद्बुद्धिः समाधानं निराकांक्षबोधं वा अनुभवति। जातिव्यक्तिरूपः प्रतीतः प्रातिपदिकार्थः सुबन्तप्रातिपदिकात् बोध्यते अतः उपर्युक्तायाः शक्तेः (क्रियाजनकशक्तेः) बोधः कारकसंज्ञकप्रत्ययैरेव भवति। अन्यदेतत् यत् ते कारकप्रत्ययाः द्योतकाः अपि संभवन्ति वाचका वा। ते च कारकार्थशक्तिरूपस्य प्रातिपदिकार्थस्य प्रसवे प्रामुख्येन कारणीभूता इत्यत्र नास्ति सन्देहः इति अस्ति नागेशस्य धारणा। स्वोक्तमते भाष्यकारस्यापि सम्मतिः इति दर्शयन् नागेशः कथयति। अनभिहिते सूत्रे भाष्ये "गुणा एव साधनम्" (कारकम्) इत्युक्तम्। गुणाः परतन्त्रा भवन्ति। एवं चात्र गुणशब्देन परतंत्रतारूपसमानस्वभाववशात् शक्तिरेव साधनत्वेन कारकत्वेन भाष्यकारेण कथिता इति नागेशस्य दृष्टिः। शक्तेरेव द्वितीयं नाम कारकम् साधनं वा इति अत्रत्यः अभिप्रायः। तथाहि सा शक्तिरपि शक्तिमतः अधीना यथा गुणाः गुणिनाम् अधीनाः सन्ति। गुणिनः अभावे का स्थितिः गुणानाम्? एवं शक्तिरूपः अर्थः एव गुणः। स एव साधनम् क्रियाजनकं क्रियासाधकं वा भवति इति उक्तभाष्यस्य आशयः नागेशसम्मतः वर्तते। अनया युक्त्या भाष्यकारोऽपि शक्तिमेव कारकार्थं मन्यते। इति साधितं नागेशेन।

"घटेन जलमाहर" "घटं पश्य" घटे जलं निधेहि, एषु त्रिष्वपि वाक्येषु समानाकारः कम्बुग्रीवादिमान् पदार्थः, आहरणादिविभिन्नव्यापाराः घटपदार्थ गतकार्यवैचित्र्यं च शब्दबोधविषयं भवति। समानाकार-कम्बुग्रीवादिमत् पदार्थबोधाय घट इत्यानुपूर्वी हेतुभूता परंतु कार्यवैचित्र्याय किमस्ति हेतु भूतम्? इति प्रश्नः उत्पद्यते।

कार्यवैचित्र्यं च त्रिषु वाक्यार्थेषु इत्थम् यथा प्रथमोदाहरणे घटपदार्थः क्रियायाः प्रकृष्टतमसाधनत्वेन, द्वितीये च स एव पदार्थः कर्तुरीप्सिततमत्वेन तृतीये च निधानक्रियाधिकरणत्वेन एवं कार्यवैचित्र्येण सहैव एकस्यैव कम्बुग्रीवादिमतः घटपदार्थस्य उपस्थितिर्भवति। श्रूयमाणकारणानाम् आहरणादिधात्वनुपूर्वीणाम् घट इत्यानुपूर्व्याः च अस्मात् कार्यवैचित्र्यात् भिन्नेषु अर्थेषु विनियोगस्वीकारवशात् परिशेषाच्च इमे कारकप्रत्यया एव अस्य

कार्यवैचित्र्यस्य उपपादनाय हेतुभूताः इति कथयितुं शक्यते। ते च एकविशंतिसंख्याकाः एकविंशतिविधम् कार्यवैचित्र्यं जनयन्ति येषां भेदानां बोधः विभिन्नविभक्तिभ्यः तत्रस्थितैकवचनादिभ्यः च भवति।

इत्थं कारकप्रत्ययाः कदाचित् एकम् अर्थविषेषम् कदाचिच्च तदतिरिक्तं विभिन्नम् अर्थविशेषम् विभिन्नवचन (संख्या) संवलितम् द्योतकतया वाचकतया वा प्रस्तुवन्ति।

वाचकतावादे कारकप्रत्ययार्थः विभिन्नविभक्त्यर्थरूपः एकत्वाद्यन्यम-संख्योपेतः सन् प्रकृत्यर्थे क्रियासाधकशक्तिरूपे अन्वयं लभते।

द्योतकतापक्षेतु अर्थः प्रातिपदिकादेव जायते। केवलं प्रातिपदिक निष्ठद्योत्यार्थनिरूपितशक्तिजागरणम् कारकप्रत्ययैः द्योतकैः क्रियते। इत्थं टा, भ्याम्, भिस् एते कारकप्रत्ययाः पाणिन्यनुशासनेन प्रातिपदिकार्थनिष्ठाम् क्रियायाः प्रकृष्टतमसाधनीभूताम् तृतीयाविभक्तिनाम्नीं "करणम्" इति विशिष्ट नामधेयं दधतीम् कारकनाम्नीम् द्रव्यनिष्ठाम् शक्तिमेव प्रत्याययन्ति शाब्दबोधकाले। एवमेव ङे भ्याम्, भ्यस् इत्यादि कारकप्रत्ययाः उपर्युक्तप्रकारभिन्नाम् एव द्रव्यनिष्ठां शक्ति बोधयन्ति।

विभिन्नकरणत्वसंप्रदानत्वरूपनिमित्तकृतभेदात् परस्परम् एकविंशतिविभक्त्यन्तपदेषु विरुद्धः करणत्व-संप्रदानत्वाद्यर्थभेदः जायते।

तथापि एतैर्विभिन्नैः निमित्तैः करणत्वादिभिः संपृक्तत्वेऽपि क्रियाजनन सामर्थ्यरूपा शक्तिः स्वरूपतः मूलतश्च एकैव। सा कदाचित् एकेन निमित्तेन संयुक्ता सती विभक्तिविशेषःकथ्यते। कदाचिच्च निमित्तान्तरवशात् अन्यैव विभक्तिः कथ्यते सा एव विशुद्धशक्तिः।

करणत्वादीनि तस्याः शक्तेः विशेषणानि इति नागेशस्य सविशेषम् अभिप्रायः। निमित्तवशात् वैविध्यं प्राप्ता इयम् एकैव द्रव्यनिष्ठा कारकशक्तिः क्रियासाधने योग्यान् परस्परभिन्नान् मार्गान् आश्रयति। कदाचित् बाणनिष्ठा सा शक्तिः करणार्थत्वं धारयन्ती हननक्रियां निर्वर्तयति। कदाचिच्च द्विजनिष्ठा संप्रदानाख्या सैव शक्तिः रोचनक्रियां संपादयति। इत्थं भिन्नम् आकारम् संख्यां च अपेक्ष्य तदनुप्राणिता द्रव्यनिठा शक्तिः एकापि निमित्तभेदात् अनेकाः, क्रियासाधनरूपम् एकम् अपि उक्तकरणत्वादिनिमित्तकृतवैविध्यवशात् अनेकम् कारकपदम् तृतीयादिविभिन्नकारकसंज्ञाः दधती अनुभूयते इति निष्कर्षः जायते।

एतादृशे कारकार्थ-कारकभेदार्थ-ज्ञानेनैव उपर्युक्तेषु त्रिष्वपि (घटेन जलमाहर, घटं पश्य, घटे जलं निधेहि एषु) वाक्येषु जायमानस्य कार्यवैचित्र्यानुभवस्य उपपत्तिः अत्यन्तं सरलतया भवति।

प्रातिपदिकार्थरूपेण बोधस्तु पदार्थस्यैव भवति तन्निष्ठानाम् उपाधीनाम् जात्यादीनाम् कारकार्थशक्तेश्च तेन सह संबन्धः शाब्दबोधकाले अनुभूयते। एवं च एक एव शब्दः शक्तिमपि शक्तिमन्तं चापि कथं कथयेत्? इत्याशंकायाम् गौणं समाधानं प्रस्तुवन् नागेशः कथयति। “शक्तिशक्तिमतोरभेदः” इत्ययमपि एको न्यायः। यथां दण्डो घटसाधनम् इति प्रयोगः। अयं प्रयोगः साधुः मन्यते। तत्रेयमाशंका दण्डः साधनवान् इति प्रयोगस्तु भवितुं शक्नोति। यतः दण्डे तादृशी शक्तिर्वर्तते यामाश्रित्य क्रिया विशेषस्य सः दण्डः साधनं भवेत्। अतः दण्डः साधनवान् (साधनशक्तिमान्) तु अस्त्येव परंतु दण्डः साधनम् इत्यपि श्रूयते। तत्र या क्रिया सा, साधनयोग्यशक्तिपदार्थस्य दण्डरूपे शक्तिमत्पदार्थे अस्ति। अतः शक्तिशक्तिमतोरभेदोपचार इति धिया अन्वयः। शक्तिमान् पदार्थः साधनवान् दण्डः इति बोधोऽपि तत्र सुतरां भवत्येव। एवमेव गौणरीत्या शक्तिमेव कारकार्थं मत्वापि कारकशब्देन शक्तिमतः विशिष्टस्य प्रातिपदिकार्थस्यैव बोधः।

इयं गौणी रीतिः नागेशाम न रोचते। साधनीभूतकर्मत्वादिवशात् वैविध्यं प्राप्ता द्रव्यनिष्ठा कारकाख्या शक्तिः शक्तिमतः प्रातिपदिकार्थात् भिन्ना सती अपि तस्यैव प्रातिपदिकस्य विशेषणीभूय बोधविषया भवति तादृशशक्तिग्रहणवशात्। एतत् नागेशस्य स्वीयं मतम् वर्तते। एवं च कारकार्थः शक्तिः इति स्वीकारे न दोषः। करणादिभेदकृतविभिन्नतावशात् विभिन्नरूपेण स्थितायाः तस्याः शक्तेः विशेषणस्वभावकत्वात् विशेष्ये प्रातिपदिकार्थे अन्वयेन तत्तच्छक्तिविशिष्टः प्रातिपदिकार्थः इति बोधो जायते। सर्वस्थलेषु जायमानस्य अनुभूयमानस्य बोधस्य उपपत्तिश्च जायते।

## कारकार्थशक्तिस्वीकारे संभावितं दोषं पूर्वपक्षत्वेन स्थापयति नागेशः

कारकार्थः शक्तिः इति स्वीकारे “घटं स्मरति” ”घटं करोति” ब्राह्मणाय घटं ददाति”’ एषु त्रिष्वपि वाक्येषु त्रयोऽपि पदार्थाः प्रथमे वाक्ये घटपदार्थः, द्वितीये घटपदार्थः, तृतीये ब्राह्मणपदार्थः, स्वगतशक्तिद्वारा स्मरणादिक्रियाः

निष्पादयितु न समर्थाः इति दृश्यते यतः प्रथमोदाहरणे घटस्य नष्टत्वात् स्मृतिमात्रावस्थायित्वात् कस्मिन् शक्तिःतिष्ठेत् या स्मरणक्रियां जनयेत्। एवमेव घटं करोति इत्यत्र अज्ञातस्य घटपदार्थस्य करोतिक्रियार्थनिरूपितकर्मत्वं न सिद्ध्यति। जात एव घटः तादृशक्रियासंपादने शक्तः न तु जननात् प्राक् इति। एवमेव सन्निहिते एव ब्राह्मणे सति ब्राह्मणपदार्थनिष्ठा शक्तिः जननक्रियां संपादयितुं शक्नोति, नान्यथा। अत्र ब्राह्मणस्य सन्निधिरेव नास्ति अतः दानक्रियासंपादनसाधनभूता शक्तिः क्व तिष्ठेत्? एवं त्रिष्वपि वाक्येषु शक्तिपदार्थसत्ताया अभाववशात् विभिन्नकारकविभक्तिप्रयोगः दुर्लभः भविष्यति व्याख्यातुम्। एतादृशाःप्रयोगाः शिष्टैः साधुत्वेन स्वीकृताः सन्ति अत एव ते व्याकरणशास्त्रस्य प्रक्रियाया लक्ष्यभूताः सन्ति। परंतु कारकार्थशक्तिस्वीकारे इमानि त्रीणि एतादृशानि अन्यान्यपि शिष्टवाक्यानि उपपादयितुं न शक्यानि इति पूर्वपक्षं संस्थाप्य नागेशः तस्य उत्तरप्रदाने समाधाने वा निम्नांकितरीत्या प्रयतते।

शाब्दबोधे प्रामुख्येन बोधविषयीभूतः पदार्थः बौद्धः (बुद्धिशरीरकः) एव भवति। स च घटरूपः अर्थः विनाशे च निर्माणात् प्रागपि च बौद्धरूपेण श्रोतुश्चित्ते वर्तते एव। एवमेव शरीरदृष्टया असन्निहितोऽपि ब्राह्मणः श्रोतुश्चित्ते दानक्रियासंपादनशक्तिमत्त्वेन बौद्धरूपे उपस्थित एव वर्तते।

एवं च त्रिष्वपि वाक्येषु बौद्धपदार्थबोधावलबंनेन द्रव्यनिष्ठा ततत्क्रियासाधनीभूता शक्तिर्वर्तते सैव कारकार्थ इति नागेशीयं मतम् अक्षुण्णं तिष्ठति।

एतादृशस्थलेषु कारकत्वसिद्धये भूषणकारेणापि बौद्धपदार्थसत्तायाः स्वीकारः कृतः वर्तते तथापि शाब्दबोधः सदैव बौद्धपदार्थस्यैव भवति बाह्यार्थसत्तामात्रशालिपदार्थस्यैव न भवति। भाषाप्रयोगकाले बाह्यार्थसत्तायाः न किमपि अनिवार्यम् हेतुत्वम्। बौद्धार्थसत्तयैव शाब्दबोधः बाह्यार्थोऽपि बौद्धार्थरूपं धारयित्वा एव शाब्दबोधविषयो भवति इत्यादि नागेशव्याख्यानम् अति सुललितम् तर्कानुप्राणितम् विशदं चास्ति इति धिया भूषणकारापेक्षया महत्त्वशालि इति विचार्य तदत्र स्थापितं वर्तते।

## अथ संबोधनार्थविचारः

स्वपूर्ववर्तिनाम् आचार्याणाम् (कारकार्थविषये) मतसंशोधनपूर्वकम् हरिसम्मतं द्रव्यनिष्ठं शक्तिरूपं कारकार्थं स्थापयन् नागेशभट्टः

संबोधनपदार्थविषयकम् महत्त्वपूर्णं रोचकं च वर्णनं प्रस्तौति। यथा—प्रातिपदिकस्यैव अर्थः विभक्तिघोत्यः संबोधनार्थः अस्ति इति घोषयति नागेशः। कस्यचित् पूर्वसिद्धस्य उद्देश्यावस्थस्य वस्तुनः पदार्थस्य वा अभिमुखीभावः एव संबोधनपदस्य अर्थः अस्ति इत्यस्ति अभिप्रायः नागेशस्य। वक्ता, ईदृशेन संबोधनार्थेन श्रोतुरभिमुखी-भावरूपसाधनेन स्वेष्टाम् श्रोतृकर्तृकाम् कार्यविशेषविषयिणीं प्रवृत्तिं वा निवृत्तिं वा अभिलषति। अस्यां स्थितौ संबोधने चेति सूत्रस्य रचयितुः पाणिनेः मनसि इदं विवक्षितमासीत् यत् यदा वक्ता प्रातिपदिकस्य जात्यादिभिरर्थैः सह एवंविधम् प्रवृत्तिनिवृत्त्यन्यतरफलकम् श्रोतुरभिमुखीभावम् वक्तुमिच्छति तदा संबोधनविभक्तिः प्रथमा साधुर्भवति। संबोधने च इति पाणिनिसूत्रस्य अयमेव अर्थःबोध्यः इति नागेशभट्टाशयस्य स्वरूपं विद्यते।

नागेशभट्टप्रतिपादितस्य अस्य संबोधनार्थस्य ग्राह्यतायाः परीक्षणार्थम् कतिपयसंबोधनविभक्त्यन्तवाक्यानि कतिपयसंबोधन-विभक्तिरहितानि च शिष्टस्वीकृतानि वाक्यानि उपस्थाप्य वयं विमृशामः। अस्मिन् मते संबोधनार्थघटकः अभिमुखीभावः स्वीकृतः वर्तते। तस्मिन् अभिमुखीभावे परीक्षकत्वेन अस्माभिर्ध्याने दत्ते सति निर्विवादतया इदं सिद्धयति यत् यत्रशिष्टजनैः संबोधनविभक्तेः प्रयोगः साधुःअभिमतः तत्र वाक्यार्थे प्रथमाख्यसंबोधनविभक्तिप्रत्ययेभ्यः प्रागेव प्रातिपदिकस्य अर्थः सिद्धावस्थायामेव तिष्ठति। परंतु यदि तादृशः प्रातिपदिकार्थः साध्यावस्थापन्नः स्यात् तदा तत्र शिष्टजनैः सबोधनविभक्तेः प्रयोगः नैव क्रियते। अथ च तत्र कृतः संबोधनविभक्तिप्रयोगः शिष्टैः साधुर्न मन्यते।

अग्रे प्रस्तोष्यमाणैः उदाहरणैः अन्वयव्यतिरेकभावेन परीक्षितैः उद्देश्यभूतस्य सिद्धपदार्थस्य अभिमुखीभावप्रधान एव संबोधनार्थः शिष्टजनानुमोदितः इति सिद्धयति।

कदाचित् राजपुत्रस्य कुमारावस्थायाम् नृपत्वसिद्धेः प्राक् तमुद्दिश्य "राजन् युध्यस्व" इति प्रबोगः शिष्टजनानाम् अभिमतो नास्ति। अपितु नृपत्वस्य सिद्धावस्थायामेव तं नृपम् उद्दिश्य तादृशः प्रयोगः साधुत्वेन शिष्टैः परिगृहीतो वर्तते।

द्वितीयम् चोदाहरणम्—'राजा भव युध्यस्व' इति अत्रापि असिद्धायाम् राजावस्थायाम् संबोधनविभक्त्यभावः पूर्वोक्तमेव संबोधनार्थं द्रढयति।

अनयोः उदाहरणयोः सूक्ष्मपर्यालोचनेन इदं निष्कृष्टं भवति। कुमारावस्थायाम् यदा राजरूपः अर्थः सिद्धः नास्ति तदा सिद्धस्य उद्देश्यभूतस्य अर्थस्य अभावे नागेशसम्मता अभिमुखीभावरूपसंबोधनार्थसत्ता नोपपद्यते। उक्तोदाहरणे तादृशसत्ताया अभावःशिष्टजनानुमोदितः इत्यपि सविशेषं ध्यातव्यम्।

अत एव च तस्मिन्नुदाहरणे संबोधनविभक्तिस्थाने केवलं प्रथमा विभक्तिरेव शिष्टजनानुमोदिता वर्तते। एवमेव यत्र संबोध्यः राजपदार्थः सिद्धः वर्तते तत्र न केवलं शुद्धा प्रथमा प्रत्युत तत्र संबोधनाख्या एव प्रथमा अथवा संबोधनविभक्तिरेव भवति।

एवं पूर्वविवेचनस्य निष्कर्षः आयाति यत्र यत्र संबोध्यत्वेन अभिप्रेतस्य अर्थस्य सिद्धरूपेणंभानं तत्रैव संबोधनविभक्तिः इति अन्वयः, एवमेव यत्र यत्र च संबोध्यत्वेन विवक्षितस्य अर्थस्य सिद्धत्वं सिद्धावस्था वा न उच्यते तत्र तत्र संबोधनविभक्त्यभावः इति व्यतिरेकः।

एवम् अन्वयव्यतिरेकाभ्याम् उद्देश्यावस्थस्य प्रातिपदिकार्थभूतस्य क्रियाविशेषसंबद्धप्रवृत्तिनिवृत्त्यन्यतरफलकस्य सिद्धस्यैव द्रव्यस्य अभिमुखीभावः संबोधनार्थः इत्याञ्जस्येन सिद्धयति।

एतादृशस्य संबोधनार्थस्य स्वीकारेणैव “इन्द्रशत्रुर्वर्धस्व” इति स्थले इन्द्रशत्रुशब्दे संबोधनविभक्तेः प्रयोगः न भवति। प्रत्युत केवलं प्रथमैव भवति। अस्य वाक्यस्य प्रयोगकाले इन्द्रस्य शातयितृरूपः अर्थः सिद्धः नास्ति। अत एव तत्र वृत्रासुरं प्रति कथ्यते प्रथमं भवान् इन्द्रस्य शातयिता (विनाशकः) भवतुततः वृद्धिव्यापारथुक्तः। एवं च वाक्यप्रयोगकाले वृत्रासुरस्य, इन्द्रस्य शातयितृत्वाभावेन सिद्धपदार्थत्वाभावेन संबोधनविभक्तिर्न प्रयुज्यते। अत्र “वर्धस्व” इति प्रतिपाद्यप्रवर्तनायाः उद्देश्यभूतः पुरुषः इन्द्रस्य शातयितृत्वेन फलतः इन्द्रशत्रुत्वेन युक्तः नास्ति। अत एव सिद्धः नास्ति। अत एव च अस्मिन्नुदाहरणे उक्तसंबोधनार्थस्वीकृतिम् नागेशाभिमतसंबोधनार्थं च अनुसृत्य संबोधनविभक्तेरभावः सकलविदुषामभीष्टो भवति।

## प्राचीनमतविमर्शः प्राचीनमतखण्डनं च

एतत्प्रसंगे प्राचीनवैयाकरणैः प्रतिपादितस्य मतद्वयस्य उल्लेखः नागेशभट्टेन कृतो वर्तते। अथ च प्रदर्शितेऽस्मिन् मतद्वये

आवश्यकदीर्घताशालित्वम् परंपरानुगतसंबोधनार्थराहित्यं च आपादितम् वर्तते नागेशेन ।

वैयाकरणसिद्धान्तलघुमञ्जूषाया: कलाख्यटीकाया: कर्ता प्रतिपादयति यदेतत् मतद्वयं दीक्षितादीनामिति । तत्स्वीकृत्य नागेशस्य युक्ति: इत्थं वर्तते यथा–

दीक्षितादीनां मतानुसारेण संबोधनार्थ: न प्रकृते: (प्रातिपदिकस्य) अर्थ: अपितु स: विभक्तिप्रत्ययानामेव अर्थ: स्वीकार्य: । अयं च प्रत्ययार्थभूत: संबोधनार्थ: अवश्यकर्तव्यत्वविषयकत्वज्ञानानुकूलज्ञापनम् एव । एतज्ज्ञापनायैव संबोधनविभक्ते: प्रयोग: क्रियते । इति उक्तैतन्मतद्वयस्य आशय: विद्यते ।

मतद्वयमिदं स्वमज्जूषाग्रन्थे उपन्यस्य विवेचयति नागेश: ।

उक्तमते क्रियाविशेषे प्रयोक्तु: **इच्छाविषयताकं यत् ज्ञानम् तस्य ज्ञानस्य जननं (श्रोतृबुद्धौ स्थापनम्) संबोधनार्थ: विद्यते ।** एतादृशं ज्ञानं तु संबोधनरहितपदघटितवाक्येऽपि अनुमित्या (श्रोतृकर्तृकया) श्रोतुश्चित्ते जायते एव । अत: एतादृशं ज्ञानं संबोधनविभक्तिलभ्यमेव इति कथनं युक्तिविरुद्धम् । तादृशज्ञानस्य संबोधनार्थकत्वस्वीकारोव्यर्थः गौरवं च यत: सकलस्यापि वाक्यमात्रबोधितस्य वाक्यार्थस्य वक्तृप्रयुक्तस्य ज्ञानं श्रोतुर्बुद्धौ संक्रमेत् एतदर्थमेव वक्ता वाक्यप्रयोगं करोति । एवं च सकलवाक्यार्थनिष्ठस्य अर्थस्य केवलसंबोधनार्थता कथमुपपाद्या भवेत् केनापि वक्त्रा श्रोतारं प्रति प्रेषितवाक्यार्थे स्थित: वक्तुरभिप्राय: तस्य वक्तु: इच्छाया विषय: इति अस्माभिर्ज्ञायते एव । एतद्वैपरीत्ये यदि वाक्यार्थविशेष: श्रोतुर्बुद्धौ स्थाप्यत्वेन वक्तुरभीष्टो न भवेत् तर्हि वाक्यार्थविशेषबोधकस्य वाक्यस्य प्रयोग: वक्त्रा केन हेतुना क्रियते ? इत्यस्य उत्तरं दुर्लभमेव भविष्यति । वाक्यस्य श्रवणोत्तरम् प्रयोज्यस्य प्रवृत्ति: निवृत्ति: वा (क्रियाविशेषंप्रति) प्रयोक्तु: (वक्तु:) अभीष्टा भवति । अत: अन्यवाक्येभ्य: संबोधनपदस्य किं विशिष्टम् अतिरिक्तं महत्त्वम् ? यत: सकलवाक्यबोध्ये प्रेषणीये अर्थे प्रयोक्तु: इच्छाघटितज्ञानवत्त्वं वर्तते एव । संबोधनपदघटितवाक्ये एव तज्ज्ञानम् अभीष्टं नान्यत्र इति व्यवस्थाया अभावात् अस्मिन् मते संबोधनपदस्य उक्तदीक्षितादिमतस्वीकारे वाक्यान्तरबोधवैलक्षण्यं प्रति हेतुत्वं नायाति ।

अत एव अत्र मते अरुचिं प्रदर्श्य नागेशेन उपर्युक्तं स्वीयं मतम्

प्रकाशितम्। क्रियाविशेषं प्रति प्रयोज्यस्य प्रवृत्तिर्वा निवृत्तिर्वा नागेशोक्तसंबोधनार्थसंबद्धप्रवर्तनाव्यापारेणैव सिद्ध्यति। तदर्थम् संबोधनार्थे प्रयोक्तुः इच्छाविषयता इति रेखांकितस्य अंशस्य निवेशः व्यर्थः एव। प्रयोक्तुः इच्छाविषयकज्ञानस्य अनुमानेनैव जायमानत्वं स्वीकृत्य नागेशः स्वमते लाघवं अनुभवानुकूलतां च दर्शयति।

निरुक्तेऽस्मिन् प्राचीनसम्मतसंबोधनार्थे उक्तसंबोधनार्थस्वरूपतात्पर्यस्य ग्राहकः "हे" इत्यादि शब्दानां प्रयोगः आवश्यकः वर्तते। उक्तश्च संबोधनपदार्थः ज्ञापनस्वरूपः यदा अचेतने संबोध्ये अर्थे अन्वितो भवति तदा तत्र संबोधनार्थस्य उपपत्तये अचेतने संबोध्ये अर्थे चेतनस्य संबोध्यस्य अर्थस्य आरोपः क्रियते। एवं कमपि जडं चेतनं वा संबोध्यम् अभिमुखीकृत्य तस्य संबोध्यस्य कृते अज्ञातार्थज्ञानानुकूलो व्यापारः एव संबोधनपदस्य अक्षरार्थो ज्ञातव्यः। फलतः तादृशव्यापारजन्यज्ञानाश्रयत्वम् संबोध्यत्वम् तस्य संबोध्यस्य अन्वयः त्राणादिक्रियाविशेषेण सह जायते। संबोध्यनिष्ठं ज्ञानं यस्य विषयभूतम् तस्मिन् ज्ञेये (प्रवर्तनारूपे) अर्थे एव संबोध्यस्य आकांक्षा सुस्थिरा भवति। अत एव "राम त्रायाताम्" अस्मिन् प्रयोगे रामरूपसंबोधनार्थस्य प्रवर्तनाविषय-त्राणरूपक्रियार्थस्य च परस्परम् अन्वये जाते संबोधनविषयरामसंबन्धि प्रवर्तनाविषयकं त्राणम् इति शाब्दबोधः जायते।

पूर्वसूचनानुसारेण रामरूपप्रकृत्यर्थे प्रत्ययार्थस्य अन्वयो जातः। संबोधनस्य उक्तार्थकथनप्रसंगे "अभिमुखं कृत्वा" इत्ययमंशः निवेशितः आसीत्। यस्य तात्पर्यम् इत्थम्—वक्ता स्ववचनग्रहणाय संबोध्यं (श्रोतारम्) सादरं (स्वकथनश्रवणं प्रति) भावयित्वा तम् ज्ञाप्यार्थस्य बोद्धारं भावयति करोति वा। मुखपरावृत्त्यादि एव तस्य व्यापारस्य व्यञ्जकं तत्त्वम् इति विवेकः।

एवं प्राचीनमतं संस्थाप्य नागेशः कथयति—एतत्सर्वं प्राचीनाभिमतम् संबोधनार्थकथनम् हरिसदृशवैयाकरणमतापेक्षया फलविशेषं विना स्वरूपे विस्तृतम् तथा च हर्युक्तसंबोधनार्थगत-मूलभूततथ्यैःसह असंपन्नं च। हर्युक्तसंबोधनार्थ-क्रियार्थविनियोगपरः सिद्धवस्तुनः अभिमुखीभावः एतावन्मात्र एव। अस्य शरीरम् प्राचीनमतानुकूलसंबोधनार्थशरीरात् लघु अत एव एकमात्रालाघवेन पुत्रोत्सवं मन्यमानानाम् वैयाकरणानाम् कृते ग्राह्यतरं वर्तते। संबोधनविभक्तिः सु औ जस् तत्रैव भवति यत्र किमपि द्रव्यं सिद्धावस्थं सत् अवश्यमेव उद्देश्यावस्थं च भवेत्। अथ च उद्देश्यभूतस्य तस्य द्रव्यस्य

विनियोगः प्रवर्तनाविषयक्रियायाम् अवश्यं स्यात्। अत्रत्या संबोधनविभक्तिः सु औ जस् इत्यन्यतमरूपा सदैव द्योतिका एव वर्तते अन्यविभक्तिवत्। इत्यपि नागेशेन अस्मिन् प्रकरणे स्पष्टीकृतं वर्तते। उक्तश्च संबोधनार्थः प्रातिपदिकात् प्रातिपदिकार्थत्वेन जायते। स च विभक्तिद्योत्यः इत्यन्यदेतत्।

फलतः "राम त्रायताम्" इत्यत्र अस्मिन् वाक्ये अभिमुखीभवन् रामः यत्र उद्देश्यभूतः एवंविधम् प्रवर्तनाविषयभूतम् रक्षणम् इति शाब्दबोधः।

नागेशोल्लिखितदीक्षितमस्य तदुद्धृतहरिमतस्य च तुलनायां कृतायाम् अयम् निष्कर्षः आयाति यत् उक्तं हरिमतमनुसृत्य स्वीकृतः अभिमुखीभावः संबोधनार्थः तादृशः अर्थः वर्तते यादृशस्य अर्थस्य फलितार्थः एव दीक्षितादि-सम्मतः संबोधनार्थः इति।

एवं नागेशसमर्थिते हरिमतानुसारिसंबोधनपदार्थे अभिमुखीभावरूपे संबोधनपदस्य शक्तिः इति स्वीकारे अथ च उक्तरीत्या प्रवर्तनाव्यापारस्य स्वीकारे सकलकार्यनिर्वाहः भवति। एवं सत्यपि तादृश-दीक्षितादिसम्मत विस्तृत-शक्यतावच्छेदकनिरूपितशक्तेः संबोधनपदे स्वीकारेण व्यर्थं गौरवम्। एवं पूर्वोक्तदिशा अनेन एतन्मतद्वयापेक्षया नागेशमते लाघवगुणेन सहैव अभिमुखीभावरूपे अर्थे ज्ञाते सद्यः एव आकांक्षावशात् (किमर्थमभिमुखीभावः? इति जिज्ञासावशात्) श्रोतृबुद्धौ (संबोध्यपुरुषबुद्धौ) नागेशसमर्थितः संबोधनार्थः निर्विरोधं भवत्येव। अत एव निष्पक्षो नागेशः सूचयति—इदं दीक्षितादिमतम् आचार्यहरिपरंपराविरुद्धम् अनावश्यकगौरवदुष्टं च। अत एव सदोषत्वात् उपेक्ष्यम्। एवं च वैयाकरणपरंपरानुसारिमतस्य दीक्षितादिभिः अन्यथाकृतस्यापि उद्धारवशात् परंपराप्राप्तस्य अर्थस्य अनुकूलव्याख्यानेन सुरक्षीकृतत्वाच्च अस्मिन् प्रसंगे नागेशः संस्कृतव्याकरणस्य श्रेष्ठो व्याख्याता। इति सिद्ध्यति।

## संबोधनकारकस्य प्रथमाविभक्त्यन्तत्वम् कर्तृवाचकत्वं च

बृहद्वैयाकरणपरंपरा संबोधनेन सह कर्तृकारकस्य व्यवहारं करोति। अस्य तथ्यस्य आनुकूल्ये दीक्षितापेक्षया नागेशोक्तः संबोधनार्थः सापेक्षदृष्ट्या अधिकः समीचीनः। यतः नागेशोक्ते अर्थे उद्देश्यतायाः क्रियाविनियोगपरकतायाश्च बोधः आञ्जस्येन भवति यः बोधः तादृशस्थलपरीक्षया नितराम् आवश्यकः प्रतीयते। अत एव संबोधनार्थस्य एवं

कर्तृत्वस्वीकारादेव संबोधनार्थरूपस्य अभिमुखीभावसम्पन्नस्य प्रातिपदिकार्थस्य कर्तृवत् क्रियायामेव अन्वयः भवति। येन संबोधनपदे वार्तिककारमतोल्लिखित प्रथमायाः सिद्धिर्भवति। वार्तिककारश्च "तिङ्समानाधिकरणे प्रथमा" इति वार्तिकं पठति। तदर्थश्च तिङःयत् अधिकरणम् तस्मिन्नेव अधिकरणे स्थितः पदार्थः फलतः पदं प्रथमाविभक्ति लभते। गच्छतीत्यादौ तिङ्प्रत्ययः अन्यैः अर्थैः सह कर्तृरूपे अर्थे विहितः एवमत्र तिङ्प्रत्ययः कर्तृरूपमेव अर्थम् कथयति एवमत्र तिङ्समानाधिकरणता। नागेशव्याख्यया उक्तरीत्या अभिमुखीभावापन्नः प्रातिपदिकार्थः अपि कर्तृरूपताम् विनियोज्यक्रियाकारकत्वात् अभिदधात्येव एवं तिङ्समानाधिकरणत्वात् तादृशं कर्त्रर्थघटितसंबोधनपदम् प्रथमां लभते।

प्रतिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमा इति सूत्रे स्थितं मात्रपदं भाष्यकारेण प्रत्याख्यातं वर्तते। एवं मात्रग्रहणस्य प्रत्याख्याने स्वीकृते सति पंचकं प्रातिपदिकार्थः इति पक्षे अर्थपंचकमेव प्रातिपदिकार्थः तस्मादधिके कर्मादिरूपे प्रातिपदिकार्थे उपस्थिते सत्यपि प्रथमाया आपत्तिर्भवति तस्याः निरासाय "संबोधने च" इति सूत्रस्य ज्ञापकत्वं स्वीक्रियते। तथा च ज्ञापकरूपस्य अस्य सूत्रस्य अर्थः वक्ष्यमाणस्वरूपकः भविष्यति। यथा—जात्यादिकर्तृकारकान्तात् प्रातिपदिकार्थात् अधिके अर्थे प्रथमा चेत्तर्हि सा प्रथमा केवलम् संबोधनार्थरूपकारकार्थस्य आधिक्ये एव भवतु न तु कर्मत्वादिरूपे अधिके प्रातिपदिकार्थे सति सा भवति। एवं कर्मादिस्थलेषु प्रथमाया आपत्तिः दूरीभवति। मात्रपदप्रत्याख्यानस्थलीयः अयमाशयः अनया रीत्या कर्मादिकारकान् प्रथमाविभक्तेरनधिकारिणः उद्घोष्य सम्बोधनकारके प्रथमाविभक्तेः सिद्धिं फलतः कर्तृकारकतां च निःसंकोचं प्रकाशयति। कर्मादयोऽपि प्रातिपदिकस्यैव द्योत्यार्थाः अमादयः प्रत्ययाः द्योतकाः इति वादे एतत्सर्वं व्याख्यानं संगच्छते। प्रत्ययानां वाचकत्वे तु ततः स्वतन्त्रतया कर्मत्वादीनामुपस्थितिः इति तत्र ज्ञापकनिर्देश्यस्य उपर्युक्तस्य कर्मत्वादेः अर्थस्य प्रातिपदिकार्थत्वेन असिद्धस्य कर्मघटितवाक्यस्थलेऽपि प्रथमाविभक्ति-रूपदोषस्य आपत्तिर्न संभवति। कर्मत्वादीनाम् स्पष्टतः प्रातिपदिकार्थत्वाभावात्।

व्रजानि देवदत्त इति पदममूहे आचार्यो हरिः वाक्यत्वं तदाधारितां निघात(स्वर)सिद्धिं च मनुते। स्वकारिकायाम् सः सदैव संबोधनं क्रियाविशेषणमेव स्वीकृतवान्। इममेव आशयम् समधिकं विशदयन् टीकाकृत्

पुण्यराजः कथयति–सविशेषणमाख्यातं वाक्यम् इति वाक्यलक्षणम्।

एवं च संबोधनस्य क्रियाविशेषणत्वेन इदं वाक्यलक्षणमनुसृत्य "व्रजानि देवदत्त" इति पदसमूहो वाक्यम्। अत्र संबोधनपदम् देवदत्त इति क्रियां प्रतिविशेषणम्। एवं निर्विरोधतया अस्य पदसमूहस्य वाक्यत्वादेव तदाधारिता निघातसिद्धिः जायते।

सा च "समाने वाक्ये ............ इत्यनुशासनेन जायते" वैयाकरणो भट्टोजिदीक्षितः तदनुयायिनश्च संबोधनार्थे क्रियाविशेषणत्वं साधयन्ति। परन्तु सा का क्रिया? यस्या विशेषणम् संबोधनार्थः देवदत्त इति पदस्य अर्थः प्रयोजनं भवेत्। विशेष्यभूतायाः तस्याः क्रियायाः नामग्रहणे इमे वैयाकरणाः तूष्णीमासते नागेशस्तु एवं तेषां तूष्णींभावम् एतन्मतस्थन्यूनतामेव गृह्णाति।

इत्थं च व्रजानि देवदत्त इति समूहस्य वाक्यत्वसिद्धये तदाधारितनिघातस्वरसिद्धये च दीक्षितादयः संबोधनार्थस्य क्रियाविशेषणरूपमुपायं दर्शयन्ति। अन्यथा अस्य पदसमूहस्य उपर्युक्तदिशा साधितवाक्यत्वं निघातसिद्धिश्च दुर्लभा। इत्यस्ति चिन्ता प्राचीनवैयाकरणानां दीक्षितादीनाम् मनसि।

सा च चिन्ता संबोधनार्थस्य क्रियाविशेषणत्वस्वीकारं विनापि अन्येन उपायेन तैः अपनेया संभवति। अथ च संबोधनार्थस्य क्रियाविशेषणत्वरूपे उपाये स्वीकृतेऽपि विशेष्यभूतक्रियायाः अस्पष्टत्वात् क्रियाविशेषणत्वम् तदाधारितवाक्यत्वं निधातत्वं च असिद्धप्रायमेव भविष्यति। दीक्षितादीनां मतस्य समालोचनप्रसंगे नागेशेन ईदृशी समीक्षा कृता। फलतः तन्मतं ग्राह्यं न संभवति। अत एव खण्डितप्रायमेव इति वस्तुस्थितिः।

विषेष्यानुल्लेखात् सविशेषणत्वासिद्ध्या दीक्षितमतस्थितन्यूनतायाः स्वमते अभावः इति साधयति नागेशः।

शब्दरत्नकारो हरिदीक्षितः नागेशभट्टः नागेशटीकाकृत् भैरवमिश्रश्च, "जानीहि" इति पदमध्याहार्य तस्य विशेषणम् संबोधन (देवदत्तार्थः) पदार्थः इति मन्यन्ते। तेन क्रियाविशेषतायाः निर्दुष्टा सरला च व्यवस्था संगच्छते इति ते वदन्ति। अनया रीत्या संबोधनार्थस्य सविशेषणत्वसिद्धावपि अध्याहाररूपो दोषः तिङ्द्वयघटितत्वात् एकतिङ्वाक्यम् इति मतेन सह विरोधश्च दृश्यते। एतत्स्थलीयमनोरमाकारावलंवितमौनेन इदमपि कथयितुं शक्यते यत्

मनोरमाकार: अत्र संबोधनार्थस्य अन्वयम् "व्रजानि" इति पदार्थेन सह अभिप्रैति। एवं स: (दीक्षितमहोदय:) संबोधनार्थस्य क्रियाविशेषणताम् संसाध्य वाक्यत्वं निघातसिद्धिं च संपादयति।

समानवाक्यत्वाधारितनिघातसिद्धिप्रपंचे आदरं प्रदर्श्य तत्सिद्धये संबोधनपदार्थस्य अन्यथा वा त्रुटिपूर्णं वा व्याख्यानं न शोभनम् इतिहेतो: श्रीदीक्षितम् तदनुयायिनश्च आक्षिपन् नागेश: एकत: उक्तदीक्षितचिन्ता "(विशेष्यविशेषनामगहणस्य वा स्वाभिमतसंबोधनार्थस्य क्रियाविशेषणत्वसिद्धये संबद्धक्रियार्थज्ञानचिन्ता) निवारकम् अपरतश्च हरिसम्मतसंबोधनार्थप्रकाशकम् व्याख्यानं प्रस्तौति। यथा "व्रजानि देवदत्त जानीहि" अस्य वाक्यस्य य: अर्थ: तस्मिन्नन्नेव अर्थे विवक्षिते सति "व्रजानि देवदत्त" इति पदसमूहस्य वृत्ति: नागेशस्य मतेन मुख्य: अर्थ: वाक्यार्थ: भवति तन्निरूपिता वृत्ति: (वाक्यशक्ति:) एव मुख्या शक्ति:।

या च शक्ति: पदद्वयघटिते वाक्यत्वेन स्वीकृते (वाक्यैकदेशन्यायेन) समूहे विद्यते। श्रूयमाणावस्थायाम् "एकतिङ् वाक्यम्" इतिवाक्यलक्षणमपि निघातसिद्धि:। देवदत्तोद्देश्यक: अभिमुखीभाव: संबोधनार्थ: अध्याहृतक्रियायाम् "जानीहि" इतिस्वरूपायाम् विनियोगं लभते। तत्रैव तस्य अन्वय: अपि भवतीत्यर्थ:। एवं च संबोधनार्थे क्रियाविशेषणतापि सारल्येन सिद्ध्यति यद्वशात् निघातसिद्धिश्च। अस्यां रीतौ प्राचीनपरंपरा(हरिपंरपरा)नुमोदितस्य व्याकरणशास्त्रीयस्य अर्थस्य रक्षा तथा च गौरवपूर्ण-संभावितत्रुटिपूर्ण-व्याख्यानस्य संशोधनं च सुस्पष्टं दृश्यते।

स्मरणीयं च वर्तते यत् अस्मिन् प्रसंगे दीक्षितमतानुयायिभि: संबोधनार्थस्य अन्वययोग्याया:क्रियाया: नामोल्लेखो न कृत: तथापि संबोधनार्थस्य क्रियाविशेषणत्वमुद्घोषितम् इदं कार्यद्वयम् न तथा रुचिकरम् यथा उपर्युक्तम् नागेशीयं विवेचनम् स्पष्टं रुचिकरं चास्ति।

अथ दीक्षितादिमतम् संबोधनार्थदेवदत्तस्य विनियोगम् अन्वयं च व्रजानि इति क्रियार्थेन मन्यते तर्हि देवदत्तस्य व्रजानि इति क्रियया सह विनियोग: अन्वय: च न समर्थनयोग्य: अनुभवविरोधात् अस्यां दशायाम् निघातसिद्धये वाक्यत्वसिद्धि: तदर्थसिद्धये संबोधनार्थस्य क्रियाविशेषणत्वम् अथवा वाक्यनिष्पादकत्वं च अपेक्षितं वर्तते। तत्साधनं दीक्षितादिमते क्लिष्टम् नागेशव्याख्याने तु वाक्यैकदेशन्यायेन अध्याहृतक्रियाया: विशेषणत्वेन

संबोधनपदार्थः क्रियाविशेषणं भवति। अत एव च सविशेषणमाख्यातं वाक्यमिति वाक्यलक्षणससमन्वयः। वाक्यैकेदशन्यायेन (नागेशसमर्थितेन) व्रजानि देवदत्त इत्यंशः "व्रजानि देवदत्त जानीहि" इति वाक्यस्य अनुवादकः तत्रैव उक्तवाक्यार्थनिरूपितशक्तेः सत्तायाः स्वीकारेण एकतिङ्वाक्यम् इत्यनुशासनेन वाक्यत्वसिद्धिः निघातसिद्धिश्च भवति।

संबोधनस्य अभिमुखीभावरूपः मुख्यः अर्थः वैयाकरणपरंपरानुमोदितः सुरक्षितश्च भवति। अस्मिन् मते दीक्षितपुण्यराजमतवत् अनुभवविरोधः संबोधनार्थस्य अन्ववयकरणे क्लेशः तस्य विनियोगसाध्यक्लेशश्च सर्वथा परिहृतो भवति।

शब्दरत्नकारस्य भैरवमिश्रस्य मतेनापि यद्यपि "जानीहि" इति क्रियायामेव संबोधनार्थस्य अन्वयेन सर्वं सूपपन्नं भवति तथापि बुद्धौ अध्याहृतक्रियायाः उपस्थापनम् तत्र आवश्यकम् इति तत्र गौरवदोषः नागेशमतेतु यथोक्तम् तदनुसारेण—व्रजानि देवदत्त इति पदद्वयघटिते समूहे एव "जानीहि" इत्यर्थः वाक्यैकदेशन्यापेन सिद्धः भवति इति अध्याहृतक्रियायाः बुद्धौ उपस्थापनरूपगौरवं च नायाति इति हेतोः अस्मिन् प्रकरणे नागेशविवेचनम् प्रशस्यमित्यस्मद्विचारः।

## वाक्यस्फोटः

अस्मिन् अध्याये स्फोटशब्देन अभिप्रेतस्य तत्त्वस्वरूपस्य अर्थस्य स्वरूपवर्णनम् तत्सिद्धिश्च एवमन्येऽपि स्फोटसंबद्धाः विषयाः अवान्तरविषयाश्च प्रामुख्येन अस्माकं वर्ण्यविषयाः न सन्ति। परन्तु अत्र अस्माकमभिप्रायः अयमेव यत् भाषाव्यवहारमाध्यमेन यूयं वयं च यम् निराकांक्षम् पदार्थान्वयसंवलितम् स्वस्मिन् पूर्णम् अर्थबोधम् परसंक्रान्तम् (श्रोतुर्बुद्धौ) कर्तुं वांछामः सः अर्थबोधः वाक्यनामकतत्त्ववाच्यः अथ च वाक्यशक्तिमूलक एव विद्यते।

वाक्यवाक्यशक्तिरूपम् भाषाव्यवहारकाले इदं तत्त्वद्वयम् यावत् नोपस्थितम् तावत् केवलैः शब्दराशिभिः गौः हस्ती चक्रम् जलम् इत्याद्यानुपूर्वीकैः कस्यापि पूर्णस्य निराकांक्षस्य अर्थस्य परगोचरः बोधः नैव भवितुं शक्नोति। अत एव च वाक्यस्य वाक्यशक्तेश्च महिमानम् अस्मिन् प्रकरणे गास्यामः। प्रकृतिप्रत्ययपदेभ्योऽपि व्याकरणकोशाद्यनुसन्धानेन अर्थबोधः भवत्येव। रामः इति पदम् एकत्वसंख्याविशिष्टम् रामसंज्ञाधारिणम्

पुरुषविशेषम् प्रत्याययति। सुप्-प्रत्यया: सु. औ. जस् प्रभृतय: लिंगसंख्यान्वितकर्तृत्ववत: पुरुषस्य बोधं कारयन्ति। एवमेव तिङ् प्रत्यया: कर्मवाच्यक्रियास्थले कर्मत्वं बोधयन्ति। एवमेव "भू" इति प्रकृति: भू इत्यस्य अर्थापेक्षया अधिकार्थदायि भवति इति। तत्र भवति इत्यत्र "भू" इत्यस्यापि अर्थ: लट: तिप: शप: गुणस्य अवादेशस्य चापि अर्थ: एते सर्वेऽपि अर्था: परस्परं संमील्य भवति इति पदार्थरूपम् एकम् समन्वितम् अर्थम् अभिदधति। परंतु इत्थम् प्रकृतिप्रत्ययपदार्थभूत: अभिप्राय: श्रोतुश्चित्ते निराकांक्षताम् नोपदधाति या निराकांक्षता, क्रियाविशिष्ट(वाक्यरूपात्)पदसमूहात् व्यापार-विशिष्टार्थज्ञानोत्तरम् उत्पद्यते। एवं च श्रोतु:पूर्णनिराकांक्षबोधाय वक्ता वाक्यत्वविशिष्टम् एकतिङ्युक्तपदसमूहम् प्रयुङ्क्ते। केवलं पदार्थश्रवणेन तु श्रोता प्रष्टुमारभेत क: हस्ती? हस्तिना किम्? किमर्थं भवान् हस्तिपदं श्रावयति—ईदृशै: प्रश्नैरेव सिद्ध्यति यत् पदार्थश्रवणेनापि श्रोतु: चित्ते समाधानं न जातमिति। श्रोतु: इदम् असमाधानमेव साकांक्षबोध: कथ्यते—निराकांक्षबोधस्तु वाक्यार्थबोध: एव। एवं च पदात् साकांक्षार्थबोधेन प्रवृत्तिनिवृत्यात्मकव्यवहारस्य बाधितत्वात् तत्साधनाय निराकांक्षबोधस्य आवश्यकता वर्तते एव। तेनैव निराकांक्षबोधस्वरूपवाक्यार्थेन श्रोत्रा ज्ञातेन सता तस्य श्रोतु: बुद्धि: विषयविशेषे कार्यविशेषे च प्रवर्तनाय अथवा कार्य-विशेषात् निवर्तनाय योग्यम् विचारम् कर्तुम् समर्था भवति। अन्येऽपि साधारणा: व्यवहारकाले घटमाना: प्रवृत्तिनिवृत्त्यात्मका: व्यापारा: शब्दात् पूर्णनिराकांक्ष-वाक्यार्थश्रवणेनैव संभवन्ति नान्यथा, अत: अस्मिन् प्रकरणे तस्या: पूर्णनिराकांक्ष—श्रोतृ-चित्त-शान्तिप्रदवाक्यार्थप्रसवसमर्थाया: वाक्यशक्ते:: तदधिष्ठानस्य वाक्यस्य विरोधिनाम् मतं खण्डयित्वा वैयाकरणपरंपरानुमोदितम् हर्याद्याचार्यै: पोषितम् नागेशभट्टेन सफलीकृतं वाक्यस्वरूपम् नागेशप्रतिपादितरूपेण दर्शयाम:। अत्र नागेशीयं व्याख्यानम् सर्वथा अपूर्वम् अतएवापि अस्मिन्नवसरे तस्य निवेश: अस्य अध्यायस्य श्रीवृद्धिमेव करिष्यति इति मे विश्वास:।

श्रूयमाणा: क ख इत्यादिध्वनय: तस्मात् तत्त्वात्सर्वथा भिन्ना यत् तत्वं विशुद्धस्फोटशब्दप्रतिपाद्यम् वर्तते। मूलस्थितौ निर्विकारम् एकाकि चैतन्यम् ईश्वरम् सदपि तत् तत्त्वम् विवर्तावस्थावशात् अनेकक्रमेषु यथा पश्यन्तीमध्यमावैखरीरूपेषु तथा च अखिलब्रह्माण्डेषु दृष्टेषु श्रुतेषु च

अणुपरमाणुषु अर्थभूतेषु व्याप्तं वर्तते ।

विवर्तावस्थ: नादशरीरक: ध्वनिविशेषरूषित: मध्यमावस्थ: बौद्धशरीरक: वाचकशब्दरूपः स्फोट: कदाचित् प्रकृत्यर्थप्रतिपादकप्रत्ययस्वरूप: कदाचिच्च प्रत्ययार्थप्रतिपादकप्रत्ययस्वरूप: कदाचित् पदार्थबोधकपदरूप: कदाचिच्च विभिन्नपदार्थसमन्वयनिर्मितस्य एकस्य अखण्डस्य वाक्यार्थस्य वाचकवाक्यरूपेण च वक्तुर्मनसि स एव स्फोट: स्वेतररूपेणमूलभूतस्फोट तत्त्वातिरिक्तरूपेण तिष्ठति । स एव वक्तु: तीव्रविवक्षावशात् भाषामाध्यमेन प्रकृतिप्रत्ययपदवाक्यान्यतमशब्दमाध्यमेन श्रोतु: हृदयाकाशे प्रक्रियाविशेषेण गृह्यते । हृदयदेशे प्रवेशात् पूर्वम् बाह्याकाशे श्रूयमाण: तत्त्प्रकृतिगतानु पूर्वीरुषित: एवमेव प्रत्ययपदवाक्यगतध्वनिरुषितो वा शब्द: कदाचित् वर्णस्फोट कदाचिच्च वाक्यस्फोट: इत्यभिधीयते ।

## वाक्यस्फोटस्य वाक्यशक्तेश्च निष्कृष्टः परिचयः

निसर्ग: (प्रकृति:) मानवस्य कल्याणाय ताम् ताम् शक्ति जीवात्मनि स्थापयति यया यया शक्त्या जागृतया सत्या शान्तिस्वरूपदैवतत्त्वस्य लाभो भवति । ईदृशी एव एका शक्ति: वाक्यशक्ति: । अन्यदेतत् यत् इयं वाक्यस्फोटरूपशब्देन श्रोतुर्बुद्धौ जागृता क्रियते तत: सा जागृता वाक्यशक्ति: मध्यमवृद्ध-श्रोतृ-बुद्धिनिष्ठा सती आत्मगुणत्वेन कारणेन निराकांक्षबोधरूपम् अभीष्टम् अर्थं प्रसूते । यां बिना पदप्रकृतिप्रत्ययनिष्ठा तत्तदर्थप्रसू: पदादिस्फोटरूपा श्रोतृबुद्धौ उद्बोधितापि पदादिशक्ति: निराकांक्षबोधं जनयितुम् असमर्था भवति । अत एव पदस्फोटादिनिष्ठा शक्ति: वाक्यनिष्ठा च शक्ति: परस्परं भिद्यते । तथापि तयोर्भेदे सत्यपि प्रथमा शक्ति: (पदनिष्ठा) अपि वाक्यशक्ते: जागरणे साहाय्यं करोति । एतावता अस्या महत्त्वं विद्यते एव ।

वैयाकरणै: वाक्यार्थस्य अनेकानि कल्पितानि खण्डानि कृतानि यथा कश्चित् वाक्यघटक: अर्थ: कर्ता उच्यते बुध्यते च, कश्चित् व्यापाररूपः कश्चित् घटक: फलरूप: कश्चित् संख्यारूप: कश्चित् वर्तमानाद्यन्यतमकालरूप: । एतद्दृष्ट्यैव वाक्यार्थस्य खण्डकरणम् वाक्यार्थबोधनप्रयोजनसिद्धये उपायत्वेन स्वीकृतं वैयाकरणै: । एतेषाम् उक्तवाक्यार्थखण्डरूपाणाम् अर्थानाम् कर्त्रादीनाम् वाचकाः प्रत्यया: प्रकृतिः पदानि वा स्वस्वार्थबोधनेन अखण्डवाक्यार्थरूपाम् एकाम् अर्थशृङ्खलाम् रचयन्ति । एवमेव प्रकृतिप्रत्ययपदादिरूपा: शब्दा: घटकतया अपूर्वस्य एकस्य

वाक्यस्य निर्मितिं कुर्वन्ति। केवलम् अनयैव दृष्ट्या पदानाम् प्रकृतेः प्रत्ययानां च उपयोगिता वर्तते। एते प्रकृत्यादयः शब्दाः स्वरूपतः श्रोतुः कर्णविवरं बुद्धिं च प्राप्ता अपि स्वार्थबोधनं कृत्वापि वाक्यार्थविषयिणीं श्रोतुर्जिज्ञासां कदापि न शमयन्ति। इयमेव तेषु न्यूनता वाक्यापेक्षया इति प्रतिपदं स्मर्तव्यम्। अन्यदेतत्—यत् वाक्यमपि प्रकृतिप्रत्ययादिघटितमेव भवति एवं च वाक्यार्थश्च प्रकृतिप्रत्ययपदार्थघटितः सममेव बुद्धिविषयो भवति। स एव बोधः पूर्णः शाब्दबोध इति।

अनेन प्रकृत्याद्यर्थरूपेण तथ्येन श्रोतुः निराकांक्षबोधस्य अनुपलब्धिः अत एव तेषाम् प्रकृत्यादीनाम् निराकांक्षबोधजननेऽ सामर्थ्यं सिद्ध्यति—इमामेव न्यूनतां दृष्ट्वा प्रकृतिप्रत्ययपदनिष्ठवाचकशक्तेः भिन्ना प्रकृत्याद्यर्थभिन्नस्य अखण्डस्य एकस्य वाक्यार्थस्य प्रसवित्री वाक्यशक्तिः अवश्यं स्वीकार्या—इत्यस्ति अस्य प्रघट्टकस्य आशयः। वैयाकरणानामभीष्टा इयं वाक्यशक्तिः निराकांक्षबोधजन्य-मानवशान्ति-लाभकारिणी जीवात्मनः कृते उपयोगिनी वर्तते। अत एव तस्याः प्रतिष्ठा भाषाविदां मण्डले विद्यते एव।

इत्थं च अयमेव निष्कर्षः लभ्यते यत् प्रकृत्यर्थप्रत्ययार्थपदार्थनिरूपिता प्रकृतिप्रत्ययपदनिष्ठा शक्तिः गौणी कदाचित् अनयैव उपायभूतया कदाचित् एनां विनापि निर्मिता वाक्यशक्तिः मुख्या शक्तिः। अस्याः पदादिनिष्ठशक्तेः उपयोगः वाक्यशक्तिजागरणे भवति इति पूर्वपंक्तिषु संकेतितं वर्तते। परंतु यः श्रोता पदादिशक्तिम् तज्जन्यपदार्थादिबोधमपि न जानाति सोऽपि वाक्य-शक्तिम् ज्ञातुम् विवशः एव तिष्ठति यतः वाक्यशक्तिं विना वाक्यार्थलाभो नास्ति। तदलाभे निराकांक्षबोधाभावात् श्रोतुः अशान्तिः। अशान्तिनिवारणायैव निसर्गसिद्धा भाषा उपायभूता वर्तते। अत एव अस्याः वाक्यशक्तेः अवश्यस्वीकार्यतावशात् वैयाकरणैः "वाक्यशक्तिः" वाक्यार्थश्च एतद्द्वयम् स्वसिद्धान्तानुमोदितं गृह्यते। मध्यमानादस्थः प्रकृत्यादिध्वनिरूषितः शब्दः प्रकृतिप्रत्ययपदवाक्यान्यतमरूपः एव भाषा कथ्यते। ईदृश्याः भाषायाः मुख्यं कर्तव्यम् इदमेव यत् वक्तुः बुद्धिस्थस्य विचारस्य याथातथ्येन श्रोतुर्बुद्धौ संक्रमणम्। तच्च पदार्थबोधसहकृतम् तदसहकृतं वा भवेत् परंतु निराकांक्षबोधम् पूर्णार्थबोधम् एवं श्रोता जिज्ञासति। इति ज्ञात्वैव वक्ता शब्दप्रयोगं करोति अत एव शब्दोच्चारणस्य (भाषायाः) उद्देश्यम् श्रोतु-र्निराकांक्षबोधः एव पर्यवस्यति। तद्बोधजागरणे प्रकृत्यादेः पदार्थानां च

असमर्थता। अत एव वाक्यशक्तिस्वीकार: आवश्यक:।

भाषाशिक्षकेषु उपायेषु अन्यतमस्य व्यवहारदर्शनस्य उपयोग:पदार्थ-ज्ञानस्थलीय इव वाक्यार्थनिरूपितवाक्यशक्तिज्ञानाय अपि बालकेन शिशिक्षुणा क्रियते एव इत्यनुभव: व्यवहारदर्शनेन बालकस्य बुद्धौ तत्तद्वाक्यगत-वक्तृश्रोतृज्ञातवाक्यशक्ते: तदर्थस्य च बोध: जायते एव।

वक्ता उत्तमवृद्ध: श्रोता मध्यमवृद्ध: शिक्षार्थी बाल: उच्यते शास्त्रीय भाषायाम् अस्यां सृष्टौ कस्या अपि भाषाया: ह्रासकालेऽपि द्वित्रा: उत्तमवृद्धा: द्वित्रा: मध्यमवृद्धा सन्त्येव तयोर्व्यवहारोऽपि जायते एव। संयोगवशात् उपस्थित: भाषाविशेषानभिज्ञ: बाल: तयोरुत्तमवृद्धमध्यमवृद्धयो: शब्दश्रवण पूर्वकम् विशिष्टाम् प्रवृत्तिम् निवृत्तिं च बहुश: पश्यति तदा स ताभ्यां प्रयुक्त-वाक्याक्षरव्यवहारसाहाय्येन तद्‌भाषाविद् संजायते।

इत्थं पूर्णार्थबोधकारितया वाक्यशक्ति: (वाक्यार्थमहिम्नाा) पदादिशक्तिम् अतिशेते इत्यत्र नास्ति सन्देह:। वाक्यस्य पदादिनिरपेक्षसत्तामाधिकृत्य आचार्यभर्तृहरे: तट्टीकाकर्तु: पुण्यराजस्य प्रौढा: प्रयत्ना: वैयाकरणपंरपराप्राणभूतवाक्यार्थवाक्यशक्ते: स्थापनायां च स्तुत्या: वर्तन्ते। वाक्यपदीयग्रन्थस्य द्वितीयकाण्डे (वाक्यकाण्डे) दशमीत: चतुर्दशीं कारिकां यावत् ग्रन्थ: उक्ततथ्यस्य साधने प्रबलयुक्तिपूर्ण:। अयं ग्रन्यार्थ: वस्तुत: एतद्विषये वैयाकरणपरंपराप्राणभूत: अखण्डनीयश्च अचलस्तिष्ठति। एतदाधारेण वयम् धोषयितुं शक्नुम: यत् नि:सन्देहं वैयाकरणपरंपरा वर्णपदादिभिन्नवाक्यस्य वाक्यशक्तेश्च सत्तया सुपरिचिता वर्तते इति।

म० म० श्रीकाशिनाथशास्त्रिण: अभ्यंकरोपाह्वा: व्याकरणमहाभाष्यस्य मराठीभाषानुवादग्रन्थस्य प्रस्तावनाखण्डस्य पंक्तिषु अस्मान् वाक्य-वाक्यशक्ति-विषयकवैयाकरणपंरपरामहत्त्वम् बोधयन्त: कथयन्ति यत् एनां परंपरां रक्षितुम् एव आचार्यहरि: (पुण्यराजादयश्च) वाक्यसिद्धये वाक्यपदीयग्रंथस्य द्वितीयकाण्डं रचितवान् नैतावन्मात्रम् प्रत्युत तत्रस्थहरिग्रन्थेन वाक्यविरोधिनाम् अनेका: प्रबला: युक्तय: ध्वस्ता: जाता: किं वहूक्तेन या: विरोधिनाम् संभाविता: युक्तय: ता अपि पूर्वपक्षीकृत्य खण्डिता: इत्यस्ति हरिग्रन्थस्य वाक्यसाधकं विशिष्टं महत्त्वम्।

अत एव वयं निश्चिनुम: यत् वाक्यशक्ति: सुपुष्टे आधारे तिष्ठति। एवं स्थितौ सत्यामपि आचार्यहरे: अनन्तरम् मध्ययुगे यदा निबन्धशैल्याम्

तत्तच्छास्त्रीयग्रन्थनिर्माणं प्रारब्धं तदा न केनापि मध्ययुगस्य वैयाकरणेन स्वसंप्रदायसिद्धाया अस्या: परंपराया: अपेक्षानुसारम् रक्षा कृता अत एव मध्ययुगे नैयायिकमीमांसकादिभि: अस्मिन् विषये वैयाकरणनामुपरि स्थापिता: आरोपा: लभ्यन्ते ।

वैयाकरण-तथ्यप्रकाशनरूप-स्वसांस्कृतिककर्तव्यदृष्ट्या वैयाकरण-विरुद्धखण्डनम् आवश्यकं मत्वा वैयाकरणप्रवरेण नागेशभट्टेन उक्ता मीमांसकादीनाम् आरोपा: सबलं खण्डिता: एवं च तेन स्वस्य आचारप्राप्तं कर्तव्यं च कृतम् फलत: वैयाकरणपरंपरानुमोदिताया: वाक्यशक्ते: पुनरुद्धार: कृत: नागेशेन इति कथने नातिशयोक्ति: ।

अत्र स्थितं नागेशीयं विवेचनम् अस्माभि: षट्सु भागेषु विभक्तं वर्तते तच्च अधस्तात् प्रदर्श्यते ।

१. मीमांसका: अस्या एव वैयाकरणसम्मतवाक्यशक्ते: आभासयित्रीम् वाक्यार्थबोधसंपादिकाम् वाक्यशक्तीतरशक्तिं मन्यन्ते । अतएव वाक्यार्थ-बोधोपपत्तये प्रवर्तमानानाम् स्वाभिमत (वैयाकरणभिमत) शक्ते: वाक्यशक्तीतरत्वं मन्यमानानाम् मीमांसकानां खण्डनं विधाय वाक्यशक्तिं सिद्धान्तयामास नागेश: ।

२. अस्मिन्नेव प्रसंगे तात्पर्यं शाब्दबोधहेतुं मत्वा तदर्थे वाक्यशक्तेरनुपयोगित्ववादिनाम् खण्डनम् ।

३. एवमेव वाक्यशक्ते: सत्ताम् निराकुर्वन्तो नैयायिका: वाक्यशक्तेरभावेऽपि सकलकार्योपपादिका: युक्ती: प्रदर्शयन्ति तासां समीक्षापूर्वकम् खण्डनम् ।

४. मीमांसकसंप्रदाय: लक्षणावृत्त्यैव वाक्यशक्तिकार्यम् संपादयितुं प्रयतन्ते । एतद्विरोधे अतिवैदुष्यपूर्णम् विवेचनम् नागेशेन प्रस्तुतम् अवश्यमेव दर्शनीयं वर्तते ।

५. पदानाम् अन्विताभिधानवादम् स्वाभाविकं मत्वा तेनैव वादेन वाक्यार्थसिद्धि: इति वादिनाम् वेदान्तिनाम् मतम् उपन्यस्य तस्य खण्डनं कृतं नागेशेन ।

६. वाक्यशक्तिविषये मीमांसकैकदेशिभाट्टसंप्रदायस्य आक्षेपा: तेषां खण्डनं च नागेशकृतं दर्शनीयं वर्तते ।

अथ वाक्यशक्तिम् अस्वीकृत्यापि वाक्यार्थबोधोपपादकमीमांसकमतम् पूर्वपक्षत्वेन संस्थाप्य नागेशीयपद्धत्या तस्य खण्डनं प्रस्तूयते।

एतन्मीमांसकमतानुसारेण पदशक्तिज्ञः श्रोता पदशक्त्यैव पदार्थबोधम् अनुभवति। सहैव सः श्रोता वक्तुःतात्पर्यज्ञानमपि धारयति। अत एव स वाक्यार्थं बुध्यते। कुमारिलभट्टः इतरान्वितस्वार्थ (पदार्थ) बोधने पदशक्तिम् उपयोगिनीम् मन्यते। अतः पदार्थयोः परस्परम् सामान्यः अन्वयः भवति। अन्वयसामान्यघटितपदार्थे एव पदशक्तिः इति तदभिप्रायः। अन्वयविशेषबोधार्थम् लक्षणाशक्तिं स्वीकुर्वन्ति। लक्षणा च तात्पर्यानुपपत्तिमूलिका एव। एवं चेदं मीमांसकमतम् लक्षणावृत्त्या वाक्यार्थबोधलाभम् मन्यते। एवं मीमांसकमतम् पदशक्तिज्ञानलक्षणाज्ञान-तात्पर्यज्ञानरूपान् त्रीन् समुदितान् हेतून् वाक्यार्थबोधे कारणम् स्वीकरोति।

अत एव नागेशाभिप्रायेण अत्र गौरवदोषः। उपयुर्क्तविवेचनेन मीमांसकाः यथाकथंचित् वाक्यार्थबोधं प्रति हेतुत्वेन स्वीकृतायाः सामग्र्याः वैयाकरणाभीष्टसामग्र्या सह तुलनया उभयत्र समानताम् अत एव अन्यतरस्मिन् मते गौरवं दोषाभावं च पश्यन्ति तथापि वक्ष्यमाणनागेशीययुक्तिभिः मीमांसकमतम् ध्वंसितप्रायं वर्तते।

मीमांसकपक्षः कथयति—घटमानय इत्यादि वाक्यम् घटकर्मत्वप्रकारकनिरूपितत्वसंसर्गकानयनविशेष्यकबोधजननेच्छया वक्त्रा उच्चारितम्। एवंविधज्ञानाभावे श्रोतुः ईदृशः शाब्दबोधः कथमपि न संभवति। एवमेव घटमानयेत्यादिवाक्यानि उक्तात् बोधात् अन्यप्रकारकबोधजननेच्छया उच्चारितानि चेत् ईदृशे ज्ञाने सत्यपि अत्र अन्यप्रकारकः शाब्दबोधः भवत्येव। यद्वशात् वयं स्वीकर्तुम् विवशाः यत् पदार्थबोधेन सहैव तत्तद्विषयकबोधेच्छया एव तत्तद्वाक्योच्चारणस्य निश्चयः तत्तद्वाक्यार्थबोधस्वरूपशाब्दबोधाय कारणीभूतः इति।

तथा च मीमांसकाः वैयाकरणमते आक्षेपंकुर्वन्तः कथयन्ति—स्थलविशेषे तात्पर्यज्ञानं न मन्यमानाः मीमांसकेतरवैयाकरणाः प्रतिबन्धककल्पनारूपगौरवदोषग्रस्ताः स्युः। यथा अयं पक्षः प्रतिपादयति—वक्ष्यमाणविवरणज्ञानार्थम् इमौ शाब्दबोधौ स्वोत्पत्तिकारणसहितौ स्पष्टतया ध्यातव्यौ। तत्र घटमानय इति वाक्यात् घटकर्मत्वप्रकारक-निरूपितत्वसंसर्गकानयनविशेष्यकः शाब्दबोधः भवत्येव। तत्र मीमांसकपक्षः

वाक्यशक्तिस्थाने तात्पर्यज्ञानस्य हेतुत्वं स्वीकुर्वन् कथयति एतादृशशाब्दबोध-जननेच्छया घटमानय इति वाक्यम् उच्चारितम्। अस्य तथ्यस्य ज्ञाता एव श्रोता "घटमानय" इति वाक्यात् इमं शाब्दबोधं लभते।

एतादृशबोधजननेच्छया वाक्योच्चारणनिश्चयः एतादृशवाक्यार्थ रूपशाब्दबोधार्थम् अत्यावश्यकः वर्तते।

एतन्निश्चयविरोधे यदि कश्चित् श्रोता घटेतरकर्मकस्य आनयनविशेष्यकस्य बोधस्य जननेच्छया 'घटमानय' इदं वाक्यम् उच्चारितम् इति निश्चयं करोति चेत् तर्हि एतस्मात् 'घटमानय' इतिवाक्यात् घटेतरकर्मक-प्रकारकानयनविशेष्यकः एव शाब्दबोधः श्रोतुर्जायते।

ये तु वैयाकरणाः तात्पर्यज्ञानं न स्वीकुर्वान्ति ते घटमानय इति वाक्यात् घटेतरकर्मकानयनविशेष्यकशाब्दबोधनिवारणाय एतादृशशाब्दबोधजननेच्छया अस्य वाक्यस्य उच्चारणं नास्ति एतादृशप्रतिबन्धकस्वीकाराय विवशाः सन्ति। एतादृशः निश्चयः श्रोतुर्मनसि तिष्ठत्येव तस्य कारणतास्वीकारेण गौरवदोषः। श्रोता जानाति यत् वक्ता घटेतरकर्मकानयनेच्छया वाक्यमिदं (घटमानय इति रूपम्) नोच्चारयति अपि तु केवलम् घटकर्मकानयनविशेष्यकः बोध एव वक्तुः विवक्षितः वर्तते। एवं च तादृशबोधेच्छया वाक्यविशेषस्य उच्चरितत्वभावनिश्चयः श्रोतृनिष्ठ एव विपरीतवाक्यार्थस्य प्रतिबन्धकः भवति।

एवमेव यदि कश्चित् घटमानय इति वाक्यादेव घटेतरकर्मत्वप्रकारकानयनविशेष्यकबोधम् स्वीकुर्वन् कथयति यत् तादृशस्थले वक्तुः श्रोतुश्च बुद्धौ इदमेव आयाति यत् घटेतरकर्मकानयन विशेष्यकबोधजननेच्छया एव एतत् वाक्यम् घटमानय इति वाक्यमुच्चारितं वर्तते। अत एव अत्र घटेतरकर्मक एव बोधो भवति।

अथ च अत्र घटकर्मकबोधवारणाय अस्मिन् वाक्ये घटेतरकर्म बोधेच्छया उच्चरितत्वं वर्तते। तस्यैव उच्चरितत्वस्य घटकर्मकबोधे प्रतिबन्धकतास्वीकारेण घटकर्मकबोधेच्छायाविरहेण तादृशोच्चारणमहिम्ना एव विवक्षितार्थलाभः घटेतरकर्मकबोधः इत्थं विवेच्य मीमांसकपक्षः उक्तवाक्यार्थलाभाय वास्तविकवाक्यार्थभिन्नवाक्यार्थपरिहाराय च वैयाकरण पक्षस्य द्विविधप्रतिबन्धकतास्वीकाररूपविवशतां दर्शयति—विवशो भूत्वा

उक्तार्थलाभाय प्रतिबन्धकद्वयस्वीकाररूपगौरवदोषग्रस्तः वैयाकरणपक्षः। अतः तेन तात्पर्यज्ञानं स्वीकृत्य अस्मात् दोषात् मुक्तिः लभ्या इति पूर्वपक्षे मीमांसकमताग्रहः वर्तते।

उक्तरीत्या प्रदर्शितप्रतिबन्धकस्वीकारेऽपि वैयाकरणानाम् मते न दोषः यतः प्रदर्शितो गौरवदोषः अनुकूलफलोन्मुखः अर्थात् प्रामाणिकं गौरवं न दोषाय भवति।

अथ च उक्ता प्रतिबन्धककल्पना अप्रामाणिकी इत्यनुभववशात् गौर वदोषो निरस्यते च। अस्मिन् प्रसंगे मीमांसकपक्षप्रदर्शितायाः प्रतिबन्धककल्पनायाः तुलनायाम् शाब्दबोधं प्रति तात्पर्यज्ञानस्य कारणता स्वीकारे एव लाघवम्। अत एव तात्पर्यज्ञानस्वीकृतिः प्रामाणिकी इति स्वीकारेऽपि वाक्यशक्तेः तुलनायाम् सा स्वीकृतिः व्यर्थैव यथा अधस्तात् साध्यते।

मीमांसकपक्षखण्डने नागेशः कथयति—मीमांसकाः मन्यन्ते यत् वाक्यार्थविषयकशाब्दबोधस्य स्वरूपम् प्रकारताविषयताविशेषघटितम् वर्तते। यच्च स्वरूपम् शाब्दबोधे तात्पर्यज्ञानस्य कारणतां मन्यमानानाम् मीमांसकानाम् अभिमतशाब्दबोधे अनुभूयते एव। अतः वैयाकरणाःइममाक्षेपं कर्तुं न शक्नुवन्ति यत् मीमांसकरीत्या अस्मत्सम्मतरीतिसंपन्नः शाब्दबोधः न संभवति इति। एवं सर्वतोभावेन मीमांसकमतस्य पोषणं कृत्वा (पूर्वपक्षतया) नागेशः तन्मतं खण्डयति। इत्थं मीमांसकमतम् युक्तिभिः परिपोष्य तत् खण्डयति नागेशः वक्ष्यमाणरीत्या।

मीमांसकमते सर्वाधिको दोषः अयमेव यत् तन्मते वाक्यार्थ रूपशाब्दबोधस्य अपूर्वता न सिद्ध्यति। यतः मीमांसकाः तद् (वाक्यार्थ) विषयकशक्तिग्रहयुक्तः एव तद् (अर्थ) विषयकतात्पर्यनिश्चयः शाब्दबोधहेतुः इति स्वीकुर्वन्ति।

अस्यां स्थितौ शक्तिग्रहान्तः एव प्रकारताविशेषणतया एव अपूर्वत्वेन प्रसिद्धस्य अर्थस्य भानं भवति। अतः तद्युक्त (वाक्यार्थयुक्त) तात्पर्यावगाहिन्याः बुद्धेः पुरस्तात् स वाक्यार्थः (= अन्वयांशः) न किमपि अपूर्वं वस्तु सिद्ध्यति।

वाक्यशक्तिवादिनाम् कल्पितपदशक्तिवादिनां वैयाकरणानां मते

वाक्यार्थस्य अपूर्वता सुस्थिरैव तिष्ठति। यतः वाक्यशक्तेः उपयोगं बिना स वाक्यार्थः अज्ञात एव तिष्ठति। एषां वैयाकरणानां नये मीमांसकाभिमतकारण स्वरूपतात्पर्यज्ञानेन सहैव तस्य वाक्यार्थस्य भानं न भवति।

एवं तात्पर्यज्ञानं शाब्दबोधकारणं मत्वा वाक्यशक्तेः खण्डनं कुर्वताम् मीमांसकानाम् वाक्यार्थस्य अपूर्वत्वस्य साधने असामर्थ्यम् उद्घोष्य युक्त्यन्तरेणापि नागेशः मीमांसकमतं खण्डयति। शुकादिभिः खगैः अथवा इह जन्मनि मूर्खैरपि देवतादिप्रसादात् पूर्वजन्मोपात्तसंस्कारैश्च रचितस्य उत्तमकाव्यस्य वाक्येषु श्रोतुर्निश्चयः वर्तते यत् इमौ द्वावपि शुकमूर्खौ इमानि उत्तमकाव्यस्थवाक्यानि तदर्थम् मनसि विभाव्य अर्थात् एतेन तात्पर्येण आवाम् इदं काव्यं रचयावः इति तात्पर्यनिश्चयं कृत्वैव इमानि काव्यवाक्यानि रचयतः इति तु कथयितुं न शक्यते। अतः तत्तद्वाक्यार्थः (शुकमूर्खकृतकाव्यस्थवाक्यार्थः) श्रोतुः तत्तद्वाक्यार्थनिरूपिततात्पर्यज्ञान व्यतिरेकनिश्चयेऽपि शाब्दबोधविषयीभूतः अनुभूयते। एवं च ईदृशस्थलेषु तत्तदर्थप्रेरकतात्पर्यज्ञानविरहेऽपि शाब्दबोधदर्शनात् मीमांसकमतं दुष्टम् स्वसिद्धान्तविरुद्धम् इति सिद्ध्यति। एवं च तात्पर्यज्ञानेनैव वाक्यार्थलाभः वाक्यशक्तिस्वीकारं विना इति मीमांसकोद्घोषः परास्तः।

ननु शुकमूर्खादिकृतोत्तमकाव्यस्थवाक्यानि तत्तदपूर्ववाक्यार्थजनकानि इति ऐश्वरं तात्पर्यम् स्वीकृत्य तात्पर्यज्ञानेनैव अपूर्ववाक्यार्थलाभस्य सिद्धान्तः (मीमांसकानाम्) अक्षुण्णः एव स्यादिति चेन्न मीमांसकप्रतिपादितम् ईदृशम् ऐश्वरम् वाक्यनिष्ठं तात्पर्यज्ञानम् तु शाब्दबोधे जाते एव अनुमित्या अनुभूयते। न तु बोधात् प्राक्। अतः कार्यात् प्राग्भावित्वविरहात् तात्पर्यज्ञानम् वाक्यार्थात्मकशाब्दबोधं प्रति कारणमिति न सुवचम्।

एतदतिरिक्तम् मीमांकमते ईश्वरस्य सत्तैव नास्ति कुतः तत्तात्पर्यस्य चर्चा? एवमपि वाक्यशक्तिखण्डनपरः तात्पर्यनिश्चयः शाब्दबोधे कारणं भवितुं नार्हति।

अनेकार्थशब्दस्थले यत्र अर्थद्वयविषयको बोधः भवति यथा हर्यादिशब्दप्रसंगे, तत्र सन्देहविषयभूतौ द्वौ वा अधिका अर्थाः उपस्थिता भवन्ति। तत्र अन्यतरस्य अन्यतमस्य वा अर्थस्य बोधनेच्छया इदं पदमुच्चारितम् इत्येतादृशतात्पर्यज्ञानविरहः स्पष्ट एव। अस्पष्टतावशादेव अर्थद्वयसन्देहः तत्र। एवम् ईदृशस्थलेषु स्पष्टरूपेण तात्पर्यज्ञानाभावेऽपि

वाक्यार्थज्ञानम् अन्यतरार्थनिश्चयाभावेन सन्देहग्रस्तमेव स्यात् परंतु वाक्यार्थज्ञानरूपशाब्दबोधस्तु अत्र भवत्येव। इत्यनुभवः।अत एव अपि तात्पर्यज्ञानस्य शाब्दबोधे कारणतायाः खण्डनं भवति।

ईदृशेषु स्थलेषु निर्विवादरूपेण सन्देहजननम् अनुभूयते एव, अनेन सन्देहेन अत्र शाब्दबोध एव नास्ति इति कथनं तु सर्वथा असमीचीनमेव। यतः जातः शाब्दबोधः शाब्दबोधद्वयं वा एव सन्देहम् जनयति। शाब्दबोधाभावे सन्देहोऽपि नोत्पद्यते। यथा "पय आनय" इत्युक्ते पयः शब्दस्य प्रसिद्धौ अर्थौ—दुग्धं जलं च। तयोरन्यतरस्य तात्पर्येण इदं वाक्यमुच्चारितम् इति तात्पर्यविशेषस्य अज्ञानेन अभावेन वा संदेहःउत्पद्यते—किमानेयं दुग्धं जलं वेति। एवं च वाक्यार्थबोधं बिना सन्देहस्य अभावः, सन्देहाभावे प्रदर्शितप्रश्नस्य असिद्धिः। प्रश्नसिद्धिस्तु सर्वजनसंवेद्या वर्तते एवं चात्र प्रश्नस्य असिद्धिर्नानुभूयते। अत एव तदुपपत्तये सन्देहः सन्देहस्य सिद्धये वाक्यार्थबोधः अवश्यं स्वीकार्यः। अर्थविशेषविषयकशाब्दबोधं प्रति वक्तृबुद्धिनिष्ठतात्पर्यज्ञानम् कारणम्, तद्वशादेव श्रोतुर्बोधः इति स्वीकारे तु अन्यतरार्थस्य तात्पर्यज्ञानविषयीभूतस्य बोधेन दुग्धं जलं वेति प्रश्नस्य अवसर एव नोत्पद्यते। प्रश्नस्तु अनुभवसिद्ध एव।

अत एव ईदृशस्थलेषु वाक्यार्थबोधं प्रति तात्पर्यज्ञाननिश्चयस्य मीमांसकाभिप्रेतस्य कारणत्वं नोपपद्यते। एवं च तात्पर्यज्ञानाभावेऽपि वाक्यार्थबोधे जाते सत्यपि वक्तुःअन्यतरानयने प्रवृतिर्न भवति। तदर्थे वक्तुः तात्पर्यज्ञाननिश्चयः आवश्यकः। प्रकरणादिना अन्यतरस्मिन् अर्थे वक्तुः तात्पर्यविषयीभूतत्वेन श्रोत्रा प्रमाणिते सत्येव अन्यतरार्थानयने प्रवृत्तिः भवति। एवं च शाब्दबोधोत्तरम् प्रवृत्तिसिद्धये अन्यतरार्थस्य निश्चयकरणे तात्पर्यज्ञानस्य आवश्यकता इति तु अन्यदेव वस्तु। प्रामाण्यनिश्चयपूर्वकम् प्रवृत्तिः अन्या, एकतरार्थे प्रामाण्याकांक्षायाः उत्थापकस्य वाक्यार्थस्य उपलब्धिः अन्यदेव वस्तु। अनयोःप्रथमार्थे (प्रामाण्यनिश्चयपूर्वकप्रवृत्तिरूपे अर्थे) तात्पर्यज्ञानं कारणम् अर्थस्य कृते तु नैषः तात्पर्यज्ञाननिश्चयः हेतुः इति अस्य मीमांसक-खण्डनपरस्य प्रघट्टकस्य तात्पर्यं विद्यते।

## नागेशसम्मता वाक्यशक्तिः।

इत्थं मीमांसकमतेन तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वम् दूषयित्वा वाक्यार्थवाक्यशक्तिविषये अयं पण्डितो नागेशः यां रीतिम् अनुसंधत्ते तस्याः

परिचयः एव वर्तते। घटमानय इति वाक्यस्य वक्तुर्व्यवहारः तदर्थज्ञश्रोतुर्व्यवहारः तटस्थेन भाषाशिशिक्षुणा बालकेन दृश्यते। ततः पटमानय गामानय इत्यादिवाक्यैः आवापोद्वापाभ्याम् बालः, विशिष्टमेवसंसर्गालिंगित पदार्थमेव वाक्यार्थं बुध्यते। फलतः उत्तमवृद्धमध्यमवृद्धयोः वाक्येषु स्थितानां पदानाम् अर्थोद्बोधनेन पदपदार्थयोः वाच्यवाचकभावनिश्चायिका शिशिक्षोर्बालस्य बुद्धिः, एकस्य अखण्डाकारस्य वाक्यार्थस्य संसर्गरूपस्य शक्त्या ज्ञानं करोति। अयं संसर्गरूपः स्वतन्त्रः एकः अर्थः अस्त्येव। पदार्थबोधसहकृतस्य तस्यैव संसर्गस्य बोधेन वाक्यार्थबोधः संपद्यते। इति बालस्यापि अनुभवः शनैः शनैः भविष्यत्येव अथवा भवत्येव। एवं च संसर्गस्वरूप-वाक्यार्थ-निरूपिता शक्तिरपि तत्रोपस्थितवाक्यरूपहेतुत्ववशात् वाक्ये एव स्वीकार्या भवति। तयैव वाक्यशक्त्या संसर्गालिंगितपदार्थबोधरूपो वाक्यार्थः शाब्दबोधविषयो भवति। इति नागेशस्य अभिप्रायः।

भाषाशिक्षणस्य अनेकेषु उपायेषु सत्सु अपि व्यवहार एव तेषामुपायानां शिरोमणिः। उक्तरीत्या व्यवहारदर्शनाधारिता साधिता वाक्यशक्तिरपि अत एव व्यवहारस्य शिरोमणित्वादेव सूपपद्यते।

वाक्योच्चारणश्रवणोत्तरकालम् मध्यमकृतप्रवृत्तिनिवृत्ती बालेन ज्ञायेते एव। एवं च अखण्डार्थस्य संसर्गालिंगितपदार्थबोधोपादानकस्य वाक्यार्थस्य बोधः बालकस्य बुद्धौ भवति। अयमेतत्प्रसंगीयः अनुभवः। अत एव वाक्यार्थवाक्ययोः वाच्यवाचकभावसंबन्धाधारिता वाक्यशक्तिरपि बालेन अनुमीयते। तां शक्तिम् आश्रित्यैव विपुलवाङ्मये तत्तद्वाक्यार्थज्ञानाय सः बालः प्रभवति।

## पदशक्तिवादमात्रस्य विरोधे नागेशस्य अभिमतम्

उपर्युक्तायाः नागेशसम्मतायाः वाक्यशक्तेः विरोधे केचन कथयन्ति— वाक्यार्थः अपूर्वः अर्थात् पूर्वम् वाक्यातिरिक्तेन केनापि उपायेन असिद्धः अत एव मानसः एव। अथ च पदार्थभिन्नत्वात् पदमात्ररूपवाचकान् विना प्राप्तः विद्यते। तं च अपूर्वम् वाक्यार्थम् बुद्धौ संस्थाप्य तदर्थलाभाय कल्पितम् वाचकविशेषं च तत्रैव निवेश्य वाक्यार्थवाचकविशेषयोः वाच्यवाचकभावस्य उद्भावनया वाक्यार्थनिरूपितवाक्यनिष्ठशक्तेः ग्रहणं न संभवति। प्रत्युत बुद्धिः तत्र अनमानाद्युपायान्तरैः वाक्यार्थलाभं कर्तुं शक्नोति। अथवा पदार्थः एव

वाक्यार्थः इति मत्वा पदार्थमेव वाक्यार्थरूपेण अवबुध्य तम् पदार्थमेव स्वस्मिन् स्थापयित्वा बुद्धिरेव वाक्यार्थलाभे समर्था वाक्यशक्तिज्ञानं विनापि। एवं च वाक्यार्थलाभः नैव वाक्यशक्त्या शक्तिग्रहपूर्वकः इति प्रतिपादयन्ति केचन वाक्यशक्तिविरोधिनः।

## अस्य कथनस्य विरोधे नागेशः।

वृद्धव्यवहारदर्शनेन संस्कृतं बालस्य मनः यथा पदार्थनिरूपित-पदनिष्ठशक्तेः ग्रहणं करोति तथैव वृद्धव्यवहारदर्शनेनैव पदार्थ इव अपूर्वत्वेऽपि वाक्यार्थः अपि तस्य संस्कृतस्य बालमनसः पुरस्तात् नृत्यति। अत एव पदार्थनिरूपितपदनिष्ठशक्तेरिव वाक्यार्थनिरूपितवाक्यशक्तेरपि ग्रहणं तत् संस्कृतं मनः करोत्येव। नास्ति एवंविधम् प्रबलम् कारणम् यद्वशात् उक्तप्रक्रियायाम् पदशक्तिस्तु स्वीक्रियेत समानस्थितौ सत्यामपि वाक्यशक्तिः न स्वीक्रियेत। वाक्यशक्तिविरोधी केवलं पदशक्तिवादी पदभिन्नत्वाभावात् वाक्यम् पदसमूहमेव मन्यते—इति तु अन्यत्। मुख्यतः स वाक्यार्थः एकः। पदार्थभिन्नस्य तस्य नाम कोऽपि किमपि गृह्णीयात्, वयंतु वाक्यार्थनिरूपणप्रसंगवशात् अभीष्टत्वाच्च तमर्थम् वाक्यार्थमेव अभिदधामः।

नामविषये दृश्यमानः भेदः तुच्छः एव। एवं पदशक्तिग्रहणप्रक्रियया एव स बालकः तेन अपूर्वेण संसर्गशरीरेण वाक्यार्थेन पदार्थेन पदशक्तिमिव, वाक्यशक्तिम् गृह्णाति पदस्फोटस्य वाक्यस्फोटदृष्ट्या असत्यता अन्यत्र प्रपंचिता। सा तु तत एव ग्रन्थात् ज्ञेया। अत एव असत्यभूतपदस्फोटबोधितपदार्थनिरूपिता पदनिष्ठा वाचकशक्तिरपि दृष्टिविशेषेण असत्या वाक्यशक्तिमेव साधयति। नैव पदार्थवाक्यार्थयोरेवभेदः प्रत्युत पदस्य आनुपूर्वीतः वाक्यस्य आनुपूर्वी भिन्ना इत्यनुभववशात् तयोर्भेदेन तदर्थभेदोऽपि सुतरां सिद्ध्यति। एवं च पदमात्रस्य शक्तिः उक्तवाक्यार्थप्रसवे नास्ति समर्था वाक्यशक्त्यैव सः वाक्यार्थःस्फुटीभवति इति तथ्यम्। व्यवहारदर्शनकाले उक्तरीत्या वाक्यशक्तिज्ञानकाले न कामपि बाधामनुभवति शिशिक्षुर्बालः वः नः इत्यादिपदेषु वाक्यत्वाभावेऽपि कर्मत्वस्य युष्मदाद्यर्थत्वस्य ग्रहणम् उपर्युक्तेन वृद्धव्यवहारदर्शनसहकृतेन मनसा साधनरूपेण भवत्येव। अत एव केवलं तदर्थं वाक्यशक्तिविरोधसहकृतपदशक्तिस्वीकारः अनावश्यकः। अथ स्वकथने दीक्षितभूषणाकारयोः सम्मतिं दर्शयति नागेशः यथा—स्वकथनपोषणाय नागेशभट्टः भट्टोजिदीक्षितकृतवैया

करणमतोन्मज्जनग्रन्थव्याख्यायाम् कौण्डभट्टेन उपस्थापिताम् त्रिषष्टितमीं कारिकामुद्धृतवान्। तत्रत्य: सारांश: अयमेव मानस्या उपस्थिते: वाक्यार्थरूपाया: विषये शक्तिग्रहस्य (इदं वाक्यम् अस्य वाक्यार्थस्य प्रत्यायकम् अथवा अयं वाक्यार्थ: एतद्वाक्यजन्य: इत्यनयो: वाच्यवाचक-भावसंबन्धस्थापनेन वाक्यार्थनिरूपितवाक्यनिष्ठशक्ते: ग्रहणेन) संभावना तु अस्त्येव।

यद्यत्र कश्चित् विमतिं दर्शयेत् वाक्यार्थनिरूपितशक्ते: सविशेषं वाक्यार्थे नैव स्थिति: इतिरूपेण तर्हि स: स्वसिद्धान्तसमर्थनाय इदमपि स्वीकर्तुं विवश: भविष्यति यत् पदार्थबोधोऽपि मानस: एव अत एव तन्निरूपिता शक्तिः पदेऽपि नैव तिष्ठति। यदि स विचारक: पदार्थमात्रव्यापिनीम् पदशक्तिं निषिध्य अन्विताभिधानवादोन्मुख: सन् अन्वयांशसहितपदार्थनिरूपितशक्तिमति पदे शक्तिं स्वीकरोति तर्हि तत्कृते सैव बाधा अस्माभि: उपस्थापयिष्यते। सर्वत्र समानस्थितौ सत्यामपि एकत्र शक्तिस्वीकार: अन्यत्र शक्त्यभावस्वीकार: अयुक्तिक:। अस्मिन् प्रकरणे पदार्थबोधे साधनम् वृद्धव्यवहारदर्शनसहकृतं बालस्य मनः, तदेव मनः अन्वयांशसहितपदार्थबोधप्रसंगे कार्यकारि भवति। तत्सादृश्यात् वाक्यार्थनिरूपितशक्तिरपि वाक्ये तिष्ठत्येव। इति भूषणकारदीक्षितयोरभिमतम् इत्यनुमीयते प्रदत्तेन उद्धरणेन।

अस्मिन् प्रसंगे वृद्धव्यवहारदर्शनजन्यम् शिशिक्षोर्मन: यद्वशात् पदशक्तिग्रहं करोति तस्य मनस: कृते लक्षणम् "साधनम्" इति शब्दद्वयस्य उपयोग: नागेशेन कृत: वर्तते। तद्यथा लक्षणशब्द: ल्युट्प्रत्ययान्त:, अत एव लक्ष्यते अनेन इति व्युत्पत्ति:। पदार्थ: वाक्यार्थश्च तेनैव संस्कृतेन मनसा भवति इति हेतो: मन: एव लक्षणम्। अस्य शब्दस्य साधनशब्देन सह पर्यायता। साध्यते बोध्यते अर्थ: अनेन एवमेव लक्ष्यते तर्कव्यापारेण बोध्यते पदार्थ: वाक्यार्थो वा येन इति व्युत्पत्तिसाम्यात् साधनलक्षणशब्दौ पर्यायौ संस्कृतमनोवाचकौ इति तात्पर्यम्। एवमेव उपदेशशब्द: अपि अनयो समानार्थक:। इति प्रतिपादितं वर्तते।

वृद्धव्यवहारदर्शी शिशिक्षुर्बालक: येन संस्कृतेन मनसा आप्तोपदेशेन वा पदपदार्थसंबन्धम् तत: पदनिष्ठशक्तिग्रहं च पदे जानाति स एव बालक: तादृशेनैव मनसा पदार्थादधिकस्य संसर्गरूपस्य अर्थस्य पदनिष्ठशक्तिग्रह-स्वरूपहेतुना ग्रहणं कर्तुं न समर्थ:। अत: स बालक: अनुभूयमानवाक्यार्थ-

ग्रहणाय अनेकयुक्तिप्रयुक्तिभिः संपूर्णम् वाक्यमेव उत्तरदायि मत्वा समर्थं मत्वा तदर्थनिरूपितशक्त्याश्रयत्वं वाक्यस्यैव स्वीकरोति। इत्थं च पदार्थबोधे वाक्यार्थबोधे च उभयत्रापि बालकस्य संस्कृतं मनः तेन गृहीतआप्तोपदेशो वा समानं साधनम् अर्थप्रसवस्य इत्यत्र नास्ति कस्यचित् विमतिः। ततश्च पदार्थबोधनेन पदनिष्ठशक्तेः विनियुक्तत्वात् परिशेषात् वाक्यमेव शक्तेराश्रयः इति बालकः वाक्यशक्तिं गृह्णाति।

अथेदानीं नागेशः वाक्यशक्ति-विरोधिनीम् पदनिष्ठकुब्जशक्तिम् तत्पक्षधराणां च अभिमतखण्डनपुरःसरं खण्डयति पूर्वपक्षत्वेन प्रथमं ता मुपन्यस्यति यथा—

पदशक्तिः पदार्थबोधने ज्ञातापि पदार्थान्वयकारणसंसर्गविषये सा पदनिष्ठा अज्ञाता संसर्गजनने अप्रसिद्धापि संसर्गं बोधयत्येव। अयमेव कुब्जशक्तिबादः। एवं च संसर्गार्थनिरूपिता शक्तिः पदनिष्ठा पदशक्तिरेव। तदर्थं वाक्यशक्तिस्वीकारस्य आवश्यकतैव नास्ति इति पूर्वपक्षः स्थाप्यते चेत् तर्हि—अत्र वाक्यशक्तिवादिनो वयं कथयितुं समर्थाः यत् शक्तिग्रहस्य साधनभूतम् लक्षणम् मनः, वृद्धव्यवहारदर्शनेन संस्कृतम् सत् पदशक्तिवादिनाम् पक्षेऽपि तथैव वर्तते यथा अस्माकं वाक्यशक्तिवादिनां मते वर्तते। आवयोर्मते भेदस्तु एतावानेव युष्माकं वाक्यार्थबोधकपदनिष्ठकुब्जशक्तिवादिनाम् मते संसर्गबोधः (वाक्यार्थबोधः) कुब्जशक्त्या भवति अस्माकं तु वाक्यशक्त्या स बोधः भवति। तत्र कुब्जशक्तिवादसमर्थनाय न किमपि प्रमाणम् केवलम् अनुभूयमानसंसर्गरूपवाक्यार्थोपपत्तये एव युष्माभिः स्वकल्पनया एतादृशी पदनिष्ठा शक्तिः स्वीक्रियते। युष्मन्मते सा कुब्जा शक्तिः पदे अज्ञातापि वाक्यार्थं प्रसूते इत्याशयः। यूयमिव वयम् कुब्जशक्तिस्थाने ज्ञातवाक्यशक्तिद्वारैव वाक्यार्थलाभं मन्यामहे। एवं उभयस्मिन्नपि अन्यतरस्मिन् लाघवं गौरवं च नास्ति तथापि एवं रीत्या युष्यत्पक्षः मुख्यपदशक्तिं विहाय एकाम् अज्ञातत्वेऽपि वाक्यार्थबोधिकाम् कुब्जाख्याम् अतिरिक्तां शक्तिं स्वीकरोत्येव एवं पदशक्तीतरशक्तिस्वीकारः अस्मत्सम्मत एव। नामग्रहणे नास्माकमाग्रहः। भवन्तः तस्या अतिरिक्तशक्तेः नाम कुब्जा इति गृह्णीयुः वयंतु वैयाकरणपरंपरारूपप्रमाणसिद्धाम् ताम् वाक्यशक्तिमेव कथयामः। इत्थं नामग्रहणे भेदः भवतां प्रमाणविरहिताम् कुब्जाशक्तिम् अस्वीकृत्य प्रमाणसिद्धवाक्यशक्तेः स्वीकाराय वाक्यशक्तिस्वीकारः आवश्यकः एव।

## अस्मिन् प्रबलयुक्तिस्थापकानां नैयायिकानां विरोधस्य उत्तरम्

वाक्यशक्तेर्विरोधिषु नैयायिकपक्षः अपि प्रबलः। अतस्तस्य अभिमतं पूर्वपक्षतया संस्थाप्य नागेशः युक्तिप्रयुक्तिभिः तस्य खण्डनेन वैयाकरणपरंपरायाः रक्षणं कृतवान्। नैयायिकपक्षः कथयति यत् प्रमाणाभावात् व्यर्थैव वाक्यशक्तिकल्पना अथ च सा कल्पना गौरवदोषाय अलं वर्तते। तां विनापि आकांक्षालभ्येन पदार्थश्रवणोत्तरं जायमानेन संसर्गरूपवाक्यार्थलाभेन तस्याः वाक्यशक्तेः आवश्यकतैव नास्ति। यदा नैयायिकपक्षः संसर्गलाभाय आकांक्षाया उपयोगस्य चर्चां करोति तदा आकांक्षया सह योग्यता सत्तितात्पर्यज्ञानस्यापि शाब्दबोधकारणत्वेन सत्ता अनिवार्या इति तेषामाशयः विद्यते।

वस्तुतः इयमाकांक्षा अन्वयार्हपदजिज्ञासा, मुख्यतः चेतनधर्मः अत एव सा पुरुषनिष्ठा विद्यते तथापि तस्या विषयः, अर्थ एव तथा च तस्य अर्थस्य प्राप्तिः तद्वाचकपदैरेव अतः गौणदृष्ट्या अर्थः पदं च साकांक्षम् इत्युच्यते। अत एव च आकांक्षायाः स्वरूपम् इच्छाया भिन्नवाचकपदसमभिव्याहाररूपमेव विद्यते। यथा—'घटकर्मकम् आनयनम् अस्य बोधस्य कारणत्वेन स्थितः समभिव्याहारविशेषः घटपदोत्तरम् अम् पदम् ततः धातुः ततः आख्यातादि। एवं चात्र घटादिसमभिव्याहारस्य कारणरूपेण ज्ञानम् एव आकांक्षाज्ञानं वर्तते। एवम् अर्थविशेषं प्रति कारणीभूते आकांक्षाज्ञानरूपे पर्यवस्यति सः समभिव्याहारविशेषः। तस्यैव ज्ञानरूपस्य कारणस्य अभावे घटकर्मकानयनादिरूपतत्तत्संसर्गयुक्तवाक्यार्थोपलब्धिः भवितुं न शक्नोति। अत एव इममेव समभिव्याहारविशेषम् वाक्यार्थहेतुरूपेण स्वीकुर्वन्तु नान्यत् किंचित् समभिव्याहारविशेषातिरिक्तं कारणं तत्र इति नैयायिकानां वैयाकरण विरोधे उद्घोषः। अस्यैव तात्पर्यस्य पल्लवनं मध्ये स्वानुकूलव्याख्यासिद्धये नागेशमतस्यपि उपयोगः कृतः नैयायिकैः एवं च संसर्गबोधाय उक्तरीत्या समभिव्याहारविशेषज्ञानस्य कारणतायाः स्वीकारेणैव विपरीतव्युत्पन्नः घटः कर्मत्वम् आनयनं कृतिः अनेन समभिव्याहारेणैव पूर्वोक्तसंसर्गशालिबोधम् लभते एव। यतः सः विपरीतव्युत्पन्नः एनमेव निर्दिष्टम् समभिव्याहारविशेषम् संसर्गविशेषालिंगितवाक्यार्थबोधं प्रति कारणम् प्रथमतः एव स्वीकृतवान्। तस्य ज्ञातकारणोपस्थितिसमकालमेव वाक्यार्थरूपम् अर्थज्ञानम् कार्यत्वेन

उपस्थितं भवति। एतत्पोषकं स्फोटवादग्रन्थे नागेशवचनम् प्रासंगिकम् इति मत्वा प्रस्तूयते तत्। स्फोटवादे नागेशःकथयति "यादृशे बोधे यत्समभिव्याहारः कारणम् तादृशबोधे तत्कारणत्वज्ञानमपि (कारणम्) तथा" इत्युच्यते तर्हि सैव आकांक्षा एव। उक्तवाक्यार्थज्ञानस्य उत्पादके तस्मिन् समभिव्याहारविशेषे सहजतया व्युत्पन्नःपुरुषः, उक्तवाक्यार्थं प्रति कारणरूपेण विपरीतव्युत्पत्तिं न बुध्यते। अत एव च विपरीतव्युत्पत्तिग्रस्तस्य पुरुषस्य घटमानय इति समभिव्याहारश्रवणेनापि न कोऽपि बोधो भवति। घटः कर्मत्वम् आनयनं कृतिः इति समाभिव्याहारमेव सः विपरीतव्युत्पन्नःकारणं जानाति नतु घटमानय इति समभिव्याहारम्। अस्मादेव कारणात् सः विपरीतव्युत्पन्नः। अत्र स्पष्टमेव यत् विपरीतव्युत्पन्नः घटमानयेत्यादिसमभिव्याहारे आकांक्षाज्ञानस्य कारणत्वग्रहम् एव न जानाति कुतःकार्यरूपस्य वाक्यार्थस्य प्रसवे इयमानुपूर्वी (घटमानय इति रूपा) सफला स्यात्? एवमुदाहरणद्वारा समभिव्याहारविशेषज्ञानरूपायाः आकांक्षायाः वाक्यार्थज्ञानं प्रति कारणता नैयायिकैः प्रस्ताविता समर्थिता सिद्धान्तिता च। नैयायिकसम्मतायाः आकांक्षायाः निष्कृष्टं स्वरूपम् यादृशबोधाय व्यवहारदशायाम् यत्समभिव्याहारज्ञानं कारणम् तादृशबोधाय सः समभिव्याहारः आकांक्षा इत्युच्यते नैयायिकैः।

आकांक्षादिसंबद्धानि एतद्विपरीतानि मतानि उपन्यस्य च नैयायिकोक्तम् इदमेव आकांक्षास्वरूपम् मुख्यं मत्वा एतावता प्रबन्धपूर्वपक्षत्वेन तत् प्रतिष्ठाप्य नागेशभट्टः तस्यापि खण्डनं करोति।

## नागेशेन नैयायिकमतस्य खण्डनम्

नैयायिकः उपर्युक्तसमभिव्याहाररूपाकांक्षायाः शाब्दबोधे कारणत्वं स्वीकरोति अथ च तयैव आकांक्षया वाक्यार्थस्यापिलाभेन, वाक्यशक्तिं खण्डयति। स एव नैयायिकः एतद्रूपाया आकांक्षायाः शाब्दबोधहेतुत्वं मत्वा स्वसंप्रदायसिद्धपदशक्तेः सिद्धिम् कर्तुम् असमर्थः भविष्यति। यतः पदशक्तिस्थलेऽपि आकांक्षावशादेव पदार्थरूपे अर्थे सिद्धे सति वाक्यार्थे इव का आवश्यकता तस्यैव पदार्थस्य कृते शक्तिस्वीकारस्य? एवं च स्वपक्षहानिरूपदोषेण ग्रस्तोऽयं नैयायिकपक्षः। आकांक्षाविशेषस्वीकारेण यथा वाक्यशक्तेर्व्यर्थता तत्स्वीकारे गौरवदोषश्च तथैव तस्याः समभिव्याहाररूपाया आकांक्षायाः शाब्दबोधहेतुत्वस्वीकारे अन्यलभ्यस्य (आकांक्षालभ्यस्य) अर्थस्य

वाक्यार्थस्य कृते पदार्थस्य च कृते पदशक्तिस्वीकारो व्यर्थः गौरवदोषग्रस्तश्च। एवं च वाक्यशक्तेरिव पदशक्तेरपि अप्रामाण्यम् आपद्येत नैयायिकशिरसि।

अत्र घटत्वप्रकारकघटविशेष्यकशाब्दबोधं प्रति घटपदज्ञानम् (समभिव्याहारविशेषस्वरूपम् आकांक्षाज्ञानम्) सफलं कारणम् चेत्तर्हि तदर्थे पदशक्तिः व्यर्था अप्रामाणिकी गौरवदोषग्रस्ता चेति आपत्तिः नैयायिकेषु इति नागेशस्य अभिप्रायः।

एवं च आकांक्षादिविशेषवशात् एकतः वाक्यशक्तेः खण्डनम् क्रियते नैयायिकैः चेत् तर्हि सैव रीतिः पदार्थनिरूपित-पदनिष्ठ-स्वसंप्रदाय-सिद्धान्तितपदशक्तेरपि विरोधिनी सेत्स्यति। पदशक्तेः कार्यमपि पदविशेषरूपविशिष्टसमभिव्याहाररूपाकांक्षाज्ञानेनैव सिद्धं भवति। एवं पदशक्तेःव्यर्थताया आपत्तिः नैयायिकशिरसि वज्रपात एव। अतः नागेशस्य परामर्शः, उक्तम् नैयायिकसम्मतम् आकांक्षाज्ञानम् शाब्दबोधाय उपयोगि तथापि तदुपयोगः परमतस्थवाक्यशक्तिखण्डनाय नैव कार्यः इति।

अत्र नैयायिकः इमां कोटिम् कर्तुं शक्नोति 'अस्मात् पदात् अयमर्थो बोद्धव्यः' एतदनुभवान्तर्गता पदशक्तिस्तु ईश्वरेच्छारूपा वर्तते। नास्माभिः अभिनवा तत्कल्पना कृता वर्तते। अत एव पदशक्तिसिद्धौ पूर्वोक्तं नागेशीय खण्डनम् व्यर्थम्इति इति नैयायिकपक्षतः संभावितम् आक्षेपम् दूरीकर्तुम् नागेशः कथयति।

## नागेशस्योत्तरम्

यथा यूयं नैयायिकाः पदार्थेन सह पदस्य शक्तिरूपः संबंधः ऐश्वरः न तु मनुष्यकृतः इति प्रतिपादयन्ति तर्हि वयं वैयाकरणा अपि वाक्यनिष्ठाम् वाक्यशक्तिम् ईश्वरेच्छां मत्वा पदार्थनिरूपितशक्तिरिव नैयायिकानां सरण्या वाक्यार्थनिरूपितवाक्यनिष्ठाम् शक्ति च मन्यामहे। न ईदृशं किंचित् प्रमाणम् यत् ईश्वरः पदे एव पदार्थनिरूपितशक्तिं स्थापयति न वाक्ये इति। अतः प्रमाणाभावात् पदे पदशक्तिरिव वाक्ये वाक्यशक्तिरपि सुसिद्धैव भवति। तादृशसमभिव्याहारस्य शाब्दबोधकारणताम् स्वीकृत्यापि उभयत्र शक्ति सिद्धिर्भवतीति नागेशस्य अभिप्रायः।

अथ नैयायिका:—वैयाकरणाभिमतशक्तौ बोधनजनकत्वम् = प्रागभावप्रतियोग्यर्थनिष्ठकार्यतानिरूपितकारणतावत्त्वं स्वीकृतं वर्तते। अत एव एतादृशस्य गुरुभूतस्य अवच्छेदकस्य स्वीकृत्यपेक्षया शक्तित्वम् अवच्छेदकं मत्वा स्वमते लाघवं दृष्ट्वा वैयाकरणोपरि गौरवदोषापत्तिम् दर्शयेयु:।

परन्तु तत्र नैयायिकवर्ग: मीमांसकवत् अतिरिक्तशक्तिवादी नास्ति स तु ईश्वरेच्छारूपशक्तिवादी विद्यते। अत: तत्सम्मतशक्तौ अपि जनकताख्यो धर्म: अनुप्रविष्ट:विद्यते।

अत एव नैयायिकस्यापि तावानेव गौरवदोष: यावान् अस्माकं वैयाकरणानां कृते। अत: नैयायिकपक्षधरा: वैयाकरणमतम् सदोषं वक्तुं न शक्नुवन्ति। (यद्यूयं) नैयायिकवर्ग: मीमांसकवत् अतिरिक्तशक्तिम्मन्यते तर्हि मीमांसकपक्षे पूर्वपंक्तिषु दर्शितादोषा: अस्य वर्गस्य कृतेऽपि आपदनीया भवन्ति। अतस्ते अतिरिक्तशक्तिमपि स्वीकर्तुं न प्रभवन्ति। यदि जनकत्वम् नैयायिकमतस्थम् अखण्डोपाधिरूपमेव शक्तिम् मन्यन्ते नैयायिकास्तर्हि अस्मत्सम्मतवाक्यस्फोटस्वरूपवाक्ये वाक्यशक्तिरेव सिद्ध्यति। प्रत्येकं वाक्यम् अखण्डम् अखण्डार्थमेव अखण्डशक्त्या बोधयति इति वैयाकरण तथ्याभ्युपगमात्।

पदज्ञानवशादेव यथा पदशक्तिज्ञानम् तच्च शाब्दबोधोपयोगि इति भवान् नैयायिक: मन्यते तथैव आकांक्षाज्ञाने पदशक्तिज्ञानस्य कार्यस्य कारणतायाम् स्वीकृतायाम् पदे इव वाक्यशक्तिज्ञानम् वाक्यार्थबोधे शाब्दबोधकारणम् स्वीकर्तव्यं भवति। उभयत्र समानस्थितित्वात्।

एवं च शक्तिस्थाने बोधजनकताया: अखण्डनीयतां स्थाप्यमानां दृष्ट्वा नैयायिक: आपत्तिम् दर्शयति। शक्तं पदम् शक्तिविशिष्टं पदम् इति सर्वजनाभिमतो व्यवहार: अधुना अशक्यप्राय: भविष्यति यत: वैयाकरणानुसारेण शक्तं पदम् इत्यस्य बोधजनकं पदम् इति व्याख्यानमेव तथ्यपूर्णं भविष्यति। इदं च बोधकत्वं पदे नास्ति प्रत्युत पदज्ञाने वर्तते। अत: शक्तं पदम् इत्यस्य स्थाने शक्तं पदज्ञानम् इति व्यवहारापत्ति:। एवं च शक्तं पदम् इति व्यवहारस्य उपपत्तिरपि कठिना भविष्यति। नैयायिकानाम् इयं कोटि: अधस्तात् लिखितरूपेण नागेशेन खण्डिता वर्तते। यथा—

यथा अयं धूमो वर्तते इत्यजानन्नपि कश्चित् केवलं दृष्टात् धूमात्

वह्न्यनुमानं कर्तुम् न शक्नोति प्रत्युत व्याप्तिज्ञानादिसहकृतधूमलिंगात् वह्न्यनुमितिर्भवति। तथापि ज्ञानस्य विषयीभूतः धूमः अनुमितिकारणं वर्तते। अत एव धूमज्ञानस्थले धूमः अनुमितिकारणम् इति व्यवहारः उपपद्यते सर्वथा तदनुसारेणैव अत्रापि शाब्दबोधस्य कारणम् पदज्ञानम्। एवं स्थितौ अपि ज्ञानविषयीभूतं पदम् कारणं मत्वा शक्तं पदम् इति गौणो व्यवहारो भवत्येव।

एवं यत्र नैयायिकः पदशक्तिम् शाब्दबोधाय अनिवार्यां मत्वा आकांक्षाज्ञानस्य अनिवार्यतां संसर्गरूपवाक्यार्थबोधाय स्वीकरोति तत्रैव वयं वैयाकरणाः पदशक्तिस्थाने आकांक्षास्थाने च वाक्यशक्तिमेव कार्यकारिणींमत्वा वाक्यार्थलाभस्वरूपकार्यसिद्धये प्रभवामः।

वस्तुतः वैयाकरणानां वाक्यशक्तिरेव, परमते (नैयायिकमते) आकांक्षा इति शास्त्रीयपारिभाषिकनाम्ना अभिधीयते। उभयत्रापि एकमेव वस्तु। यदि कश्चिदस्मदभिमतवस्तुनः कृते अस्मत्प्रदत्तनामातिरिक्तम् नाम गृह्णीयात् तर्हि नास्माकं हानिः। केवलं तथ्यभूतवस्तुनः प्रकाशनमेव अभीष्टं भवति। एवं चैतत् नैयायिकमतं न खण्ड्यते अतः अक्षुण्णमेव वर्तते। फलतः अस्माकं वैयाकरणानामुद्घोषः यत् वैयाकरणसम्मताम् वाक्यशक्तिमेव, नैयायिकाः आकांक्षां मन्यन्ते अस्या एव वाक्यशक्तेर्महिम्ना लभ्यम् संसर्गमर्थम् सर्वेऽपि शास्त्रसंप्रदायाः वाक्यार्थं घोषयन्ति। वाक्यजन्यबोधविषयः अर्थ एव वाक्यार्थः। वाक्यशक्तिं विना स वाक्यार्थः वाक्यजन्यः बोधः एव न संभवति।

तदा वाक्यार्थघटकसंसर्गः कथं प्राप्तव्यो भवेत्। अतः संसर्गस्य वाक्यार्थघटकविषयत्वेन बोधनाय वाक्यशक्तिस्वीकारेणैव सकल-संप्रदायानुभूतवाक्यार्थरूपसंसर्गबोधः संभवति नान्यथा। अत एव अस्माभिः वाक्यशक्तिः स्वीक्रियते। शक्तिग्राहकशिरोमणिव्यवहारेण प्रथमतः वाक्यार्थविषयकः एव शक्तिग्रहो भवति। तस्य बाधः क्वचिदपि न भवति। सकलपिण्डीभूतबृहत्तरवाक्यार्थग्रहणे असामर्थ्यमेव (कर्तृ) कल्पनया सिद्धम् पदार्थविषयकशक्तिग्रहम् साधयति। अतः वाक्यशक्तिः सर्वथा अभिनन्दनीयैव।

भाष्यकारः पतंजलिः 'कृत्तद्धितसमासाश्च' इति सूत्रे स्थितं समासपदग्रहणं नियमार्थम् इति कथयति—तदभिप्रायः इत्थम् पदार्थरूपात् अर्थवत्त्वादेव पदस्य प्रातिपदिकसंज्ञा भवति अर्थवदधातु० इति सूत्रेण। तथैव वाक्यार्थदृष्ट्या वाक्यस्यापि अर्थवत्त्वात् तस्यापि प्रातिपदिकसंज्ञा संभवति।

परंतु एवमनेके अनिष्टाः प्रयोगाः आपद्येरन् अतः कृत्तद्धितसूत्रेण नियमः समासग्रहणेन क्रियते यत्—वाक्यस्य अर्थत्त्वात् प्रातिपदिकसंज्ञा चेत् तर्हि समासस्यैव नतु समासातिरिक्तवाक्यस्येतिरूपः नियमः।

अनेन अनिष्टप्रयोगनिरासः समासस्थलेषु प्रातिपदिकसंज्ञया सूत्रस्थ समासपदस्य स्वारस्यं च सिद्ध्यति। एवं चर्चया वाक्यार्थजनकशक्तेः वाक्ये स्थित्या वाक्यार्थबोधकत्वम् फलतः वाक्यशक्तिस्वीकारः उक्तनियमस्वीकर्तृ-पतंजलिना समर्थितः इत्येव वक्तुकामा वयमत्र इति बोद्धव्यम्। वाक्येशक्तिः तत्प्रयुक्तम् अर्थवत्त्वम् च न स्यात् तर्हि भाष्यकारः अर्थवत्त्वाधारित प्रातिपदिकसंज्ञां वाक्यात् निवर्तयितुम् सूत्रस्थसमासपदस्य नियमत्त्वं कथं कथयेत्। एतेन सिद्ध्यति पतंजलिरपि वाक्ये अर्थवत्त्वं स्वीकरोति एवं वाक्यनिष्ठायाः अर्थवत्त्वसिद्धेः पश्चात् वाक्यशक्तिः आञ्जस्येनैव मान्या भविष्यति।

वाक्यशक्तिवादसाधने एवं पतंजलिसम्मतिं प्रदर्श्य तत्साधने वाक्यपदीयकारस्यापि समर्थनं साधयति नागेशभट्टः। भर्तृहरिः कथयति यदि वाक्यार्थः अशाब्दः अर्थात् शब्दजन्यबोधविषयो नास्ति तर्हि पदार्थविषयेऽपि इयमेव धारणा उपस्थापनीया भवति। उभयोर्न कोऽपि भेदः। इत्थं नैयायिक प्रत्युत्तरप्रदानपूर्वकम् नागेशः वाक्यशक्तिसाधनस्य सफलं प्रयासमकार्षीत्।

## कल्पतरुकारभट्टपादस्य अभिमतं लक्षणया वाक्यार्थसिद्धिः इति मन्यते तत्खण्डनम्

मीमांसकप्रवरभट्टपादानां तदनुयायिनाम् भामतीकल्पतरुकाराणां च सिद्धान्तोऽयम् यत् वाक्यशक्तिः पदापेक्षया दीर्घे आकारे (वाक्ये)अस्ति इति मतापेक्षया (वाक्यापेक्षया) लघुतरे पदे एव सा पदशक्तिरूपेण तिष्ठति। अयमेव सिद्धान्तः समीचीन इति ते ब्रुवन्ति। ते च प्रथमतः पदशक्त्या पदार्थज्ञानम् ततः लक्षणाशक्त्या वाक्यार्थबोधस्य स्थितिरिति मन्यन्ते।

श्लोकवार्तिकग्रन्थोक्तः श्लोकः—

"न विमुंचन्ति सामर्थ्यम् वाक्यार्थेऽपि पदानि नः। सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति नः स्थितिः" इममेव मीमांसकाभिप्रायम् समर्थयति। इयमेव अनेन श्लोकेन तेषां घोषणा। एवं रीत्या स्वीकुर्वन् वाक्यार्थसिद्धिं लक्षणया स्वीकुर्वन् वाक्यार्थस्य अपूर्वत्वं न स्वीकरोति। स्वमतपोषणाय मीमांसकैः

एकमुदाहरणंप्रस्तूयते यथा हरिद्रानामकनदीविशेषस्य अज्ञाता अज्ञानवान् पुरुषः यदा हरिद्रायां नद्यां घोषः इति वाक्यं शृणोति तदा नदीशब्दस्य समभिव्याहारवशात् नदीशब्दश्रवणोत्तरमेव सः हरिद्राशब्दस्य शक्तिग्रहम् हरिद्राख्यनदीविशेषे अर्थे करोति।

यतः सिद्धपदस्य सन्निधिः, श्रूयमाणः समभिव्याहारो वाऽपि शक्तिग्राहको भवति। अत्र नदीपदं सिद्धम् तत्सन्निधिः नदी इत्येतदानुपूर्वीरूपेण स्थितं सिद्धं नदीपदम् शक्तिग्राहकं सत् हरिद्राशब्दे नदीविशेषार्थनिरूपितशक्तिम् ग्राहयति तदैव श्रोता न केवलं नदीरूपेण लिंगेन प्रत्युत संबन्धित्वेन तीरस्य अर्थस्यापि भानं करोति। सर्वथा तेनैव प्रकारेण पदार्थादीनामुपस्थितौ सत्याम् आकांक्षादिसहकारेण पदार्थमाध्यमेन वाक्यार्थोपस्थितिः तदा श्रोत्रा वाक्यार्थग्रहणं क्रियते। उक्तोदाहरणे तीरार्थवत् प्रतीतिः इत्याशयः।

एवंरीत्या मीमांसकनये वाक्यार्थः जायते परंतु एवं स्थितौ तस्य वाक्यार्थस्य वृत्त्यलभ्यत्वात् तस्य वाक्यार्थस्य बोधः शाब्दो न भवति। वाक्यार्थस्थले जायमानो बोधस्तु शाब्दत्वेन अनुभूयते एवेति अनुभवः। अतः मीमांसकमते अनुभवविरोधदोषः आपतति। एवं च कस्यापि अर्थस्य शाब्द त्वसिद्धये तस्य वृत्तिलभ्यत्वमावश्यकम् अत एव मीमांसकमते अस्मिन्नुदाहरणे वाक्यार्थस्य शाब्दत्वकारणवृत्तिसिद्धये लक्षणा स्वीक्रियते येन अत्रत्यः अनुभवविरोधः दूरीभवति तेषां मते।

अस्मिन् प्राचीननये भट्टमीमांसकमते नागेशोद्धृतलक्षणायाः स्वरूपम् ईदृशम्—"स्वबोध्यसंबन्धितया तदुपस्थितिः" इति वर्तते अर्थात् स्वबोध्यस्य (पदबोध्यस्य) शक्यार्थस्य पदार्थस्य संबन्धी संसर्गालिंगिततया यः वाक्यार्थः तेनैव रूपेण अर्थात् पदार्थसंबन्धिरूपेण तदुपस्थितिः = वाक्यर्थोपस्थितिः। तद्धेतुः लक्षणा इति निष्कर्षः।

अस्मिन् प्रसंगे नागेशरचितस्फोटवादग्रन्थे ५५ पृष्ठे अत्याकर्षकं विवेचनं वर्तते।

एवं पूर्वपक्षे वाक्यलक्षणां संस्थाप्य मतमिदं खण्डयति नागेशः यथा—

यावत् मीमांसकाः वाक्यशक्तिं न स्वीकुर्तन्ति तावत् वाक्या र्थोपस्थितिरेव न भवति। एव स्थितौ वाक्यार्थस्य अनुपस्थितौ लक्षणावादी,

अनुपस्थिते तस्मिन् वाक्यार्थे वृत्तिलभ्यत्वसाधनाय कथं सफलःस्यात्। केनापि प्रकारेण बुद्धौ शब्दार्थोपस्थितौ सिद्धायामेव लक्षणा प्रवर्तते अत्र तु लक्षणाव्यापारात् प्राक्वाक्यशक्त्यस्वीकारवशादेव वाक्यार्थोपस्थित्यभावेन लक्षणाया अवसर एव नास्ति। इमां युक्तिम् उपेक्ष्य कथंचित् उभयोरर्थयोः प्राप्तौ अपि पूर्वमर्थं ज्ञात्वैव यावत् तात्पर्यानुपपत्तिप्रतिसन्धानं न भवति तावत् लक्षणाया अवसर एव नायाति। गंगायां गावः इति वाक्ये अन्वयानुपपत्तेरभावेऽपि तात्पर्यविशेषप्रतिपत्तये अत्र लक्षणया तीररूपः अर्थः लक्ष्यते। एवमेव प्रस्तुते उदाहरणे वाक्यार्थबोधं दृष्ट्वा तदपेक्षया तात्पर्यानुपपत्तिकल्पनां कृत्वा तदाधारेण लक्षणाप्रवृत्तिस्वीकारापेक्षया (गौरवदोषवशात्) वाक्ये वाक्यशक्तिरूपप्रथमशक्तिस्वीकारः एव अधिकम् समीचीनः वर्तते।

एकार्थीभावविचारे नागेशः सुबहुभिर्युक्तिभिः तर्कैः प्रमाणैश्च लक्षणायाः स्वरूपम् "शक्यसंबन्धो लक्षणा" इति सिद्धान्तितवान्। शक्यसबन्धो न बोधसंबंधः इति स्पष्टतया ज्ञातव्यम्। पूर्वोक्ता मीमांसकपक्षीया लक्षणातु पदार्थवाक्यार्थयोर्मध्ये उपपन्नैव नास्ति। तत्र पदार्थः वाच्यार्थः लक्ष्यार्थः वाक्यार्थः इति मीमांसकानामाशयः वर्तते। परंतु अत्र पदार्थवाक्यार्थयोः शक्यलक्ष्यार्थयोर्मध्ये लक्षणाधायकप्रसिद्धसंबन्धेषु अन्यतमस्यापि संबन्धस्य अनेकवाक्यार्थप्रसंगे असंभवात् लक्षणया वाक्यार्थसिद्धिर्न जायते। सर्वत्र शक्यस्यअर्थस्य (पदार्थस्य) संबन्धविशेषः वाक्यार्थेन सह नैव संगच्छते। अतः लक्षणायाः पक्षं त्यक्त्वा वाक्यशक्त्यैव वाक्यार्थग्रहणसिद्धान्तः एव मीमांसकैरपि अवश्यं सम्माननीयः विद्यते।

## वेदान्तिभिः वाक्यशक्तेः खण्डनम्

वेदान्तिनः वाक्यार्थबोधाय वाक्यशक्तिम् न मन्यन्ते। ते अन्विताभिधानशक्त्यैव वाक्यार्थस्य लाभं स्वीकुर्वन्ति। इदमपि वाक्यशक्तिसिद्धान्तविरुद्धत्वात् वैयाकरणमतविरुद्धम्। अतः नागेशभट्टः अधोऽङ्कितरीत्या मतस्यास्य खण्डनं करोति।

इमे वेदान्तिनः वाक्ये वाक्यार्थनिरूपितशक्तिम् निषिध्य पदशक्तिरेव अन्वितस्य (अन्वयविशिष्टस्य) पदार्थस्य बोधं करोति इति स्वीकुर्वन्ति। एवं पदादेव वाक्यार्थरूपस्य अन्वयस्य लाभात् तत्प्राप्तये वाक्ये अतिरिक्त-

वाक्यशक्तिस्वीकार: व्यर्थ: गौरवदोषदुष्टश्च।

एवं स्थितौ पदशक्तिसाध्यकार्यार्थम् वाक्यशक्तिस्वीकार: अप्रामाणिक:। आचार्याणामनुभव: यत् अनन्यलभ्य: शब्दार्थो भवति। अत्र वाक्यार्थरूपस्य अन्वयांशरूपस्य अर्थस्य लाभस्तु पदशक्त्यैव भवति। यत: स: वाक्यार्थ: नास्ति अनन्यलभ्य:। नास्ति तत्र अनन्यलभ्यता। पदशक्त्या लभ्यत्वात् तस्य अर्थस्य। अत: स वाक्यार्थ: वाक्यरूपशब्दजन्य: भवितुं नार्हति। वाक्यशक्तिप्रयोगात् पूर्वमेव पदशक्तिलभ्यत्वात्।

## अथास्य समीक्षा

यश्च अर्थ: वृत्तिविषयों न भवति स: शाब्दबोधविषयोऽपि न भवति। उक्तरीत्या वाक्यार्थ: पदशक्त्या लभ्य: एवं च वृत्तिलभ्य: अत एव स शाब्दबोधविषयो भवति। एवम् अन्वय: अर्थ:। शाब्दबोधविषयत्वात् तस्य वृत्तिलभ्यत्वे सिद्धेऽपि कया वृत्त्या तस्य (अन्वयांशस्य) लाभ: इति प्रश्ने एकपक्ष: वाक्यशक्तिस्वीकारेण अस्य उत्तरं ददाति।

अपरश्च पक्ष: क्लृप्तपदशक्त्यैव तल्लाभेन सुदूरस्थिताया: अत एव गौरवदोषपूर्णाया: अतिरिक्ताया: वाक्यशक्ते: स्वीकारापेक्षया क्लृप्तपदशक्त्यैव लाभ: वाक्यार्थस्य अस्यां रीतौ एव लाघवम् इति (वेदान्तिन:) वदन्ति। एतन्मतानुसारेण पदानां शक्ति: न स्वार्थमात्रबोधनाय अपितु अन्वयघटितपदार्थबोधायैव अनुभूयते। एवं च वाक्यार्थप्रसवाय पदशक्तिरेव हेतु: इति तेषामाशय:।

तथापि विशेष: यत्र अविषय: भवति ईदृशी सामान्यबुद्धि: नैव उत्पद्यते सा सर्वदा विशेषविषयकबोधजनका सती स्वसत्ताकाले तिष्ठति। अत: तत्तत्पदनिष्ठसामान्यशक्त्यैव पदसमभिव्याहारविशेषरूपाकांक्षाया बलेन तत्तत्पदार्थविशेषनिरूपितान्वयविशेषबोध: सिध्यति तदर्थम् अतिरिक्तवाक्यशक्तिस्वीकारो व्यर्थ इति च प्रतिपादयन्ति वेदान्तिन:।

**एतन्मते अन्विताभिधानवादवादे समभिव्याहारे शाब्दबोध कारणतास्वीकार: इति तात्पर्यम्।**

एवमुपर्युक्तरीत्या अन्विताभिधानवादी पदशक्त्यैव सामान्यसंसर्ग रूपस्य अर्थस्य बोधं मन्यते। तथापि अन्वयविशेषलाभाय (वाक्यार्थस्यार्थलाभाय) तत्तत्समभिव्याहारविशेषस्य कारणतां स्वीकर्तुम् विवश:

एव स अन्विताभिधानवादी। यद्वशात् अनेके दोषाश्च समापतन्ति।

यदि सःसमभिव्याहारविशेषः शाब्दबोधविशेषं प्रति कारणत्वेन न स्वीकृतश्चेत्तर्हि पदेषु इतरान्वितस्य अर्थस्य अभिधायकतायां सिद्धायामपि घटपदस्य शक्तिः, इतरान्वितस्य बोधने अस्ति एतज्ज्ञानवशात् घटकर्मकमानयनम् एतावान्विस्तृतः अर्थः घटः इति पदादेव प्रतीतः भविष्यति। यः अभीष्टो नास्ति।

इदं समभिव्याहारविशेषस्वरूपं कारणम् उक्तबोधस्य घटकर्मकानयनस्य कारणम् इति स्वीकृतावपि घटः इत्युक्तस्थले तादृशसमभिव्याहारविशेषस्य (घटमानयेत्यादिरूपस्य) अभावात् तत्र घटकर्मकानयनार्थस्य आपत्तिर्न तिष्ठति। एवमेव इदम् समभिव्याहारविशेषस्वरूपं कारणम् शाब्दबोधविशेषस्वरूप कार्यस्य कृते न स्वीक्रियते तर्हि "घटः कर्मत्वम् आनयनम् कृतिः" अस्मादपि वाक्यात् घटकर्मकानयनस्वरूपस्य अर्थस्य आपत्तिः। अतः तस्य समभिव्याहारविशेषस्य उक्तरीत्या कारणत्वमवश्यम् अभ्युपेयम्। एवमेव अन्या अप्यापत्तयः अस्मत्पुरतः उक्तमतस्वीकारे उपतिष्ठेयुः। परन्तु इतरान्वितस्य अर्थस्य पदशक्त्या वाच्यतया सहैव वाक्यार्थरूपशाब्दबोधफलसाधक- कारणकोटौ समभिव्याहारविशेषस्य निवेशेन सकलेषु एतत्सिद्धान्तविरोधिभिः आपादितेषु स्थलेषु श्रोतुः उक्तसमभिव्याहार-विशेषज्ञानवत्त्वाभावात् कारणाभाववशात् आपादिताः 'घटः' इत्यादौ घटकर्मकानयनादि-रूपार्थविशेषबोधापत्तयः तदाशंकाश्च स्वयमेव दूरीभविष्यन्ति। अतः मतमिदं निर्दुष्टम् यत् पदं तु इतरान्वितस्वार्थम् सामान्यरूपेण स्वशक्त्या बोधयति। परंतु समभिव्याहारविशेषरूपकारण-सत्तावशात् तादृशकारणज्ञानवशाच्च अन्वयविशेषो भवति। तत्स्वीकाराभावे घटः इत्यत्र अन्वयविशेषबोधो नास्ति। एवं च आपादिताः सर्वा अपि युक्तयः परास्ता भवन्ति। इत्यस्ति अन्विताभिधानवादिवेदान्तिमतस्याशयः।

अस्य मतस्य निर्दुष्टताम् आवश्यकतां च पूर्वपक्षत्वेन संसाध्य विवृणोति नागेशः खण्डनधिया।

## प्रथममस्य मतस्य निर्दुष्टता साध्यते।

एकपदप्रयोगेऽपि नियमतः अन्वय्यर्थस्य जिज्ञासा भवत्येव। गाम् इत्येकस्मिन् पदे उच्चारिते सति गौः किंकर्माश्रया? एवं क्रियाविशेषस्य च

जिज्ञासा उदेत्येव 'आनय' इत्युच्चारिते सति किं वस्तु आनयनव्यापाराश्रयम् ? इति कारकविशेषस्य जिज्ञासा नियमतः दृश्यते एव। इयं जिज्ञासापि तदैव भवति यदा सामान्यदृष्ट्या पदार्थस्य केनापि सह अन्वयः अस्ति इति निश्चयो जायते अर्थात् अन्वयसामान्यज्ञानपूर्विकैव इयं जिज्ञासा इति वस्तुस्थितिः।

एवं नियमवशात् तस्य अन्वयसामान्यस्य ज्ञानकारणम् प्रथमम् आवश्यकम् प्रकृतिसिद्धं च भवति। तच्च ज्ञानम् शब्दातिरिक्तेन केनापि अन्येन उपायेन न संभवति अतः उपस्थितत्वात् शब्द एव अन्वितस्य (अन्वयविशिष्टस्य) वाचकः इति स्वीकारेण सकला अपेक्षिताः जिज्ञासाः शान्तिमेष्यन्ति। स च शब्दलभ्यः अन्वयसामान्यरूपः अर्थः अपूर्वः इति वक्तुं न शक्यते। यतः विशेषधर्मावच्छिन्नपदार्थान्तरघटितपदार्थविशेषान्वय विशेषस्वरूपवाक्यार्थरूपेण (प्रथमम्) पूर्वम् अनुपस्थितत्वेऽपि अन्वयत्वादिसामान्यधर्मप्रकारकबोधरूपेण तस्य (अपूर्वस्य वाक्यार्थस्य) उपस्थितिः पूर्वसिद्धैव इति वक्तुं सुवचम्। एतदन्विताभिधानवादानुसारेण घटः इति पदात् केवलस्य (अनन्वितस्य) बोधः शक्तिभ्रमजन्यो बोधः। इति व्याख्यानेन पदार्थबोधोपपत्तिर्भवति।

## अन्विताभिधानवादस्य खण्डनम्

एतावता प्रबन्धेन अन्विताभिधानवादस्य स्वरूपमुपन्यस्य तत्खण्डनम् वैयाकरणपक्षानुसारियुक्तिभिः नागेशभट्टः कुरुते। घटादिपदज्ञानम्, घटपदार्थस्य अथ च अनुकूलेन अर्थेन सह तस्य अन्वयस्य उभयविधस्य शाब्दबोधस्य कारणम् इति स्वीकारापेक्षया घटमात्रविषयकशाब्दबोधः कार्यतावच्छेदकः (कार्यस्य शाब्दबोधस्य अवच्छेदकः धर्मः अतः) घटपदार्थमात्रस्यैव शाब्दबोध्ः इति फलितार्थः अस्मत्कथनस्य। इति स्वीकारे लाघवं वर्तते। अन्विताभिधानवादिनः पक्षे पदस्य अन्वयसामान्ये शक्तिग्रहस्वीकारेऽपि घटमानयेत्यादिस्थलेषु घटकर्मकानयनविशेष्यकबोध-विशेषलाभाय एतादृशबोधं प्रति समभिव्याहारविशेषस्य कारणता विवशतया स्वीकार्या भवति अन्विताभिधानवादिनः कृते। अस्यां स्थितौ तथाविधकार्यकारणभावस्य अज्ञाता अज्ञानवान् अपि उक्तबोधं न लभेत एतदर्थम् सः कार्यकारणभावग्रहोऽपि शाब्दबोधसामग्र्यां निवेशनीयः। एवं चात्र वादे वैयाकरणापेक्षया सुस्पष्टो गौरवदोषः। अस्माकं पक्षे तु उक्तबोधाय

(घटकर्मकानयनविशेष्यकबोधाय) एका वाक्यशक्तिरेव वाक्यस्वरूपावगाहिनी प्रभवति ।

यदा अन्विताभिधानवादी अन्वयसामान्ययुक्तपदार्थबोधाय पदशक्तिः अन्वयबोधविशेषलाभाय समभिव्याहारविशेषश्च इति उक्तशाब्दबोधे स्पष्टतया कारणद्वयं स्वीकर्तुं विवशःतदा अस्माकं वाक्यम् युष्माकं पदस्थानं गृह्णाति इति कृत्वाऽस्मत्पक्षे न गौरवविचारः । वाक्यशक्तिरूपः एक एव अर्थः स च उक्तशाब्दबोधहेतुः वैयाकरणमते । यदा अन्विताभिधानवादमते कारणद्वयम (उक्तरीत्या) शाब्दबोधहेतुः इति तदा उक्तरीत्या वैयाकरणमतापेक्षया अन्विताभिधानवादिमतम् गौरवदोषयुक्तम् ।

वाक्यशक्तिवादपक्षात् अन्विताभिधानवादे ईदृशं दोषं प्रदर्श्य अन्वयजिज्ञासा कथं जायते पदार्थश्रवणोत्तरम् इत्यादि प्रश्नानां समाधानपूर्वकम् स्वमतं पोषयति नागेशः अधस्तात् पंक्तिषु ।

अन्विताभिधानवादः खण्डितः । अतः शाब्दबोधे अनुभूयमानस्य अन्वयस्य बोधाय पदशक्तिस्तु नैव कार्यकारिणी यतः पदार्थं श्रुत्वा योग्यस्य अन्वयस्य कृते जिज्ञासा उदेत्येव । अयमनुभूयमानः अन्वयरूपोंऽशः कस्मात् कारणात् उत्पन्नः ? इत्ययं प्रश्नः वैयाकरणैरेव समाधेयः वर्तते । इति स्वकर्तव्यं चिन्तयन् नागेशः कथयति यथा नवीनं फलं दृष्ट्वा तस्य रसं प्रति जिज्ञासा भवति अस्य फलस्य रसः मधुरः अम्लो वेति । अत एव द्रष्टा पृच्छति कीदृशः अस्य फलस्य रस इति । तथैव पदार्थोपस्थितिरपि वाक्यार्थविषयकजिज्ञासां प्रकाशयति । फलोदाहरणे फलस्थले रसविशेषजिज्ञासादर्शनमात्रेण आम्रपदस्यशक्तिः रससामान्यविशिष्टे रसविशेषविशिष्टफलभेदे प्रामणिकैराचार्यैः न स्वीक्रियते । तथैव अन्वयजिज्ञासावशात् पदार्थोपस्थापकपदे अन्वयसामान्यस्य अथ च अन्वयविशेषविषयकशक्तेश्च स्वीकारः नैव क्रियते । एवमेव द्वित्रैः अन्यैश्च तर्कैः पूर्वोत्तरपक्षस्थापनसमीक्षणपूर्वकम् नागेशः पूर्णयुक्तिबलेन अन्विताभिधानवादस्य वेदान्तिसम्मतस्य खण्डनं कृतवान् ।

पदार्थस्मृत्या संसर्गात्मकवाक्यार्थबोधरूपः शाब्दबोधः भवति इति सिद्धान्तम् उक्तकथ्यमाध्यमेन खण्डयन् नागेशः कथयति ।

भाट्टमतानुसारेण पदार्थस्मृतिः वाक्यार्थविषयकशाब्दबोधे हेतुः न तु पदज्ञानं हेतुः यतः अश्वत्वाद्युपाधिरहितम् श्वेतत्वं पश्यन् पुरुषः तद्देशे हेषा

शब्दम् अश्वकृतध्वनिम् खुरशब्दै: गमनक्रियां च अनुमाय अनुपलब्धि प्रमाणवशात् तस्मिन् देशे श्वेतत्वाद्यन्वययोग्यवस्त्वन्तरस्य अभावं जानन् अन्वयानुपपत्तिप्रमाणेन इत्थं निश्चिनोति। गुणजातिक्रियारूपा अर्था: नियमत: अर्थान्तरान्वयस्य सापेक्षा भवन्ति। अत: अन्यान्वयसाकांक्षाणाम् तेषां श्वेतत्वादिगुणानाम् पारस्परिकान्वयं विना यत् अनुपपन्नत्वम् आसीत् तत्सहकृताकांक्षादिज्ञानादिसहकृतं ज्ञानम् तज्ज्ञानमेव तेषां श्वेतत्वादीनाम् परस्परान्वयस्य तद्घटितशाब्दबोधस्य च कारणं विद्यते। तस्मिन् देशे दृश्यमानं श्वेतत्वम् अश्वभिन्नस्य पदार्थस्य संसर्गं विना प्रतीयमानं वर्तते। अत: तत् श्वेतत्वम् अश्वेतरसंसर्गं विना अनुपपन्नम्। एवमुक्तरीत्या भाट्टसंप्रदायानुसारेण (स्मृत: ?) पदार्थ: शाब्दबोधधीहेतुर्भवति।

श्लोकवार्तिकग्रन्थे—

पश्यत: श्वेतमारूपं ह्रेषाशब्दं च शृण्वत:।

खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धी:।

अनया कारिकया एतत्सर्वं सुस्पष्टं जायते।

एवं रीत्या वाक्यघटकपदबोध्य:पदार्थ: अपि अनुपपत्ति-प्रतिसन्धानपूर्वकम् वाक्यार्थस्य उपस्थितिं करोत्येव। पुनस्तदर्थे वाक्यशक्तेरावश्यकता नास्ति। ईदृशी आपत्ति: भाट्टसंप्रदायात् वैयाकरणपक्षे आपाद्यते यस्या: समुचितमुत्तरं निम्नांकितरीत्या नागेश: प्रस्तौति।

नागेश: इमाम् सर्वाम् उक्ताम् भाट्टोक्ताम् व्यवस्थाम् अनुमानविषये एव सफलां मन्यते। उक्तोदाहरणे जायमानाम् अनुपपत्तिमश्रित्य श्वेतोऽश्वो धावतीति धी: एतद्रूपो बोध: पूर्णतया अनुमानाधारेण साधित:। अत एव स बोध: अनुमित्यात्मक: एव। पदार्थज्ञानम् (कर्तृ) अनुमित्यात्मकतादृशज्ञानम् श्वेतोऽश्वो धावतीति रूपम् वाक्यार्थत्वेन नोपन्यस्यति।

यत् अनुभूतम् न तु अनुमितम् तमेव वाक्यार्थं विषयीकृत्य शाब्दयामि इयम् अनुव्यवसायात्मिका प्रतीतिर्भवति। या प्रतीति: पदार्थस्मृतिजन्यार्थस्वरूपवाक्यार्थे नैव अनुभूयते। तत्र शाब्दयामि इत्ययमनुभवो न भवति। प्राप्तस्य अर्थस्य अनुमानजन्यत्वात्। तादृशप्रतीतिस्तु (शाब्दयामि इति प्रतीति:) शाब्दबोधे अनुभवसिद्धैव। एवं वाक्यशक्तिविरोधिनाम् अन्येषाम् अनेकेषाम् संप्रदायानाम्

समुचितोत्तरदानपूर्वकम् तेषां खण्डनं कृत्वा नागेशः वैयाकरणपरंपरानुमोदितम् इदमभीष्टं तथ्यम् वाक्यशक्तिस्वीकारात्मकम् परकृतखण्डनखण्डनपूर्वकम् प्रतिष्ठापयन् स्वीयं वैयाकरणकर्तव्यं पूर्णं कृतवान् अतः स अस्माकम् अभिनन्दनीयः एव वर्तते।

## अथ योग्यताखण्डनम्

### योग्यता शाब्दबोधे कारणं नास्ति

वाक्यार्थस्य स्वरूपम् अनेकैः घटकपदार्थैः अथ च तेषु पदार्थेषु परस्परम् अन्वयार्हसंबन्धविशेषैर्निर्मितया दीर्घया अर्थशृङ्खलया निर्मितं भवति। वस्तुतः ईदृशी अर्थशृङ्खला एव वाक्यार्थः इति निष्कर्षः। स्पष्टमेव यत् अस्याम् अर्थशृङ्खलायाम् पदजन्यपदार्थानामपि समावेशः अस्त्येव।

वक्तुः श्रोतुश्च बुद्धौ स्थिता ईदृशी पदार्थसंवलिता वाक्यार्थरूपा अर्थशृङ्खला वाक्यार्थरूपस्वेतरया अन्यया अर्थशृङ्खलया सह साकांक्षा अर्थात् संबन्धापेक्षिणी भवति तथापि स्वस्मिन् सा पूर्णा निराकांक्षा च भवति इत्यपि अस्मिन् प्रसंगे अवश्यं ज्ञातव्यं वर्तते। एवं च वाक्यार्थंश्रुत्वा उक्त्वा वा श्रोता वक्ता वा शृङ्खलात्मकस्य अर्थस्य परिपूर्णताम् निराकांक्षताम् (स्वघटकपदार्थ संबद्धाम्) अनुभवति इति वैयाकरणानां विचारः वर्तते। इदमन्यत् यत् स च वाक्यार्थः स्वेतरं वाक्यार्थं चापि कदाचित् अपेक्षते। अनया दृष्ट्या वाक्यार्थः वाक्यार्थान्तरसाकांक्षःसन्नपि स्वघटकपदार्थस्य पदार्थानान्तरस्य च अपेक्षाम् स्वार्थप्रकाशनाय नैव करोति। एतावतैव वाक्यार्थस्य निराकांक्षता अथ च स्वेतरवाक्यार्थं प्रति साकांक्षता च सिद्ध्यति।

यद्यपि वाक्यार्थ इव पदार्थोऽपि स्वेतरपदार्थंप्रति साकांक्षो भवति तथापि सः पदार्थः स्वस्मिन् पूर्णः नास्ति अत एव सः विवशतया पदार्थान्तरान्वयाकांक्षी भवति—वाक्यार्थस्तु न तथा वाक्यार्थस्य उक्तरीत्या वाक्यार्थान्तरसापेक्षत्वेऽपि स्वस्मिन् निराकांक्षता वर्तते एव। इत्थं वाक्यार्थपदार्थयोः मूलभूतो भेदः। अत एव च पदार्थः वाक्यार्थात् भिन्नः अभिमतः वाक्यार्थं श्रुत्वा प्रायः पूर्णबोधः (पदार्थपिक्षया) निराकांक्षबोधश्च अनुभूयते। न तथा पदार्थश्रवणेन निराकांक्षबोधः तत्र तु सद्य एव अन्वयार्हपदार्थं प्रति उत्सुकता वर्तते। कः सः अन्वयी पदार्थः अस्य श्रुतस्य पदार्थस्य? इत्यादिरूपेण सा उत्सुकता पदार्थमात्रश्रवणजन्या भवत्येव। इयं स्थितिः वाक्यार्थविषये नास्ति। स

वाक्यार्थः वाक्यार्थान्तरापेक्षोऽपि स्वस्मिन् पूर्णः निराकांक्षश्चेति पदार्थवाक्यार्थयोः स्वरूपे भेदः।

संपूर्णं शरीरम् ज्ञातुम् द्रष्टुं वा प्रयतमानः पुरुषः शरीरस्य प्रत्येकम् अवयवम् क्रमशः पश्यति जानाति वा ततः सः साकल्येन तत्तच्छरीरविषयकज्ञानवान् दर्शनवान् च भवति। एवमेव लोकोत्तरप्रतिभासंपन्नः पुरुषः स्वप्रतिभावशात् क्रमशः अवयवज्ञानं दर्शनं च विनैव सकलमपि शरीरम् एकयैव दृष्ट्या ज्ञातुं द्रष्टुं वा समर्थो भवति तयैव रीत्या वाक्यार्थं स्वबुद्धौ स्थापयितुम् साधारणः श्रोता वाक्यार्थघटकपदार्थान् अन्वयार्हसंबंधयुक्तान् एकैकशः जानाति। ततः एव तस्य शृङ्खलात्मकवाक्यार्थज्ञानं जायते—अथवा असाधारणप्रतिभासंपन्नः श्रोता घटकीभूतसकलपदार्थान् परस्परं सान्वयान् समष्टिरूपेण (क्रमशः ज्ञानम् विना) एकत्वेनैव ज्ञातुं समर्थः भवति। एवं चेदंनिष्कृष्टं भवति, यत् साधारणावस्थायाम् श्रोता वाक्यघटकपदार्थानाम् अन्वयार्हसंबंधानां च ग्रहणपूर्वकम् स्वबुद्धौ ताम् अर्थशृङ्खलाम् रचयति या शृङ्खला पदार्थपदार्थान्वयजिज्ञासां श्रोतृबुद्धौ स्थापयति। स्थापितस्य च वाक्यार्थस्य स्वरूपम् स्थापिकायाः अर्थशृङ्खलायाः स्वरूपाद् अभिन्नमपि अर्थशृङ्खला प्रथमं बुद्धौ आयाति ततः सा एव वाक्यार्थरूपं धारयति इति यथाकथंचित् तयोः अर्थशृङ्खलावाक्यार्थयोः पौर्वापर्यवशात् तयोर्भेदः अत्र उक्तःवस्तुतः शृङ्खलात्मकम् एकम् अखण्डम् ज्ञानमेव वाक्यार्थ इति परमसिद्धान्तः वैयाकरणानाम्।

इयमुक्ता रीतिः पदार्थग्रहणमुखेन वाक्यार्थग्रहणस्य।

साक्षात् पदार्थनिरपेक्षतया अखण्डार्थस्य वाक्यार्थस्य ग्रहणरीतिः पदार्थग्रहणपूर्वकम् अन्वय्यर्थज्ञानप्रसूतवाक्यार्थग्रहणरीतिश्च उभे अपि भाषा शिक्षणकाले शाब्दबोधरूपफलप्राप्तये समर्थे स्तः। अन्यतरयापि रीत्या वाक्यार्थग्रहणकाले श्रोतुर्मनसि (बुद्धौ वा) हेतुभूताः केचन संस्काराः अनिवार्याः सन्ति। येषां संस्काराणामभावे उभाभ्यामपि रीतिभ्याम् अन्यतरया वा रीत्या वाक्यार्थबोधः दुर्लभः एव इति तेषामभिप्रायः। ते च संस्काराः एकाधिकाः। प्रस्तुतविचारे संस्काररूपाणां तेषां समेषामपि तथ्यानां समीक्षा नापेक्षिता अस्मद्विचारे, प्रत्युत तेषु तथ्येषु नैयायिकैः समावेशितस्य योग्यताख्यतथ्यस्य चर्चा, एतदध्यायस्य मुख्यवर्णनीयविषयतया प्रतिपादनीया वर्तते अस्मादेव हेतोः तामेव चर्चाम् आश्रयामः।

वक्तृनिष्ठस्य वाक्यार्थस्य श्रोतृबुद्धौ संक्रमणं तावत् न भवति यावत्, श्रोतुः वाक्यार्थज्ञानहेतुभूतकारकान्तरैः सह योग्यताख्यः संस्कारः न स्यात्, तावत् सः अन्येषु शाब्दबोधहेतुभूतेषु कारकेषु सत्सु अपि (आकांक्षादिषु) शाब्दबोधफलं वाक्यार्थज्ञानं प्राप्तुं न शक्नोति इति नैयायिकानां विश्वासः।

अयं विश्वासः व्यर्थः शाब्दबोधार्थम् आवश्यकहेतुसंग्रहे अस्य हेतोः बहिष्कारः कर्तव्यः येन अनावश्यकगौरवापत्तिर्न भवेत्। एवं योग्यतायाः शाब्दबोधोपयोगिसामग्र्याः बहिः स्थापनम् व्यर्थगौरवापत्तिनिरासश्च वैयाकरणपक्षस्य कृते अत्यावश्यकं कार्यमिति मत्वा नागेशः अस्मिन् प्रसंगे युक्तायुक्तत्वविचारपूर्वकम् वैयाकरणानाम् प्रातिनिध्यं करोति।

शक्तिग्रहः आसत्तिः आकांक्षा एतत्सदृशतत्त्वानाम् नैयायिकवत् वैयाकरणा अपि शाब्दबोधे हेतुत्वम् स्वीकुर्वन्ति। तत्र नैयायिकैः सह नास्ति मतभेदः वैयाकरणानाम् परंतु सर्वसम्मतैः एभिःशक्तिग्रहादिकारकैः सह योग्यतारूपस्य हेतोरपि शाब्दबोधफलार्थं स्वीकारः वैयाकरणानां नाभिमतः नैयायिकानां तु अत्यावश्यक अयमेव तयोर्विमतिहेतुः। अत्र शक्तिग्रहादीनाम् कारकाणाम् विशदं व्याख्यानं नास्माकं लक्ष्यम् अतः ततो विरम्य केवलम् शाब्दबोधाय योग्यताख्यं तत्त्वम् अस्ति न वा? इत्येव अस्माभिः समीक्ष्यते। इयं समीक्षा एव अत्र प्रसंगे अस्माकं लक्ष्यम्।

सिद्धान्तमुक्तावली, तर्कभाषा, तर्कसंग्रहः अन्ये च न्यायशास्त्रीया ग्रन्थाः योग्यतारूपस्य शाब्दबोधरूपफललाभाय परमावश्यकतत्त्वस्य स्वरूपम् इत्थम् निर्दिशन्ति।

"श्रोतृबुद्धौ वाक्यघटकयोः द्वयोः पदार्थयोः परस्परम् अन्वयबाधस्य अभावः" अभावनिश्चयो वा योग्यता (योग्यताज्ञानम्) अस्ति इति ते वदन्ति। फलतः श्रोतुर्मनसि इदं सुनिश्चितं भवति यत् वाक्यघटकेषु पदार्थेषु स्थितौ कौ अपि द्वौ पदार्थौ ईदृशौ न स्तः ययोर्मध्ये प्रकृतस्य अन्वयस्य प्रस्तावः व्यावहारिकदृष्ट्या अनुपपन्नः प्रतीयेत। एवं स्थितौ सत्यामेव श्रोता शाब्दबोधरूपं फलम् अश्नुते नान्यथा। इति न्यायसिसद्धान्तस्य सारांशः वर्तते।

एते नैयायिकाः वदन्ति वाक्यार्थविशेषनिरूपितशक्तिर्वाक्ये नास्ति अपितु पदार्थनिरूपिता शक्तिः पदे वर्तते। अत एव श्रोतुर्बुद्धौ एकैकशः पदार्थः उपस्थितो भवति ततः उपस्थितः सः प्रत्येकपदार्थः अन्येन पदार्थेन सह अन्वयार्ह

संबन्धेन संबद्धो भवति। एवं संबद्धा एव अर्थाः अर्थशृङ्खलाम् रचयन्ति। स एव अन्वितपदार्थनिर्मितशृङ्खलात्मकः एकः अर्थः एव वाक्यार्थः भवति। एवंभूतस्य वाक्यार्थस्य श्रोतुर्बुद्धौ निर्माणात् प्रागेव यदि श्रोतृबुद्धौ इदमायाति यत् वाक्यार्थघटकौ इमौ द्वौ अपि पदार्थौ अनेन संबन्धविशेषेण व्यावहारिक-तथ्यदृष्ट्या कथमपि अन्वयार्हौन स्तः तर्हि स्पष्टमेव तत्र योग्यताया अभावः यद्वशात् तत्र श्रोता (वाक्यार्थरूपम्) शाब्दबोधं न लभते। यतः शाब्दबोधविषयीभूतः वाक्यार्थस्तु श्रोतुश्चित्ते पदार्थसंयोजनमाध्यमेनैव स्वसत्तां लभते। नान्यथा। अतः योग्यताया अभावस्थले पदार्थसंयोजनं नास्ति तदभावे तन्निर्मेयवाक्यार्थबोधापरपर्यायस्य शाब्दबोधस्यापि स्फुरणं न भवति। एवं च सुस्पष्टं भवति यत् व्यवहारदृष्ट्या पदार्थद्वयसंसर्गबोधाभावस्य निश्चयः एव योग्यताख्यतत्त्वस्य अभावः कथ्यते।

श्रोतृबुद्धिस्थवाक्यार्थप्रकाशरूपशाब्दबोधं प्रति योग्यताज्ञानस्य हेतुत्वात् अत्र संसर्गबोधाभावस्थले अनुपपन्नसंसर्गवत् पदार्थद्वयघटितपदार्थसमूहे उपस्थिते सति अपि श्रोतुः शाब्दबोधो न जायते। इममेव नैयायिकाभिमतमर्थम् उदाहरणसमालोचनपूर्वकम् इत्थं विशदयामः।

नैयायिकाः वह्निना सिंचति इति वाक्यम् श्रुत्वा शाब्दबोधो न भवति इति वदन्ति। वैयाकरणास्तु सडिंडिमघोषम् अत्र शाब्दबोधम् अवश्यं स्वीकुर्तन्ति। नैयायिकाः चिन्तयन्ति यत् पदद्वयम् स्वार्थं कथयति अस्मिन् वाक्ये। परतुं उक्तयोः तयोः अर्थयोः संयोजनयोग्यः संबंधः (अन्वयार्हः संबंधः) सेचनक्रियां प्रति वह्नेः करणतारूपः न वर्तते स च लोकव्यवहारविरुद्धत्वात् श्रोतृबुद्धिगम्यः न भवति अतः अन्वये बाधः एव न तु बाधाभावः। अतः योग्यताभावात् अत्र शाब्दबोधो न भवति फलतःतदाश्रिता कापि प्रवृत्तिरपि न भवति। इत्थमनेन उदाहरणेन स्पष्टं भवति यत् अत्र अन्वयबाधस्य अनुभवः बाधाभावस्वरूपयोग्यतायाः अभावः श्रोतुर्बुद्धौ उपस्थितो भवति। तस्य उपस्थित्या प्रतियोगिभूताया योग्यतायाः अनुपस्थितिः। तथा च योग्यताया अनुपस्थितिः शाब्दबोधप्रतिबन्धिका अतः "वह्निना सिंचति" इत्यत्र शाब्दबोधो न भवति। एवं प्रतिनिधिदृष्टान्ते नैयायिकाः सर्वेष्वपि एवंविधेषु स्थलेषु अर्थात् लोकव्यवहाराननुमोदितवाक्यार्थेषु योग्यताख्यतत्त्वस्य अभाववशात् शाब्दबोधो न जायते इति स्थापयन्ति।

परन्तु सुविवेचनपूर्णया दृष्ट्या अयं सर्वोऽपि नैयायिकोक्तः तात्पर्यार्थः

परीक्ष्येत तर्हि नैयायिकानाम् मान्यता स्वीकार्या न भवति। यावत् मम ज्ञानम् तावत् नागेशः एव प्रथमो वैयाकरणः यः नैयायिकानाम् इमाम् मान्यताम् निष्फलां व्यर्थां वा साधयित्वा सुबहु सारवत् विचारजातम् स्वमञ्जूषाग्रन्थे उपन्यस्तवान्। अस्माकं वैयक्तिकदृष्ट्या तत् अत्यन्तं सफलम् वैयाकरणपक्षस्य कृते अवश्यमेव उल्लेखनीयं वर्तते। नागेशः स्वयुक्तिभिः न केवलम् शाब्दबोधाय योग्यताया अनिवार्याम् आवश्यकताम् नैयायिकोक्तां खण्डितवान् प्रत्युत नैयायिकानां योग्यताग्रहणविषये आग्रहम् तेषां भावं च परीक्ष्य समीक्ष्य च स्पष्टीकरणं प्रस्तुतवान् इत्यस्ति नागेशस्य विशेषः।

अनेन प्रसंगेन योग्यतां प्रति शाब्दबोधप्रक्रियां प्रति च भाषाग्रहणकाले बालकस्य मनोविज्ञानसम्मतमनःस्थितिं प्रति अत्यन्तं जागरितः सन् नागेशः कथयति शाब्दबोधे योग्यता, हेतुर्नास्ति अत एव योग्यताभावस्थले वह्निना सिंचति इत्यादौ शाब्दबोधो भवत्येव। योग्यताया हेतुत्वस्वीकरोव्यर्थः इति स योग्यतायाः व्यर्थतां साधितवान्। तेनैव सह नैयायिकानाम् मनःस्थितिम् अनुमाय कथयति नैयायिकसम्मताया योग्यतायाः वाक्यार्थग्रहणकाले महत्त्वपूर्णं मानवस्वभावानुकूलम् च स्थानं वर्तते। इति तु सर्वथा सत्यम्। योग्यता च शाब्दबोधाधिगते अर्थे मानवस्वभावानुकूल्यम् बुद्धिग्राह्यत्वादि च प्रत्याययति। परंतु शाब्दबोधस्तु इमां विनापि भवत्येव इति वैदुष्यपूर्णम् अस्ति नागेशस्य विवेचनम्। अथ वयं नागेशप्रदर्शितम् योग्यतापदार्थस्य स्वरूपम् प्रकाशम् आनेष्यामः येन ज्ञातेन वयम् एतत्समर्थनाय प्रभवामः यत् योग्यतारूपः अर्थः येषु वाक्यार्थेषु विद्यते तेषु शाब्दबोधप्रसंगे बोधविषयीभूतोऽपि योग्यतारूपः अर्थः शाब्दबोधस्य प्रमुखो हेतुर्नास्ति अपितु स योग्यताबोधः शाब्दबोधफलरूपः एव नतु शाब्दबोधरूपः।

**नैयायिकोक्तं योग्यताज्ञानं शाब्दबोधस्य कारणं नास्ति इति वैयाकरणसिद्धान्तस्य स्पष्टीकरणम्।**

योग्यताया अभावे शाब्दबोधाभावस्य स्थितिम् दर्शयितुम् नैयायिकाः "वह्निना सिंचति" इति प्रतिनिधिवाक्यं प्रस्तुवन्ति नागेशस्य अत्र अयमाक्षेपः वर्तते—नैयायिकानुसारेण उक्ते उदाहरणे अन्वयबाधस्य निश्चयः एव योग्यताया अभावः उक्तः। ततः एव स्वाभिमतहेतुभूतयोग्यताभाववशात् शाब्दबोधाभावः इति वस्तुस्थितिः तेषां मते। परंतु नैयायिकानामियं धारणा न युक्तिसिद्धा।

यथा द्राविडभाषानभिज्ञः कश्चित् पाश्चात्यः पुरुषः द्रविडभाषां शृणोति तदा भाषां श्रुत्वापि सः श्रोता कस्यामपि क्रियायां न प्रवर्तते नापि च निवर्तते। श्रवणस्य न कोऽपि प्रभावः तस्मिन्। नापि कापि प्रतिक्रिया तस्य श्रोतुः। सः मूकवत् तिष्ठति।

ईदृशी स्थितिः वह्निना सिंचति इत्यादि योग्यताहीनवाक्येषु नास्ति। योग्यताहीनम् इदं वाक्यम् (वह्निना सिंचति इत्येतद्रूपम्) श्रुत्वा द्रविडपाश्चात्त्योदाहरणवत् वयं न किमपि अवधार्य मूका न भवामः। प्रत्युत अस्मिन् अवसरे एकस्य असंगतस्य अर्थस्य ज्ञानम् अस्मन्मनसि भवत्येव। अस्य असंगतस्य अर्थस्य ज्ञानम् शब्दश्रवणोत्तरमेव जातम्। इदं ज्ञानमेव शाब्दबोधः इति कथयितुम् अस्मान् कः अवरोद्धुम् शक्नुयात्।

एवं च शाब्दबोधोत्तरमेव वह्निना सिंचति इति श्रुत्वा प्रश्नावसरः एव, योग्यताहीनवाक्यादपि शाब्दबोधस्य स्थितिम् द्रढयति।

नागेशोक्तामिमां कोटिम् खण्डयन् नैयायिकः कथयितुम् शक्नोति यत् "द्रविडपाश्चात्त्योदाहरणे शक्तिग्रहरूपशाब्दबोधहेत्वभावात् मूकता न तु योग्यताभाववशात् केवलात्—अतः तदुदाहृत्य उभयत्र योग्यताभावं दर्शयित्वा एकत्र शाब्दबोधाभावः अन्यत्र शाब्दबोधः इति कथनम् असंगतम् द्वयोरपि वाक्ययोः भेदः स्पष्टः तर्हि तत्र केवलमिदमेवोच्यते दृष्टान्तदार्ष्टान्तिकयोः साकल्येन सादृश्यं नास्ति अपितु एकदेशेन साम्यवशादपि दृष्टान्तः संपद्यते।

पार्थिवादिपरमाणुनिर्मितत्वात् मुखं तत्त्वान्तरोपादाननिर्मितचन्द्रात् सर्वथा भिन्नमपि केवलम् आह्लादकत्वरूपैकदेशसाम्यात् मुखं चन्द्रः इत्यादिव्यवहाराः जायन्ते तथैव अत्रापि केवलं द्वयोरपि वाक्ययोः योग्यताभावरूपैकदेश-साम्याधारितमूकतायाः चर्चा कृता वर्तते। योग्यताभावरूपैकदेशसाम्यात् वह्निना सिंचति इत्यत्रापि मूकता अपेक्षिता सा च नास्ति अनुभवे, अतः एकत्र द्राविडोदाहरणे मूकता यथा योग्यताया अभावे तथैव योग्यताया अभावे अन्यत्र वह्निना सिंचतीत्यादौ नास्ति मूकता इति कृत्वा योग्यतायाः हेतुत्वम् शाब्दबोधाय नापेक्षितम्। अनेककोटिक्रमैः स्वकथने किंचित् शैथिल्यम् अवगत्य नागेशः स्वमतस्थापनाय अन्याः प्रबलाः युक्तीः प्रकटयति।

एवमेव यदा वादिप्रतिवादिनोः वाङ्मयः संघर्षः प्रवर्तते तदा वादी, असंगतिपूर्णाम् प्रतिवादिनः उक्तिं श्रुत्वैव तां खण्डयति। प्रथमं शृणोति ततः

अर्थं विभाव्यति ततः खण्डयति। तदा इदं तु निश्चितमेव भवति यत् वादिनः युक्तिमनुसृत्य प्रतिवादि कथनम् असंगतम् भवति। अत एव तस्य वादिनः मनसि प्रतिवादिवाक्यस्य सैव स्थितिःया अस्मत्पुरतः 'वह्निना सिंचति' इति वाक्यस्य वर्तते। (वहि्नना सिंचति इति वाक्यवत्) योग्यता शाब्दबोधे अनिवार्यो हेतुः इति स्वीकारे वादिनः मनसि वह्निना सिंचति इत्यस्य अर्थवत् प्रतिवादिनः उक्तेः असांगत्यवशात् शाब्दबोधः सुलभो न भविष्यति। परंतु वादिप्रतिवादिचर्चायामपि वादिनः मनसि प्रतिवादिवाक्यैः शाब्दबोधस्तु भवत्येवेत्यनुभवः।

ईदृशस्थलेषु प्रतिवादिवाक्येष्वपि वह्निना सिंचति इति स्थलीयासंगतिवत् महती असंगतिर्वर्तते। एवं च असंगतिपूर्णवाक्येषु व्यवहाराधारिततथ्याभावेऽपिवादिदृष्ट्याप्रतिवादिदृष्टया च शाब्दबोधस्य शतशः अनुभवविषयत्वसिद्धेः व्यवहाराधारिततथ्यसत्तारूपयोग्यतासत्त्वे एव शाब्दबोध इति नैयायिकमताग्रहः अनुभवविरुद्धत्वात् त्याज्यः। युक्तिविरुद्धश्चाय-मभिप्रायः। अस्मिन् स्थले वादिनः शाब्दबोध एव न भवति इति दुराग्रहो नैयायिकैः उपस्थाप्यते चेत्तर्हि प्रतिवादिवाक्यस्य खण्डने वादिनः अस्माभिरनुभूता तत्परता कथमुपपादयितुं शक्या स्यात् अतः स्पष्टमिदं यत् वादी प्रतिवादिनः असंगतिपूर्णाम् अत एव बाधनिश्चयपूर्णाम् योग्यताहीनाम् उक्तिं श्रुत्वापि शाब्दबोधं लभते। अनयैव रीत्या वह्निना सिंचति इति श्रुत्वापि शाब्दबोधो भवति। अत्र शाब्दबोधस्य सिद्धत्वादेव अद्रवेण वह्निना कथं सेकः संभवति? इति प्रश्नस्य उपपत्तिर्भवति। योग्यताहीनवाक्यात् शाब्दबोधाभावे इयं प्रश्नोपपत्तिर्दुर्लभैव। अतः योग्यताज्ञानं शाब्दबोधे कारणं नास्ति इत्येव स्वीकार्यम् नैयायिकैः इति वैयाकरणपक्षस्य संकेतः।

अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः॥
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरात्
मूकानां प्रवरेण कूर्मरमणीदुग्धोदधे रोधसि॥

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः॥

अनयोः श्लोकयोः अर्थानुरोधेन प्रतिपदम् एतावती अर्थासंगतिः

श्रोतुर्मनसि जायते यया असंगत्या तत्र जायमानवाक्यार्थबोधकाले तीव्रः बाधनिश्चयः अर्थात् योग्यताया अभावः अनुभूयते। तथापि उक्ते उदाहरणद्वये श्लोकद्वयेऽपि शाब्दबोधो भवत्येव। अनयोः श्लोकयोः श्रवणोत्तरम् श्रोतुर्मनसि उत्पद्यमानं हास्यम् श्लोकपाठकस्य मूर्खत्वसंपादनप्रवृत्तिश्च अत्र शाब्दबोधसत्तायां प्रमाणत्वेन दातुं शक्यते।

यदि अनयो श्लोकयोः अयोग्यतानामककारणवशात् शाब्दबोधस्य प्रतिबन्धकता अभिमता स्यात् तर्हि इमौ श्रुत्वा शाब्दबोधाभावेन सर्वदा असंभवपदार्थजन्यहास्यादि अपि नोत्पन्नं स्यात् श्रोतुमर्नसि। योग्यताया अभावेऽपि शाब्दबोधसिद्धिम् साधयितुम् इमाः पूर्वोक्ताः युक्तयः पूर्णतया नागेशस्यैव। एवं च नागेशक्तयुक्तिसिद्धस्य अस्य सिद्धान्तस्य नैयायिकसम्मतयोग्यताया अभावेऽपि शाब्दबोधसत्तारूपस्य स्वीकार्यताम् न कापि बाधा दृश्यते। अत एव तटस्थदृष्टया पक्षपातरहितदृष्टया वा कथयितुं शक्नुमः यत् शाब्दबोधार्थम् योग्यताया अनिवार्यहेतुत्वस्वीकृतिः व्यर्था।

नैयायिकमतखण्डनार्थम् एतासां युक्तीनाम् उपयोगेन सहैव एतद्विरोधे संभावितयुक्तिखण्डनं विधाय नागेशः इमम् सिद्धान्तम् दृढीकृतवान्।

विरोधिनः नैयायिकाः कथयितुं शक्नुवन्ति योग्यतां शाब्दबोधकारणं मत्वापि आपादितयोग्यताहीनस्थलेषु अनुभूतप्रश्नावसरः प्रतिवादिखण्डनम् हास्यं च उपपादयितुं शक्यम् यतः तत्र स्थलेषु वयं विरोधिनः एतत् स्वीकुर्मः यत् एषु स्थलेषु बोधस्तु भवत्येव परंतु स बोधः नास्ति वाक्यार्थरूपः पदार्थसंसर्गघटितः अपितु केवलं पदार्थबोधरूपः एव भवति। स एव पदार्थ बोधः प्रश्नादीन् उपपादयति। यम् अर्थम् श्रुत्वा श्रोतुः कापि मानसिकी व्यावाहरिकी वा प्रवृत्तिर्जायते स एव अर्थः शाब्दबोधः तं प्रति एव योग्यताया हेतुत्वमस्माभिः स्वीक्रियते। परस्परसंबंधरहिता पदार्थोपस्थितिस्तु नैव वाक्यार्थः नैव शाब्दबोधः इति। अस्य मतस्य स्वीकारेण योग्यता, शाब्दबोधे (वाक्यार्थरूपे परस्परसंबंधघटितपदार्थरूपे) कारणम् इत्यस्मन्मते न कोऽपि आक्षेपः संभवति। एषु स्थलेषु योग्यताभावात् शुद्धः वाक्यार्थरूपः शाब्दबोधः नैव भवति, कामम् एषु स्थलेषु कोऽपि शाब्दबोधातिरिक्तः बोधः जायमानः अनुभूयते। स एव पदार्थबोधः (शाब्दबोधस्वभावभिन्नः) प्रश्नादीन् उपपादयति इति नैयायिकानां पक्षस्थापनस्य संभावना वर्तते। अत एव तां संभावनामपि छेत्तुम् नागेशः इत्थं विवृणोति इदं नैयायिकोक्तम् खण्डयति।

नागेशः पृच्छति—योग्यतासहितवाक्येष्वेव शाब्दबोधः वाक्यार्थबोधरूपः भवति योग्यताहीनवाक्येषु केवलं पदार्थबोध एव भवति इति विधाने किं प्रमाणम्? अस्य भेदस्य साधने कः आधारः? अस्य प्रश्नस्य नागेशोल्लिखितस्य नैयायिकपक्षतः न किमपि सुस्पष्टम् समाधानकारकम् च उत्तरं लभ्यते। एतद्भेदस्य कल्पना अप्रामाणिकी अत एव त्याज्या एवं च योग्यताहीनवाक्येषु योग्यतासहितवाक्येषु च सर्वत्र शाब्दबोधः भवत्येव—अन्यदेतत् यत् एकत्र स शाब्दबोधः असंगतः अन्यत्र संगत इति। नैयायिकानुसारेण प्रवृत्त्यप्रवृत्त्योः कारणम् क्रमशः वाक्यार्थबोधः पदार्थबोधश्च इति। अत एव योग्यतासहितवाक्यजन्यवाक्यार्थबोधात् प्रवृत्तिःयोग्यतारहितपदसमूहात् केवलं पदार्थबोधः अत एव अप्रवृत्तिः परन्तु हास्यादिप्रश्नाद्यवसरः उपपद्यते एवं च योग्यता शाब्दबोधे हेतुरिति अस्मत्स्वीकृतिः अक्षुण्णा सिद्धयति। इदमेव तथ्यम् वक्ष्यमाणरीत्या स्पष्टतरं क्रियते।

नैयायिकः अत्र वक्तुं शक्नोति यत्र विशिष्टज्ञानम् वाक्यार्थरूपः शाब्दबोधो वा तत्रैव प्रवृत्तिनिवृत्ती भवतः यत्र केवलं पदार्थबोधः न तत्र प्रवृत्ति-निवृत्ती भवतः इति। अत एव योग्यताहीनवाक्येभ्यः जायमानबोधः वह्निना सिंचतीत्यौ प्रवृत्तिं नोत्पादयति योग्यतासहितवाक्येभ्यः जायमानं शाब्दबोधं श्रुत्वा प्रवृत्त्यादिर्भवत्येव। एवमेव इयमेव स्थितिः मिथ्याभिशापरूपकादिकाव्य-जन्यसुखदुःखादिस्थलेष्वपि योग्यताया अभावे भवति भवदनुसारेण पदार्थबोधमात्रे श्रोतुः क्रोधादिताडनादिसुखःदुःखाद्यनुभवो न जायेत।

एवंविधस्थलेषु पदार्थमात्रबोधेऽपि ताडनादिप्रवृत्तिदर्शनात् पूर्वोक्तः नैयायिकसमर्थितः नियमः खण्डित एव भवति। नियमस्यास्य एवं खण्डितत्वात् वयं वैयाकरणाः कथयितुं शक्नुमः बाधनिश्चयस्थले यत्र नैयायिकाः विशिष्टज्ञानं न स्वीकुर्वन्ति तत्रापि तादृश एव प्रवृत्तिजनकः शाब्दबोधः भवति यथा बाधाभावरूपयोग्यतास्थले भवति इति।

एवंविधेन वैयाकरणानां स्पष्टीकरणेन योग्यताहीनैः योग्यतासहितैः उभयविधैरापि पदार्थसमूहैः जायमानयोः शाब्दबोधयोः बोधदृष्टया न कोऽपि भेदः सिद्धयति। अतः तद्भेदमाश्रित्य क्वचित् प्रवृत्तिः क्वचित् अप्रवृत्तिः इति असिद्धं भवति। "अग्निना सिंचति" एतत्सदृशयोग्यताहीन-पदार्थसमूहैः उत्पन्नस्य अर्थस्य ग्रहणानन्तरमेव श्रोतुः प्रवृत्तिः अग्निकरणकसेचने न भवति।

यथा घटमानय इति श्रुत्वा भवति। एतद्‌भेदस्य एकत्र प्रवृत्तिः अन्यत्र अप्रवृत्तिः इति रूपस्य कृते शाब्दबोधविशेषः न हेतुः यतः प्रवृत्तिं प्रति योग्यतानिश्चयः एव कारणम् न तु शाब्दबोधं प्रति योग्यतानिश्चयस्य कारणता। योग्यतानिश्चयस्य कारणता प्रवृत्तिं प्रति सिद्ध्यति। इति अन्यदेतत्। घटाभावस्थले स्थितं श्रोतारमुद्दिश्य यदि घटमानय इत्युच्यते तर्हि तत्रापि वाक्यार्थपूर्तौ श्रोतुः प्रवृत्तिः भवितुं न शक्नोति परंतु एतत्स्थलीय प्रवृत्त्यभाववशात् अस्माद् वाक्याद् विशिष्टार्थबोध एव न जातः इति कथनम् अनुभवविरुद्धम्। एवमेव वाक्यार्थदृष्ट्या इदं वाक्यम् योग्यताहीनम् इत्यपि कथयितुं न शक्यम्। तात्पर्यं तु एतावदेव यत् श्रोतुः प्रवृत्तेर्हेतुः तु विशिष्टपदार्थोपस्थितः (वाक्यार्थोपस्थितेः) पृथक् पृथक् पदार्थोपस्थितेश्च भिन्नः अतिरिक्तो वा एव भवति न तु योग्यता- संपन्नवाक्यजन्यशाब्दबोधमात्रात् प्रवृत्तिःपदार्थबोधमात्रात् न प्रवृत्तिर्भवति इति नियमः अनुभववीथीमारोहति। इदमेव तथ्यम् समस्तप्रघट्टकात् अभिधीयते।

नैयायिका यद्वाक्यम् योग्यतासहितं कथयन्ति तत्रापि घटाभावस्थले घटमानयेत्यादौ प्रवृत्तेरभावः दर्शितः एव। एवं प्रवृत्त्युत्पादकता प्रवृत्त्यनुपादकतारूपभेदोत्पादने विशिष्टवाक्यपदार्थोपस्थितिमात्ररूपकारणं समर्थं न भवति। विशिष्टवाक्यपदार्थमात्ररूपयोः उभयोरपि वाक्ययोः प्रत्येकं वाक्यम् प्रवृत्त्युत्पादकम् प्रवृत्यनुत्पादकं च वर्तते। एवं स्थितौ अग्निना सिंचतीत्यादौ वाक्ये अथ सामान्यवाक्ये न किमपि तात्त्विकंभेदकम् दृश्यते। नैयायिकोक्तयोग्यताया अभावस्थले अग्निना सिंचतीत्यादिवाक्येभ्यः प्रश्नाद्यनुभवेन अनुमेयः वाक्यार्थबोधः भवत्येव। ईदृशे तथ्ये स्थापिते सत्यपि वाक्यार्थज्ञानाय बाधाभावरूपयोग्यताज्ञानस्य हेतुत्वम् स्वीकार्यम् इति वदन्तो नैयायिकाः वक्ष्यमाणस्थितेः उपपादनं कर्तुम् असमर्थाः एव भविष्यन्ति।

एवं स्थितौ का आवश्यकता? नैयायिकानां कृते वर्तते। यद्वशात् वक्ष्यमाणा दुःस्थितिः असमर्थता च उत्पन्ना भवेत्।

वाक्यार्थज्ञानार्थम् बाधाभावरूपयोग्यतास्वीकारेण पदार्थबोधाय योग्यताया अनावश्यकत्वात् पदार्थबोधः वाक्यार्थबोधात् भिन्नः पदार्थबोधः योग्यताया अभावस्थले अपि भवति स तु योग्यतासंपन्नावाक्येभ्यः जायमानवाक्यार्थस्वरूपशाब्दबोधात् भिन्नः इत्येवरूपायाः स्वमान्यतायाः रक्षां कर्तुम् नैयायिकाः असमर्था एव भविष्यन्ति। यतः उक्तरीत्या उभयत्रापि

योग्यताभावस्थले योग्यतासंपन्नस्थले च जायमानबोधयो: न किमपि भेदकं तैर्नैयायिकैः स्थापयितुं शक्यम्। संभावितम् प्रवृत्त्युत्पादकत्वानुत्पादकत्व-रूपकारणं तु अस्माभि: पूर्वमेव खण्डितं वर्तते। भेदकविशेषसत्ताभावे बोधरूपसामान्यफलप्राप्तेः एकत्र योग्यता (वाक्यार्थविषये) अन्यत्र (पदार्थमात्र बोधे) योग्यताया अभाव: इति कथनमपि अश्रद्धेयमिव अनुभूयते। पूर्वपंक्तिषु नागेशानुसारेण उभयत्रापि वाक्ये बोधस्थिति: वैयाकरणपक्षानुसारेण साधितैव। अस्माभि: पूर्वपंक्तिषु इदमपि खण्डितं वर्तते यत् श्रोतु: प्रवृत्ति: तत्र योग्यतास्थलीयवाक्यार्थबोधं श्रुत्वा एव भवति । तस्य अप्रवृत्तिश्च योग्यताहीनस्थलीयपदार्थमात्रबोधं श्रुत्वा भवति। एवम् प्रवृत्त्यप्रवृत्तिभेदकमपि स्थिरीकर्तुं नैयायिकैः न शक्यते। योग्यताया एव भेदकतत्त्वत्वेन स्वीकारे घटाभावस्थले घटमानय इत्युदाहरणदानेन योग्यतास्थलेऽपि अप्रवृत्तिदर्शनात् योग्यतैव प्रवृत्तिकारिणी तदभाव एव अप्रवृत्तिहेतुरिति स्वीकार: पूर्वपंक्तिषु अस्माभिः खण्डित एव।

एवं योग्यताहीनवाक्येभ्य: 'वह्निना सिंचति' इत्यादौ प्रवृत्तिर्नजायते। एष बन्ध्यासुतो यातीत्यादौ योग्यताहीनवाक्येभ्य: प्रश्नादिकरणे प्रवृत्तिर्जायते। अत एव योग्यताहीनम् वाक्यम् पदसमूहो वा सर्वदा अप्रवृत्तिहेतुरिति अपि कथयितुं न पार्यते।

एवं च प्रवृत्त्यप्रवृत्ती, योग्यताजन्यवाक्यार्थबोधस्वरूपशाब्दबोधं प्रति अथ च योग्यताहीनपदार्थमात्रबोधं प्रति कारणत्वेन नैयायिकैः स्थापयितुं न शक्येते। अत: अनयो: बोधयो: भेदकतथ्येप्रकाशनासामर्थ्यम् आपतत्येव नैयायिकेषु। ततश्च एतस्य असामर्थ्यस्य वशात् बोधत्वेन समानयो: योग्यतारहितयोग्यतासहितपदार्थसमूहबोधकवाक्यजन्यबोधयोः एकत्र शाब्दबोधत्वाङ्गीकार: अन्यत्र केवलं बोधतास्वीकार:अनर्गल: प्रलाप: एव। एवं च आपादितस्थिते: समाधानं कर्तुम् नैयायिका असमर्था एव। अत: तै: दुराग्रहं त्यक्त्वा योग्यतासंपन्नयोग्यताहीनेषु वाक्येषु उभयविधेष्वपि उदाहरणेषु शाब्दबोधस्वीकार: एव कर्तव्य: येन पूर्वोक्ता: सकला अपि आपत्तय: दूरी भवन्ति। फलत: योग्यता शाब्दबोधे कारणम् इत्यादि तैर्न मन्तव्यम्। इति नैयायिकमतं प्रति नागेशस्य परामर्शो विद्यते।

एवं सर्वस्मिन् सिद्धे सत्यपि लोकेयेषाम् वाक्यार्थानाम् व्यावहारिकी उपपत्ति: संभवति यथा राम: पठति इत्यादौ तथा च येषां वाक्यार्थानाम्

व्यावहारिकी उपपत्तिः न सिद्ध्यति यथा वह्निना सिंचतीत्यादौ उभयत्रापि वाक्यार्थस्तु ज्ञायते एव। स एव ज्ञातः वाक्यार्थः स्वस्ववाचकवाक्यं पदसमूहं वा पृथक् पृथक् करोति उपपत्त्यनुपपत्तिवशात्।

अस्य पार्थक्यस्य आधारेणैव पूर्वं वाक्यम् (योग्यतासहितवाक्यम्) प्रामाणिकम् अपरंच (योग्यताहीनम्) अप्रामाणिकम् इति कथ्यते। तत्र अस्मिन् भेदसाधने हेतुः अयमेव यत् वाक्यार्थस्य व्यावहारिकी उपपत्तिः अथच पदसमूहस्य वाक्यस्य वा व्यावहारिकी अनुपपत्तिः एव वर्तते। एतावान् भेदस्तु नागेशेनापि स्वीकृतः योग्यतासंपन्नयोग्यताहीनवाक्यार्थस्थलयोः। परन्तु शाब्दबोधस्तु उभयत्रापि भवत्येव स च समानः एव। उभयस्थलीयबोधस्य शाब्दबोधत्वस्वीकारे न कापि बाधा प्रत्युत शब्दश्रवणोत्तरमेव उभयोरपि जायमानत्वात् तयोः शाब्दबोधता समाना एव सिद्ध्यति। शाब्दबोधोत्तरमेव उपपत्तिः अनुपपत्तिर्वा भवति। अतः उभयत्रापि शाब्दबोधसाधने न कोऽपिदोषः।

अथ नैयायिकमतं प्रति सहानुभूतिप्रदर्शनधिया नागेशः चिन्तितवान् यत् किमर्थम् इमे नैयायिकाः एवंविधपूर्वोक्तस्थितिसत्तायामपि योग्यताम् शाब्दबोधस्य कारणं मत्वा गौरवदोषग्रस्ताः भवन्ति? तत्र अवश्यमेव किमपि कारणं स्यादेव। नागेशदृष्ट्या नैयायिकोक्ता शाब्दबोधकारणीभूता योग्यता, योग्यता नास्ति तद्रूपायाः ग्रहणेनैव ते पूर्वोक्तरीत्या दोषभाजः भवन्ति वस्तुतः तैः योग्यता तु अस्मदभिमता वक्ष्यमाणस्वरूपैव स्वीकर्तव्या नेतरा येन तेषु दोषः अपि नापद्येत योग्यताकारणस्वीकारं प्रति चिन्तनमपि सफलं भवेत्। तदनुसारेण नागेशः कथयति—शाब्दबोधोत्तरम् कस्यापि अन्यस्य अर्थस्य भानम् अन्यत् स एव अर्थः शाब्दबोधात् पूर्वम् श्रोतुर्मनसि शाब्दबोधं प्रति आवश्यककारणत्वे न स्वीक्रियते स एव शाब्दबोधोत्तरम् प्रतीयते। शाब्दबोधोत्तरं जायमानः अर्थः व्यवहारसाधकः सन् एव योग्यतावान्। परन्तु सा योग्यता नैयायिकवत् श्रोतृचित्तगतशाब्दबोधसामग्रीत्वेन न स्वीकार्या प्रत्युत शाब्दबोधोत्तरम् न तु कारणम् इत्येव मन्तव्यम्। अनेन सिद्धान्तेन वहिनना सिचंतीत्यादौ एष बन्ध्यासुतो यातीत्यादौ च शाब्दबोधः निर्बाधः। नैयायिकोक्तयोग्यताया अस्वीकारात्। शाब्दबोधोत्तरम् जायमानम् व्यवहारसाधकम् अर्थमानम् एव योग्यता। तदवशात् घटमानय इत्यत्र प्रामाणिकवाक्यता योग्यतासंपन्नता व्यवहार्यता च सिद्धयति। वह्निना सिंचति इत्यत्र एष बन्ध्यासुतो याति इत्यत्र

च श्लोकयोरनयोः उदाहरणभूतयोः अपि शाब्दबोधोत्तरमेव जायमाने अर्थभाने व्यवहारासाधकतावशात् बाधाभावाभावात् योग्यताया अभावः इमे वाक्ये अप्रमाणिकेयोग्यतारहिते परंतु शाब्दबोधसंपन्ने इति तत्त्वम् योग्यताया विषये अवधारणीयम्।

एवं शाब्दबोधोत्तरं जायमानस्य अर्थभानस्यवशात् द्विविधतां प्रेक्ष्यैव योग्यताविषये नैयापिकरुचिः उत्पन्ना परंतु सा तैः अन्यथा व्याख्याता अत एव नागेशेन तस्य संशोधनं कृतम्। नागेशस्य अयमभिप्रायः प्रभाकर-मतहरिमतयोश्च अनुसारी वर्तते इत्यपिप्रकरणेऽस्मिन् वक्तव्यमेव।

एतन्मतानुसारेण शाब्दबोधे भानविषयीभूता योग्यता, प्रसंगप्राप्तान्वय प्रयोजककार्यशक्तिमत्ता इतिरूपा एव वर्तते। यतः सा शाब्दबोधे हेतुभूतानास्ति अतः तस्या अभावेऽपि अग्निना सिंचतीत्यादौ शाब्दबोधो भवति। शाब्दबोधोत्तरम् निरुक्तस्वरूपायाः तस्या योग्यतायाः अभावज्ञानं संपद्यते। ततश्च योग्यताभाववशात् वाक्यार्थे अप्रामाण्यग्रहः जायते। एतद्रूपाया योग्यतायाः प्रभाकर-हरि-नागेशसदृशैः विद्वद्वरैः कारितेन परिचयेन वयं कथयितुं समर्था यत् एते विद्वांसः तदनुयायिनश्च मनोविज्ञानशास्त्रानुमोदितस्तरे श्रोतुर्मनसः गतिम् सुचारुतया ज्ञातवन्तः। वक्ष्यमाणेन उदाहरणेन इदं कथनम् सूपपन्नं भवति। 'घटेन जलमाहर' वाक्यमिदं श्रुत्वा श्रोतुर्भानविषयीभूतायाः नागेशप्रतिपादितायाः उक्तयोग्यतायाः प्रभाववशादेव श्रोता सच्छिद्रेतरघटेन जलमानेयम् इति बुद्धिं लभते। यदि एतद्रूपायाः योग्यतायाश्च भानम् अनिवार्यतया शाब्दबोधोत्तरम् न स्वीक्रियते चेत् तर्हि श्रोतुर्मनसि जायमानस्य सच्छिद्रेतरत्वप्रकारकबोधस्य उपपत्तिः कदापि न संभवति। अयम् सच्छिद्रेतरप्रकारकबोधः सरलतया अवगन्तुम् शक्यः परन्तु तं बोधमवाप्य तस्य नियमाकारेण (यथा नागेशोक्तयोग्यतासंपादनरूपनियमेन कृतः) प्रस्तुतीकरणम् एकस्य सफलस्य मनोविज्ञानशास्त्रमर्मज्ञस्यैव कृते साध्यं भवति न तु यस्य कस्यचित् बुद्ध्या तत् साध्यम्। अपरेणापि एकेन उदाहरणेन एतत् स्पष्टीक्रियते—श्रुतिवाक्यम्—"खादिरे बध्नाति" इति मीमांसाशास्त्रे प्रसिद्धम्। अत्र भानविषयस्वरूपा योग्यता खादिरे स्तम्भे वर्तते। सा च अस्वातन्त्र्य-फलकसंयोगविशेषरूपबन्धनशक्तिमत्ता रूपा एव। "खादिरे बध्नाति" इत्यस्य तात्पर्यं तु उक्तयोग्यतासंपन्ने काष्ठे एव बन्धनं कुर्यात् तच्च काष्ठं खादिरं चेत् तदा उत्तममेव संयोगवशात् खादिरं काष्ठं नोपलभ्येत चेत् तदा खादिरवत्

उक्तयोग्यतासंपन्ने कस्मिन्नपि काष्ठे बन्धनमुचितम् इति मीमांसकानामाचारः। परन्तु एतन्मीमांसावाक्यसूचिता उक्तस्वरूपा योग्यता तत्र अन्यस्मिन् काष्ठे अवश्यं स्थितास्यात्। एतावानेव अभिप्रायः खादिरे बध्नाति इति श्रुतिवाक्यस्य अत एव च खादिराभावे तादृशयोग्यतासंपन्ने काष्ठे बन्धनक्रिया भवति। एवं स्थितौ एतद्योग्यतावशादेव खादिरेतरकाष्ठेऽपि श्रौतत्वम् (श्रुतिपाद्यत्वम्) सिद्ध्यति नान्यथा।

एवं योग्यताबोधनिश्चयः शाब्दबोधे कारणं नास्ति तदभावेऽपि शतशः शाब्दबोधदर्शनात्। नागेशसमर्थितस्वरूपा योग्यता तु सा, या, शाब्दबोधोत्तरं श्रोतुश्चित्ते जायतेवा श्रोतुर्भानविषयरूपेण तिष्ठति। एतत्तथ्यविशेषस्य प्रकाशनेन नागेशः शाब्दबोधहेतुभूतसामग्रीसमूहे योग्यतायाः निवेशरूपव्यर्थगौरवदोषात् अस्मान् रक्षितवान् अन्यथा वयमपि शाब्दबोधहेतुत्वेन नैयायिकसम्मतयोग्यतायाः स्वीकारेण व्यर्थमेव नैयायिकवत् उक्तरीत्या गौरवदोषग्रस्ताः भवेम इति।

## अथ निपातार्थविचारः

संक्षिप्तेऽस्मिन् प्रकरणे निपातपदार्थस्य विचारमधिकृत्य श्रीमद्भिर्नागोजीभट्टैः प्रदर्शितानि कतिपयमहत्त्वपूर्णतथ्यानि अस्माभिः प्रस्तूयन्ते। यद्यपि स्वपूर्ववर्तिभिः वैयाकरणैः अन्यैश्च निपातपदार्थमधिकृत्य सारगर्भितानि तथ्यानि पर्याप्तं प्रकाशितानि सन्ति, तथापि वक्ष्यमाणतथ्यत्रयस्य नागेशभट्टेन विशदं प्रामाणिकं वैयाकरणच्छात्रैः सरलतया बोधयोग्यम् महत्त्वशालि च वर्णनं तथा कृतं वर्तते यथा अन्यैः विचारकैः न कृतम् इति विमृश्य लोभसंवरणम् अशक्यं जातमिति तत् प्रकाश्यते। एतानि तथ्यत्रयाणि इत्थम् द्रष्टव्यानि यथा—

एतत्प्रसंगे नागेशः स्वपूर्ववर्तिनाम् आचार्याणाम् निपातार्थविवेचने दृष्टानां न्यूनतानां परिहारं कृतवान् इत्येकं तथ्यम्। द्वितीयं च—स्वपूर्ववर्तिवाङ्मयस्थ निपातविशेषाणाम् अर्थविशेषस्य अन्यैरस्पृष्टं सूक्ष्मं सुस्पष्टं च प्रतिपादनम्। तृतीयं च तथ्यम् इदम् यत् कतिपयनिपातसंज्ञकशब्दविशेषाणाम् शाब्दबोधप्रकारोद्बोधनम्। एतत्तथ्यत्रयसमावेशेन अत्रत्यं नागेशीयं विवेचनम् संस्कृतव्याकरणशास्त्रे उल्लेखनीयं वस्तु वर्तते इति धिया अस्य तथ्यत्रयस्य विशदव्याख्योपेतसमावेशः अस्माभिः अत्र कृतः वर्तते।

## वाक्यार्थखण्डेषु निपातार्थस्य स्थितिः

निरुक्तकारात् आरभ्यैव वाक्यार्थस्य पदार्थरूपेण चतुर्धा विभागः कृतः वर्तते इति तु "नामाख्यातोपसर्गनिपाताः" इति निरुक्तकारस्य पंक्त्या स्पष्टमेव। तथाहि वाक्यार्थः अखण्डः एव वर्तते। छात्राणां कृते संस्कृतभाषायाः वाक्यमात्रजन्यवाक्यार्थबोधाय व्याकरणशास्त्रज्ञानरूपः उपायः अभिमतः इत्यपि सर्वविदितमेव। आवश्यकत्वेन स्वीकृताः असन्तोऽपि कार्यवशात् स्वीकृताः चत्वारः पदार्थाः वाक्यार्थघटकतया शास्त्रज्ञैर्निरूपिताः सन्ति।

तेषां ज्ञानम् साक्षात् वाक्यार्थज्ञानापेक्षया सुकरम् इति हेतोरेव पदपदार्थ प्रकृति-तदंशप्रत्ययार्थविवेचनपुरःसरम् सकलपदार्थज्ञानम् एवं वाक्यार्थज्ञानं भवति वैयाकरणानां नये। ततश्च पिण्डीभूतनिरुक्तपदार्थज्ञानसहकृतं वाक्यार्थज्ञानं च सुकरं भवति। इति वैयाकरणसंप्रदायस्य दृढं मतम्। अत एव व्यवहाररूप—भाषाशिक्षणमुख्योपायस्य अनन्तरम् भाषाबोधनकर्मणि प्रक्रियादिप्रधानस्य संस्कृतव्याकरणशास्त्रस्यैव द्वितीयं स्थानम् न तु अन्येषां भाषाशिक्षणोपायानाम् तादृक् महत्त्वम् इत्यनुभवः शास्त्रज्ञानाम्। विषयोऽयं मुख्यविवेच्यात् भिन्नः अत एव एतावदेव उक्त्वा ततो विरम्य प्रकृतमनुसरामः।

चतुर्धा विभक्ते वाक्यार्थे यः मुख्यः अर्थः (क्रियार्थः) सः शास्त्रीयभाषायाम् आख्यातार्थ इति व्यपदिश्यते। क्रियातिरिक्तः ज्ञानेन्द्रियगोचरः मनोबुद्धिगोचरश्च वस्तुभूतः अर्थः नामार्थः इति कथ्यते। अनयोर्द्वयोरपि अर्थयोः (क्रियार्थनामार्थयोः) स्थितायाः विशिष्टतायाः बोधकौ अर्थविशेषौ पदविशेषौ च क्रमशः उपसगार्थनिपातार्थरूपौ एवं च उपसर्गनिपातसंज्ञकौ च प्रसिद्धौ स्तः। वाक्यघटकस्य अर्थजातस्य इमौ भेदौ क्रियार्थः नामार्थः इति रूपौ तद्बोधकौ क्रियापदम् नामपदम् सर्वे मिलित्वा सकलवाक्यार्थं वाक्यं च चतुर्धा कल्पयन्ति। क्रियार्थनामार्थयोः वैशिष्ट्य बोधकयोरनयोर्भेदयोर्मध्ये यः भेद प्रकारः वा विशुद्धरूपेण क्रियागतमेव वैशिष्ट्यं प्रकाशयति सः प्रकारः सामान्यतया उपसर्गार्थः उपसर्गं च तत्पदम् इत्यभिधीयते। यश्च प्रकारः नामार्थवैशिष्ट्यप्रकाशने समर्थः सः निपात इत्याख्यां दधत् वाक्येषु स्थानं लभते। फलतः उपसर्गसंज्ञकानि पदानि क्रियामात्रगताम् विशिष्टताम् निपाताश्च प्रायः नामार्थगतां विशिष्टताम् (क्वचिच्च निपाताः क्रियागतवैशिष्ट्यमपि बोधयन्ति इत्यन्यदेतत् तस्य क्वाचित्कत्वात्) प्रकाशयन्ति।

निपातश्रेणीमाश्रितानां पदानाम् इमं नामार्थवैशिष्ट्यप्रतिपादकम् मूलभूत-स्वभावं ज्ञात्वा तेषाम् आनुपूर्वीरूपशरीरपरिचयजिज्ञासायाम् सत्याम् इच्छुकाः छात्राः सिद्धान्तकौमुद्या अव्ययप्रकरणे "च वा इत्यादि शब्देभ्यः आरभ्य तसिलादिष्वाकृत्वसुचः इति सूत्रात् प्राक्यावत् एवमेव प्राग्रीश्वरान्निपाताः इति सूत्रादारभ्य "अधिरीश्वरे" इति सूत्रं यावत् उपन्यस्तान् "ऊरी" "अलम्" "सत्" "असत्" इत्यादि शब्दान् पश्यन्तु। उक्तनिर्दिष्टस्थलस्थिताःआनु पूर्वीविशेषालंकृताः शब्दाःएव निपातशब्दाः कथ्यन्ते। तेषामर्थाश्च विभिन्नकोशग्रन्थादिमाध्यमेन पाणिनिसूत्रविशेषमाध्यमेन च बोद्धुं शक्याः सन्ति।

## निपातानां वाचकत्वद्योतकत्वविमर्शः।

एवं निपाताख्यपदानाम् अर्थज्ञानं तन्निष्ठया अभिधया भवति? अथवा तत्समभिव्याहतक्रियापदनामपदान्यतरनिष्ठशक्त्या भवति? (अस्मिन् पक्षे निपातानां द्योतकत्वम् प्रश्नविषयः इति) अथवा निपातपदसान्निध्यम्, समभि व्याहततत्तत्पदनिष्ठाम् शक्तिम् उद्भाव्यैव अर्थबोधम् करोति? शब्दार्थविचारपरायणेषु विद्वत्सु अयं प्रश्नः महाभाष्यात्पूर्वत एव प्रवर्तमानो विद्यते। शास्त्रीयभाषायाम् अयं प्रश्नः इयं समस्या वा निपाताः वाचकाः सन्ति वा ते द्योतकाः सन्ति इत्येतेन रूपेण प्रसिद्धा वर्तते। न केवलं वैयाकरणाः अपितु नैयायिकाः मीमांसकाश्च अपि एतत्सर्वं समीक्ष्य प्रश्नमिममधिकृत्य स्वमतं सिद्धान्तितवन्तः।

एवमेव आचार्यपतंजलिः, वाक्यपदीयकारो भर्तृहरिः, पुण्यराजः, नैयायिकाः, मीमांसकाः, जैयटात्मजः कैयटः, भट्टोजिदीक्षितः कौण्डभट्टः तथा प्राधान्येन नागेशभट्टः—एते विद्वांसः इमां जिज्ञासामधिकृत्य स्वस्वविचारम् प्रस्तुतवन्तः। एषां सर्वेषां कथनं पर्यालोच्य अधिगतमान्यतानाम् वर्गीकरणं कृत्वा वक्ष्यमाणनिर्णयान् प्रस्तोतुं शक्नुमो वयम्।

(१) "सर्वेऽपि निपाताः द्योतकाः" (इति मीमांसकमतम्)

(२) उपसर्गसंज्ञका एव निपाताः द्योतकाः तदितरे सर्वेऽपि निपाताः वाचका एव। इति नैयायिकमतम्।

(३) न केवलम् उपसर्गा एव प्रत्युत तदितरेऽपि कतिपये निपाताः अपि द्योतकाः यद्यपि उपसर्गेतरकतिपयनिपाताः वाचका अपि।

(४) निपाताः (उपसर्गाः) क्रियापदसमभिव्याहृताः संभूयैव अर्थबोधकाः सन्ति।

एषां पक्षाणां समर्थने इमे श्लोकाः अलमितिविचार्य तान् प्रस्तुमः—

"क्वचित् संभविनो भेदाः केवलैरनिदर्शिताः।

"उपसर्गेण संबन्धे व्यज्यन्ते प्रपरादिना॥"

अनेन प्रथमपक्षस्य समर्थनं भवति।

"स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा।"

द्वितीयपक्षपोषणसमर्थेयं कारिका।

"शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते। तृतीयचतुर्थपक्षपुष्ट्यै अयं श्लोकः समर्थः।

अथ च निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।

आगमा इव केऽपि स्युः संभूयार्थस्य वाचकाः। इति।

इत्थम् एभिः हर्युक्तप्रमाणैः अन्यैरपि प्रमाणैः अस्माकं वर्गीकरणं न्याय्यमिति मत्वा अग्रेसरामः विस्तरभयात् प्रमाणानां चर्चाम् उक्तवर्गीकरण विषये अत्रैव समाप्य मुख्यं वक्तव्यं प्रति विचारयामः।

अस्मिन् प्रसंगे नागेशीयविचारप्रकाशनतत्परा वयम् प्रथमं नागेशसंमतम् विचारं प्रकाशयामः। तदनुसारेण अयम् वैयाकरणशिरोमणिः निपातान् द्योतकान् अथवा वाचकान् अन्यतरस्वभावान् एव मन्यते न तु सः तान् संभूयार्थवाचकान् स्वीकरोति। संभूयार्थस्य वाचका इत्यस्य अर्थः क्रियानामान्यतरसमभिव्याहारे सत्येव निपाता वाचकाः इत्यस्ति। परतुं नायं स्वभावः निपातानाम् इति सुस्पष्टं नागेशस्य अभिमतं वर्तते एवं च नागेशः अनेकयुक्त्यादिप्रमाणैः एषां वाचकत्वम् द्योतकत्वं वा पृथक् पृथक्मत्वा (केचन निपाताः सर्वथा द्योतकाः केचन सर्वथा वाचकाः इति मत्वा) निपातानां संभूयार्थवाचकत्वे अरुचिं दर्शयति। द्योतकनिपातविषये तु नागेशः संभूयार्थद्योतकत्वमेव स्वीकरोति तथापि वाचकत्वस्थितौ निपातानां संभूयार्थवाचकत्वस्य विरोधी सः। इति ज्ञेयम्। इत्थं नैयायिकाः निपातानां द्विविधत्वम् तथा च मीमांसकाः उपसर्गसंज्ञकं तदितरं च सर्वमेव निपातपदजातम् द्योतकं मन्यन्ते इति निर्णेतुं शक्यम्।

अत्र मीमांसकमतज्ञानाय अस्माभिः वैयाकरणभूषणकारेण कौण्डभट्टेन उद्धृताः आकृत्यधिकरणस्थाः कारिका एव स्वाभिमतप्रमाणार्थम् स्वीकृताः सन्ति इति संकेत्यते।

परंतु सकला अपि वैयाकरणपरंपरा नैयायिकमतभिन्नस्य उभयवादस्य पोषिका। तदनुसारेण केचित् निपाताः द्योतकाः ते च कदाचिदपि वाचकाः भवितुं नार्हन्ति। एवमेव कतिपये निपाताः मूलतः वाचका एव कदाचिदपि द्योतकतां न दधति एवं प्रत्येकं द्योतकस्य वाचकस्य वा परस्परनिरपेक्षा स्वतंत्रसत्ता इति वैयाकरणपरंपराया उभयवादस्य तात्पर्यम्। अस्मिन् मते नैयायिकमतवत् उपसर्गाख्यनिपाताः सदैव द्योतका एव। उपसर्गेतरसकलनिपातानां सदैव वाचकत्वमेवेति न स्वीक्रियते। नैयायिकास्तु एकान्ततः उपसर्गेतरसकलनिपातानाम् सदैव वाचकत्वमेव न कदाचिदपि तेषां द्योतकत्वमिति स्वीकुर्वन्ति। विरुद्धमेतत् वैयाकरणमतस्य। अत एव नागेशेन उपसर्गेतरकतिपयनिपातानाम् प्रदर्शनं कृतम् यत्र ते उपसर्गेतरनिपाताः द्योतकाः अपि सिद्ध्यन्ति वाक्यार्थबोधकाले। इत्थं नैयायिकवैयाकरणयोः निपातार्थविषयकः मतभेदः अंशतः एव स्यात् परंतु स्पष्टो भवति।

वैयाकरणपरंपरामनु नागेशभट्टोऽपि निपातानाम् उभयवादस्य पोषकः। अव्ययं विभक्ति इति पाणिनिसूत्रव्याख्यानावसरे अयं महानुभावः उपसर्गेतरनिपातानाम् उभयस्वभावस्य (द्योतकरूपस्य वाचकरूपस्य च) प्रतिपादनं कृतवान्।

अस्मिन् प्रसंगे भूषणकारः कतिपययुक्तिभिः निपातानाम् स्वाभिमतानुकूलार्थप्रदर्शनपूर्वकम् उक्तनैयायिकमीमांसकमतयोः खण्डनं कृतवान्। तच्च भूषणकारोक्तखण्डनं सिद्धान्ततः स्वमतपोषकम् इति ज्ञात्वापि तदर्थ स्वीकृतयुक्तिषु न्यूनतां दृष्ट्वा नागेशः तस्या न्यूनतायाः अपनोदनेन भूषण काराद् भिन्नम् सबलयुक्तिसाध्यम् नैयायिकमीमांसकमतखण्डनम् स्वतन्त्रतया कृतवान्।

नैयायिकाः उपसर्गेतरसकलनिपातानाम् सदैव वाचकत्वम् मन्यन्ते कदाचिदपि तेषु द्योतकत्वं न स्वीकुर्वन्ति। अत्र नागेशभट्टवत् भूषणकारस्यापि विरोधः वर्तते। विरोधप्रदर्शनाय भूषणकारः इत्थं विवेचयति—उपसर्गेतरे कतिपये निपाता द्योतकाः अपि सन्ति न सर्वदा ते सर्वेऽपि उपसर्गेतरनिपाताः वाचका एव सन्ति यथा नैयायिकाः मन्यन्ते। इत्थं उपसर्गेतरनिपातानां सदैव वाचकत्वाभावम् कदाचित् द्योतकत्वं च इति समर्थन परे श्रीदीक्षितकौण्डभट्टौ नैयायिकमते आक्षेपं प्रकटयतः यथा—

नैयायिका:स्वसमयानुसारेण उपसर्गभिन्नानाम् "च" "वा" इत्यादि निपातानाम् वाचकत्वमेव स्वीकुर्वन्ति। तथा च "शोभनः समुच्चयः द्रष्टव्यः" इति वाक्यस्य समानार्थकवाक्यविन्यासेच्छया शोभनः चः द्रष्टव्यः इति वाक्यस्य स्वीकार्यताया आपत्तिः नैयायिकपक्षे आयाति। चादीनां वाचकत्वस्वीकारवशादेव इयमापत्तिः तेषु। इयमापत्तिः नैयायिकपक्षस्य कृते दुरुद्धरा वर्तते। इमामापत्तिम् दूरीकृर्तम् चादीनाम् उपसर्गेतरनिपातानां द्योतकत्वं नैयायिकैः अवश्यं स्वीकार्यम् इति उक्तविदुषोः तात्पर्यम्। चादीनां द्योतकत्व-स्वीकारे तु नेयमापत्तिः स्थिरा भवति। द्योतकसन्निधाने पदविशेषस्य शाब्दी उपस्थितिः द्योत्यार्थस्य लाभाय अनिवार्या भवति। यथा क्रिया वाचकधातुघटितसमभिव्याहाररूपपदविशेषसत्तायामेव प्रपरादयः तं तमर्थं द्योतयन्ति तादृशसमभिव्याहाराभावे तु केवलम् एकाकिनः उच्चारिताः प्रपरादयः समभिव्याहारविशेषसत्ताकालिकम् अर्थम् द्योतयितुं न समर्थाः। एवमेव चादीनां द्योतकत्वे सन्निहितपदविशेषाभावेन (समुच्चयवाचकपदाभावेन) "शोभनः चः" इत्यापत्तिर्न भवति। यद्यत्र प्रसंगे समुच्चयशब्दसंबद्धपदचपदयोः शाब्दः प्रयोगः क्रियते तदा च शब्दस्य द्योतकता "घटः पटः च" इत्यत्र वाक्ये सर्वमान्यत्वेन प्रसिद्धैव।

शोभनः घटस्य पटस्य चः इति अयं प्रयोगो न साधुः। यतः समुच्चये अर्थे घटपदस्य पटपदस्य च शक्तिर्वर्तते।

यस्याः शक्तेः द्योतकः चकारः विद्यते। अतः समुच्चयरूप द्योत्यार्थरूपप्रातिपदिकार्थत्वबोधनात् घटशब्दात् प्रथमैव भवति। घटः पटः चेति, न पष्ठी। एवं चादीनां द्योतकता निर्दोषा इति भूषणकारस्य आशयः।

"च" इति निपातस्य द्योतकतास्वीकारेण समुच्चयरूपः अर्थः चस्य वाच्यार्थः नास्ति, अतः सः अर्थः चरूपप्रातिपदिकस्य अर्थः नास्ति अत एव तत्र शास्त्रीयानुशासनसिद्धा प्रथमा नास्ति वाचकतास्वीकारे तु समुच्चयार्थबोधकपदात् स्वाद्युत्पत्तिः। अत एव शोभनः चः द्रष्टव्यः इत्यापत्तिर्दुर्वहा भवति। अत एव उपसर्गेतरकतिपयनिपातानां द्योतकत्वं नैयायिकैरपि स्वीकरणीयमिति दीक्षितभूषणकारयोः परामर्शः दृश्यते।

अस्मिन् प्रसंगे शोभनः घटस्य पटस्य चः इत्यर्थे उक्तमतस्वीकारे अपरा च आपत्तिः भूषणकारेण दत्ता। तथाहि धवखदिरयोः समुच्चयः इति शिष्टैः साधुवाक्यत्वेन स्वीकृतं वर्तते। अत्र समुच्चयपदार्थेन सह धवखदिरयोरर्थयोः

भेदेन संबन्धित्वेन वा अन्वयः स्वीक्रियते एव शिष्टैः इदानीम् नैयायिकमतानुसारेण च इति निपातस्य वाचकतायाम् स्वीकृतायाम् उक्तवाक्ये समुच्चयपदस्थाने "च" इत्यस्य निवेशेन धवखदिरयोः चः इत्यत्र अथ च घटपटयोः चः वा घटपटयोः च इति वाक्यस्य स्वीकार्यतायाः आपतिः दुर्निवारा भवति। पूर्वोक्तदिशा अस्मिन् वाक्ये समुच्चयपदार्थेन सह घटपटपदार्थयोः भेदैनैव अन्वयः नान्यथा अन्वयः इति शिष्टजनव्यस्थावशात्। "च" इति शब्दप्रयोगेऽपि भेदेन अन्वयेकृते सति घटपदस्य पटपदस्य च षष्ठी घटस्य चः च, पटस्य चः च इति वा अनिच्छद्भिरपि नैयायिकैः स्वीकर्तव्यमेव भविष्यति। एवं च चादीनाम् उपसर्गेतरनिपातानां वाचकत्वाभ्युपगमरूपा नैयायिकसरणिः शिष्टजनविरुद्ध- वाक्यस्थापिका अत एव पर्यनुयोगार्हा च भवति।

नामार्थयोः परस्परमन्वये भेदेन अन्वये विरुद्धविभक्तिमत्त्वविषये तथा तयोरभेदान्वये समानविभक्तिमत्त्वरूपनियमविषये च सुबहु वक्तव्यं शास्त्रकारैः प्रस्तुतं वर्तते। तच्चर्चया अत्र विषयान्तरप्रवेशस्य हस्तगृहीतविषय व्याख्यावरोधस्य च प्रसंगः आपद्येत अतः ततो विरम्य नामार्थयोः सिद्धान्ततः अभेदान्वयम् ऊरीकृत्य उक्तम् भूषणकारादिभिः समीक्षितम् नैयायिकमतस्थितदूषणं सिद्ध्यत्येव।

अत्र प्रसंगे उक्तवाक्ये षष्ठीविभक्तेरापत्तिपरिहाराय नैयायिकैः स्थापितं पूर्वपक्षं दीक्षितभूषणकारौ स्थापयतः। यथा उक्तदोषनिवारणाय नैयायिकाः इत्थं वक्तुं शक्नुवन्ति यत् नामार्थयोः भेदान्वयाय विरुद्धविभक्तिमत्त्वं तु आवश्यकमेव परंतु अस्मिन् नियमे निपातेतर इति विशेषणं नामार्थयोः कृते स्वीकार्यम्। ततश्च निपातेतरनामार्धयोः भेदान्वये एव विरुद्धविभक्तिमत्त्वम् न तु केवलनिपातरूपनामार्थयोः भेदान्वये पष्ठीविभक्तिरिति "निपातेतर" इत्यंशनिवेशेन सिद्ध्यति। एवमेव 'धवखदिरयोः समुच्चयः' इत्यस्य स्थाने धवस्य खदिरस्य चः च इति वा एवमेव घटपटयोः समुच्चयः इत्यस्य स्थाने घटस्य पटस्य चः च इति वा नापद्यते तत्र निपातेतरनामार्थयोरभावात्। उक्तनियमप्रसक्त्या (निपातेतरनामार्थयोः भेदान्वये एव षष्ठी न तु निपातरूपनामार्थयोः भेदान्वये षष्ठीविभक्तिः) आपादितषष्ठीविभक्तिः स्वयमेव दूरीभवति। ततश्च उपसर्गभिन्नानाम् सकलनिपातानाम् वाचकत्वम् अक्षुण्णम्। तेषां द्योतकत्वेऽपि अन्वयस्य अपरिहार्यतावशात् निपातार्थस्य नामार्थत्वात् उक्तनियमेन षष्ठ्यापत्तिः परिहृता भवति फलतः तेषाम्

उपसर्गेतरभिन्ननिपातानाम् वाचकत्वमेव सिद्ध्यति इति वक्तुं शक्नुवन्ति नैयायिकाः। येन तेषां मतम् उपसर्गाएव द्योतकाः तदितरनिपातास्तु वाचकाः इति निर्दोषं भवति।

पूर्वपक्षमुद्धृत्य उक्तविद्वांसौ कथयतः एतादृशसंकोचस्य नामार्थयोर्यत्र भेदान्वयः तत्र षष्ठीविभक्तिः अथवा विरुद्धविभक्तिमत्त्वम् इत्यस्य स्थाने निपातेतरनामार्थयोः इतिरूपेण नामार्थगतसंकोचस्य स्वीकारे न किमपि प्रमाणम् भवदुक्तिं भवत्कल्पनां विना दृश्यते। अथ च उक्तसंकोचघटितस्य अस्य नियमस्य स्वीकारापेक्षया उपसर्गेतरकतिपयनिपातानाम् द्योतकत्वस्वीकारे एव लाघवम्। एवं च उक्तनियमस्वीकारे अफलं व्यर्थं च गौरवदूषणम् इति कृत्वा अयं पूर्वपक्षः खण्डितो भवति। पूर्वोक्तः नैयायिकमते दोषश्च सुस्थिर एव विद्यते। अतः तैः उपसर्गेतरकतिपयनिपातानां द्योतकत्वम् अवश्यं स्वीकार्यमिति दीक्षितभूषणकारयोः परामर्शः द्योतकतास्वीकारे स्वतन्त्ररूपेण समुच्चयः अर्थः, उपस्थित एव न भवति अत एव स चार्थः नामार्थ एव नास्ति अत एव च नामार्थयोर्भेदान्वये षष्ठीविभक्तिरूपनियमस्य अप्रसक्त्या द्योतकतावादे षष्ठीविभक्तेरापत्तिरपि नोत्पद्यते। एवं च उक्तापत्तिनिवारणाय एतादृशस्य संकोचघटितस्य परिष्काररूपव्यर्थगौरवस्वीकारस्य भारोऽपि दूरीभवति यदि नैयायिकाः उपसर्गेतरनिपातानां द्योतकत्वं स्वीकुर्युः।

नागेशभट्टोपि दीक्षितभूषणकारवत् नैयायिकमतविरोधी एव वर्तते परतु सः दीक्षितादिस्थापिताम् नैयायिकमतखण्डनपद्धतिम् साधु न मन्यते अतः उक्दीक्षितादिमतसमीक्षाकाले सः परपक्षाश्रयी इव प्रतीयते परंतु नागेशः दीक्षितादिसम्मतसिद्धान्तविरोधी नास्ति प्रत्युत दीक्षिताद्युक्तयुक्तौ दोषं दृष्ट्वा केवलम् तद्दोषस्य परिहाररूपेण तयोः विरोधम् करोति। इत्थं नागेशः उक्त प्रकरणे दीक्षिताद्युक्तयुक्तिविरोधी एव न तयोः सिद्धान्तविरोधी इति स्पष्टमेव ज्ञातव्यम्।

अस्मिन् प्रसंगे नागेशभिप्रायः इत्थं बोधनीयः। शब्दशक्तेः स्वभाववशात् स एव अर्थः एकः अभिन्नः सन्नपि विभिन्नवेशैः अभिहितः भवति।

अस्यार्थः एक एव कम्बुग्रीवादिमान् पदार्थः यदा घटशब्देन उच्यते तदा तस्य बोधः अन्यप्रकारेण भवति। परंतु कलशशब्दवाच्यस्य तस्यैव

कम्बुग्रीवादिमतः पदार्थस्य बोधः पूर्वबोधापेक्षया भिन्न एव भवति। इदं सर्वं शब्दशक्तिविशेषाद् भवति। इदमेव तात्पर्यं विशदयन् मंजूषाटीकाकुंजिका टीकाकृतौ कथयतः। पाकः पचति इति द्वावपि शब्दौ विक्लेदनानुकूलव्यापारबोधकत्वात् पर्यायौ तथापि एकत्र कृदन्तशब्दवशात् अन्यत्र तिङन्तशब्दशात् तौ परस्परं भिन्नौ शक्तिविशेषस्वरूपभेदविशेष वशादेव उक्तरीत्या द्वयोरपि अर्थयोः साम्येऽपि (विक्लेदनानुकूल व्यापारस्वरूपार्थदृष्ट्या) एकत्र स एव पाकः सत्त्वभूतः पाकः इत्यत्र अन्यत्र असत्त्वभूतः (पचतीत्यत्र) सन् बोधविषयो भवति।

अत्र तिङ्कृत्प्रत्ययसहकृततत्तच्छक्तिविशेषस्य कारणता अर्थबोधं प्रति विद्यत एव इति नागेशस्य तट्टीकाकर्तुश्च अभिप्रायः प्रतीयते।

एवमेव समुच्चयशब्दस्य यः कोऽपि अर्थः बुद्धिविषयीभूतः जायते स अर्थःसत्त्वभूतः विशेष्यावस्थश्च भवति इति सूक्ष्मधियामनुभवः। स एव समुच्चयरूपः अर्थः यदा "च" इति शब्दात् ज्ञायते तदा स अर्थः समुच्चयपद बोध्यात् अर्थात् भिन्नः यतः स अर्थः पूर्वार्थवत् विशेष्यावस्थास्थाने विशेषणावस्थां प्रत्याययति। अयं च शब्दशक्तिमहिमा। एवं स्थितौ विशेषणतया उपस्थितेन समुच्चयरूपेण चार्थेन सह शोभनपदार्थस्य विशेषणीभूतस्य संबन्धः अन्वयो वा कथमपि न संभवति यतः स्वयं विशेषणम् एकस्मिन्नेव वाक्ये अन्यस्य विशेषणं कथमपि भवितुं नार्हति इत्यनुभवस्य प्रसिद्धत्वात्।

एवं च निपातस्य विशेषणावस्थायाम् प्रतीतः समुच्चयरूपः अर्थः कस्यापि विशेषणीभूतशोभनादिप्रातिपदिकार्थस्य संबन्धी अन्वयी वा भवितुं नार्हति। फलतः "घटस्य पटस्य च" शोभनः समुच्चयः इतिवत् शोभनः घटस्य पटस्य चः "च" इति वा षष्ठ्या आपत्तिरपि दूरीभवति। अत्र तु चार्थस्य अन्वयः एव पंके पतितः भेदान्वयस्य तदाधारितनियमविशेष-स्वीकारजन्यषष्ठ्यापत्तेश्च कथा दूरे एव तिष्ठति। एवं स्थितौ नैयायिकपक्षस्थः समुच्चयवाचकचार्थयोगवशात् संभावितभेदान्वयमूलकषष्ठयापत्तिनिरसनेन उक्तपरिष्कृतनियमस्वीकाररूपव्यर्थगौरवरूपो दोषोऽपि परिहृतो भवति इति नैयायिकपक्षानुगामिनी नागेशभट्टस्य युक्तिः। चादीनां वाचकत्वस्वीकारे नैयायिकेषु नागेशेन आपादिताः दोषा अत्र विस्तरभयान्नोल्लिख्यन्ते। परंतु नागेशोऽपि "च" इतिनिपातस्य द्योतकत्वमेव स्वीकरोति नैयायिकवत् तस्य च

निपातस्य वाचकत्वं न स्वीकरोति "इति नागेशीयसिद्धान्तं किंचित् प्रस्तूय एव अस्मात् विवेचनात् विरम्य अग्रेसरामः ।

एवं भूषणकारदीक्षितमतस्थदोषं दर्शयित्वापि स्वरीत्या नैयायिकदोषं षष्ठ्यापत्तिपरिहारपूर्वकम् अपि नागेशः चादीनां द्योतकत्वमेव सिद्धान्तयति न तु नैयायिकवत् वाचकत्वम्। उपसर्गेतरकतिपयनिपातानां वाचकत्वस्वीकारे नागेशोपन्यस्तानाम् कासांचित् युक्तीनां पल्लवनम्। उपसर्गेतरः निषेधार्थकः "न" इति निपातशब्दः वाचक एव। तस्य क्रियागतविशेष बोधकातिरिक्तत्वात्। यः निपाताख्यशब्दः क्रियागतविशेषं बोधयति स तु वाचक एव नास्ति प्रत्युत सः द्योतक एव वर्तते। क्रियागतविशेषस्य बोधकाति रिक्तस्वभावकः निपातः वाचकः भवितुमर्हति इति नागेशस्य अभिप्रायः। एवं च "न" इति निपातपदस्य अभावः इत्यर्थः वाच्यार्थत्वेन उपस्थितः (श्रोतृबुद्धौ) सन् तदुत्तरं कस्य अभावः? इति श्रोतुर्जिज्ञासां जनयति। यथा अभावशब्दं श्रुत्वा कस्य अभावः? इति प्रतियोगिपदार्थस्य जिज्ञासा समुदेति।

अयं नागेशोक्तः अनुभवप्रमाणकः अभिप्रायः एव नागेशस्य उक्तकथने "न" इति निपातस्य वाचकत्वसंपादने प्रमाणम् इति वक्तुं शक्यते।

न इति निपातो द्योतकः इति स्वीकारे तु इयम् अनुभवसिद्धा व्यवस्था नोपपद्यते। न इति निपातस्य द्योतकत्वस्वीकारे यावत् "न" पदेन सह अभावप्रतियोगितपदार्थवाचकं पदम् नोच्चारितं तावत् श्रोतुश्चित्ते "न" इति निपातश्रवणोत्तरम् कोऽपि अर्थबोधः न संभवति। अस्यामवस्थायाम् न शब्दं श्रुत्वा तस्य वाचकत्वाभावात् प्रतियोगिपदार्थवाचकपदासन्निधानवशात् च (वाच्यार्थ इव द्योत्यार्थस्यापि स्थितौ) अभावघटितप्रतियोगिपदार्थस्य ज्ञानम् दुष्करं भविष्यति। अयं भावः केवलं "न" इति निपातघटितस्थले अभावप्रतियोगिपदार्थबोधकस्य पदस्य असन्निधानेन सामीप्याभावेन "न" इति निपातपदम् द्योतकत्वात् न कमपि अर्थं प्रसूते द्योत्यार्थनिरूपिता अभिधावृत्तिस्तु प्रतियोगिपदार्थपदे एव तिष्ठति। न तु "न" इति पदे। द्योतकपदानां तु स्वभाव एवायम् यत् तानि पदविशेषनिष्ठाम् अर्थविशेषनिरूपिताम् द्योतकाख्यां शक्ति दधानान्यपि पदविशेषसान्निध्यम् वाञ्छन्ति। अर्थात् तस्याः शक्तेः तदैव जागरणं संभवति यदा उक्तस्य प्रतियोगिपदार्थस्य सान्निध्यम् "न" इति पदसमभिव्याहृतं भवेत्। एवं चात्र कयापि रीत्या "न" इति केवलात् निपातपदात् शिष्टजनानुभवसिद्धस्य अभावार्थबोधस्य प्रतियोगिपदार्थ

जिज्ञासायाश्च बोधः नोपपद्यते द्योतकतावादे। वाचकतावादे तु अभीष्टस्य उक्तानुभवसिद्धतथ्यस्य प्राप्तिः सुलभा एव वर्तते। ईदृशीं स्थितिं समवेक्ष्यैव कलाटीकाकृत् "न" इति निपातस्य अनुभवप्रमाणप्रमाणितत्वम् वाचकत्वं स्वीकरोति स्वटीकायाम्। "आ" इति निपातस्य अर्वाक् इत्यर्थवाचकत्वम्। निरुक्तकारः "पर्वताद् आ" इति वाक्यात् "पर्वतात् अर्वाक्" इत्यस्य अर्थस्य प्रतीतिं समर्थयते। अस्यां स्वीकृतौ पर्वतशब्दात् अर्वाक्पदार्थस्य उपस्थिति-करणे न कोऽपि स्पष्टः उपायः दृश्यते। फलत अस्मिन् वाक्ये अनुभूयमानस्य अर्वाक्पदार्थस्य लाभाय सन्निहितम् कारणम् "आ" इति निपातपदम् तन्निष्ठा अभिधाशक्तिश्च वर्तते। एवं च 'आ' इत्येतत्पदनिष्ठवाचकशक्तिवशादेव अत्रत्यः अनुभवः सुष्ठु संगच्छते। इति निरुक्तकारस्य संक्षिप्तः आशयः वर्तते।

नागेशभट्टः, अस्मिन् वाक्ये स्थितायाः पंचमीविभक्तेः माध्यमेन आ शब्दस्य वाचकतास्वीकारार्थम् विशिष्टयुक्तेः प्रदर्शनं करोति। तथाहि।

आ इति निपातस्य द्योतकतास्वीकारे अर्वाक् इत्यर्थः पर्वतशब्दादेव भवेदिति इष्टम्। "आ" इति निपातस्तु तस्यैव पर्वतशब्दोत्पन्नस्य अर्वाग्रूपस्य अर्थस्य प्रकाशकः। एवं च दिगर्थवाचकशब्दाद् भिन्नः प्रकृतिरूपः पर्वतशब्दः अर्वाक्पदार्थस्य प्रकाशकः सन्नपि स्वस्मिन् दिगर्थशब्दत्वायोगात् अन्यारादितरर्ते इत्यादिपाणिनिसूत्रनिर्दिष्टां पंचमीं विभक्तिं लब्धुं न समर्थः। अत्र आ शब्दात् द्योतकात् अर्वाग्रूपः अर्थः सद्यः नश्यति। अस्मिन् द्योतकतावादे पर्वतशब्दादेव अर्वागर्थस्य प्राप्तिः एवं च पर्वतशब्दः विशुद्धदिगर्थवाची न सिद्ध्यति येन पंचमीव्यवस्थायां काठिन्यमायाति।

नागेशेन अस्या आपत्तेः (सर्वनिपातानां द्योतकतावादे) संभावितं समाधानमपि प्रस्तुतम्। तद्यथा—पर्वतशब्दस्य दिगर्थशब्दत्वाभावकृत-पंचम्यभावरूपापत्तिनिवृत्तये स्व (नागेश) विरुद्धानामपि द्योतकतावादिनाम् पक्षग्रहणे उन्मुखस्य नागेशभट्टस्य कोटिः दर्शनीया। यथा—द्योत्यार्थदृष्ट्या पर्वतशब्दः दिगर्थबोधकः अस्त्येव द्योत्यार्थः अर्वाग्रूपः अर्थः दिक्शब्दयोगवान् अस्त्येव अत एव द्योत्यद्योतकभावेन द्योत्यार्थदृष्ट्या पर्वतशब्दस्य दिक्शब्दयोगवत्त्वात् ततः पंचमी सुलभा इति नागेशोल्लिखितः कोटिक्रमः।

स्वयमेव उपर्युक्तं तथ्यं प्रस्तूय खण्डयति नागेशः। उक्ततथ्यस्वीकारे अर्वाक् पदार्थस्य भानं विशेषणतया भवति अतः अत्र अर्वागर्थविशिष्टः पर्वतः इति शाब्दबोधश्च भवति परंतु अनुभवविरुद्धमेतत्। अत्र शिष्टानुभवः अर्वागर्थ

विशेष्यकः इति वस्तुस्थितिः। पूर्वोक्तनैयायिकाभिमतस्वीकृतौ अस्या वस्तुस्थितेर्विरोधः। अतः द्योतकतावादमूलकः उपर्युक्तः आपादितः विशेषणीभूतार्वागर्थसंवलितः शाब्दबोधः तत्सिद्धये "आ" इति निपातस्य द्योतकता च कथमपि न स्वीकार्या इति नागेशस्य आग्रहः वर्तते।

## निपातानाम् उभयविधस्वभावसाधने नागेशः

निपाताः न केवलं वाचका एव नापि केवलं द्योतका एव वर्तन्ते। प्रत्युत ते उभयस्वभाववन्तः विद्यन्ते। कश्चन निपातः वाचकः कश्चन द्योतकश्च। तत्र कः निपातः वाचकः? को वा निपातः द्योतकः? अस्य प्रश्नस्य उत्तरं तु– तत्तत्स्थलीयं शिष्टजनप्रमाणप्रमाणितं शाब्दबोधम् आश्रित्यैव भवति इति स्वरूपं समाधानं वर्तते उक्तप्रश्नस्य। निपातपदश्रवणोत्तरमेव जायमानः शिष्टानुमोदितः अनुभवः निपातविशेषस्य वाचकत्वं द्योतकत्वं वा प्रकाशयति इति तात्पर्यम्। अत्रार्थे स्वप्राचीनानाम् आचार्याणाम् सम्मतिम् उपन्यस्यति नागेशः। तदनुसारेण आचार्यः भर्तृहरिः प्रातिशाख्यं च, उभयवादस्य कथं पोषकौ? इति अधस्तनलेखेन नागेशकृतविवेचनपुरःसरम् स्पष्टीक्रियते।

निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।

आगमा इव केऽपि स्युः संभूयार्थस्य वाचकाः॥

इति हरिकारिका। नागेशानुसारेण अत्र स्थितम् केचित् इति पदम् उभयान्वयि। फलतः केचित् पृथगर्थाभिधायिनः वाचकाः। केच्चिच्च आगमा इव द्योतकाः अत एव संभूयार्थवाचकाः सन्ति। हरिकारिकाया ईदृशः अर्थः उपलभ्यते। अयमेव अर्थः हरिसम्मतः इति नागेशः द्रढयति। तेन कतिपये निपाताः शुद्धरूपेण वाचकाः एव सिद्ध्यन्ति।

द्वितीयाध्यायसमाप्त्यवसरे प्रातिशाख्येऽपि निपाता अर्थवाचकाः तत्र समर्थिताः घोषिता वा सन्ति। ते च पादपूरणफलकाः द्योतकाश्च इति तत्र निर्णीतम्।

अधिपरी अनर्थकौ, नञ्, अव्ययं विभक्ति, इति सूत्रस्थभाष्यादिपर्यालोचनया निपातानाम् उभयस्वभाववादस्य समर्थनं सुविशदं भवति इति नागेशेन साभिप्रायम् उद्घोषिम् वर्तते।

निर्मक्षिकम् इत्यत्र तत् प्राधान्यं च पूर्वपदस्य "निर्" इति निपातस्य अर्थः। अत एव अत्र (पूर्वपदार्थप्रधानत्वात्) अव्ययीभावः समासः इति

भाष्यकारेण "निर्" इत्यस्य वाचकत्वम् उद्घोषितं वर्तते। निर् इति निपातः वाचकः सन्नेव तम् अर्थम् प्रसूते (अभावरूपमर्थं जनयति इतिभावः) तस्य अभावरूपस्य अर्थस्य द्योत्यत्वस्वीकारे सन्निहितमक्षिकापदस्य उत्तरवर्तित्वात् ततः एव च द्योत्यार्थस्य उद्भवात् "निर्" इति निपातस्य केवलम् द्योत्यार्थप्रकाशकमात्रत्वात् उत्तरपदार्थप्रधानता (तत्पुरुषसमाससाधिका) दुर्वारा भविष्यति येन भाष्यविरोधः अथ च अत्र अनूभूयमानस्य पूर्वपदार्थप्राधान्यस्यापि विरोधः। अतस्तस्य वाचकत्वमेव न्याय्यं भवति।

एवमेव "उद्गतः" "संकटम्" इत्यादिपदेषु भाष्यकारः क्रमशः "उत्" "सम्" इत्यादिशब्देषु क्रियाविशिष्टसाधनवाचकताम् स्वीकरोति। गमनक्रियासहितम् तत्तत्क्रियायाः साधनम् उत् इति निपातस्य अर्थः। स एव प्राधान्येन शाब्दबोधे अनुभूयते।

अत एव तस्य वाचकतास्वीकारे पूर्वपदार्थप्रधानता सुतराम् साधयितुं शक्या भवति। एवमेव संकटम् इत्यादिष्वपि पूर्वपदार्थप्रधानता अनुभवसिद्धा वर्तते अत एव च तत्र अव्ययीभावः संपद्यते। निपातानां वाचकतावादस्वीकारे एवमेव अनेके अनुकूलाः प्रयोगाः नागेशकृतमंजूषाग्रन्थे निपातार्थनिरूपणावसरे संगृहीताः व्याख्याताश्च वर्तन्ते। ते च प्रयोगाः जिज्ञासुभिर्वाचकैः ततः एव बोद्धव्याः।

द्योतकतावादसाधने अस्य विदुषः कौशलम् तु वर्णनीयतमं वर्तते। एतन्निरूपणे अयं विद्वान् अत्यन्तम् सफलः यशस्वी च वर्तते। एकतः निपातानाम् वाचकतावादी सन्नपि अनुकूलस्थलविशेषेषु द्योतकतावादसाधकविपुलसामग्रीलेखने निष्पक्षः सन् अस्मत्पुरतः द्योतकतावादपोषिकाम् सामग्रीं प्रस्तौति। अस्य (नागेशस्य) अनेन विधानेन युक्तिविरुद्धपक्षविशेषाभिनिवेशग्रस्ततारूपदोषात् मुक्तः सन् अयं विचारः छात्रान् सहृदयतत्त्वार्थदर्शिविदुषः च आह्लादयति।

एतावति प्रबन्धे नागेशदृष्ट्या व्याख्यातानि स्थलानि "च" "नञ्" "निर्मक्षिकम्" "उद्गतः" संकटम् "इत्यादि रूपाणि, नागेशम् निपातानां वाचकत्वपोषकं साधयितुं समर्थानि सन्ति। एवं स्थितौ सत्यामपि श्री डा. कपिलदेवद्विवेदिमहाभागैः ज्योत्स्नाटीकाकृद्भिः स्वनामधन्यैः पण्डितकालिकाप्रसाद्शुक्लमहोदयैः घोषितम् नागेशस्य एकान्ततः द्योतकतावादसमर्थयितृत्वं च खण्डितं भवति। हि वस्तुतः अयं महानुभावः

(नागेशः) निपातविषये उभयमतवादी एव निश्चेतव्यः इत्यस्ति मे विश्वासः युक्तिमूलकः वर्तते। सुधीभिः पूर्वोक्तविवरणसाध्यः नागेशस्य अयम् सिद्धान्तः स्वसमीक्षानन्तरमेव स्वीकार्यः इत्यस्ति मे सविनयं सप्रश्रयं च निवेदनं वैयाकरणान् प्रति।

## द्योतकतापदार्थस्य परिभाषा, भेदाः, उदाहरणानि च।

द्योतकपदसमभिव्याहृतधातुनामान्यतरपदनिष्ठायाः प्रसुप्तायाः वाच्यवाचकभावरूपायाः वृत्तेः उद्बोधनव्यापारः एव द्योतकता। पदविशेषनिष्ठा सती अपि सा वृत्तिः सन्निहितद्योतकशब्दैर्विना अर्थबोधनाय समर्था न भवति। सा च धातुघटिततिङन्तकृदन्तान्यतरपदनिष्ठा अथवा नामपदनिष्ठा भवति। परंतु तस्या उद्बोधनं कार्यकारित्वं वा द्योतकपदसन्निधाने सत्येव भवति इति तात्पर्यम्। अयमेव विशेषः द्योतकपदानाम्। "अस्या द्योतकतायाः स्थितिः", उपसर्गेषु कतिपयनिपाताख्यशब्देषु। वैशिष्ट्यपूर्णः अनुशब्दः, भवति इति धातुघटितपदनिष्ठायाः अनुभवरूपार्थनिरूपितायाः द्योतकतानामकवृत्तेः जागरणकर्ता अथवा उद्भावकः वा प्रकाशकः स्वीक्रियते शिष्टजनैः। एवं च द्योतकनिपातानाम् निर्दुष्टोदाहरणरूपप्रतिनिधिरूपेण स्वीक्रियते अनु शब्दः।

"प्रादेशं विलिखति" जपमनुप्रावर्षत् अनयोः वाक्ययोरर्थः एवम्— प्रादेशनामकमानविशेषेण (स्थण्डिल भूमिम्) परिमाय ततः भूमेः उल्लेखनम् करोति इति प्रथमवाक्यस्य अर्थः कुशकण्डिकाप्रकरणे रेखाकरणसमये कर्मकाण्डप्रवणैः पण्डितैर्याज्ञिकैः स्वीक्रियते। एवमेव जपमनुप्रावर्षत् इत्यत्र जपस्वरूपहेतुसमुत्पत्तौ वर्षणरूपहेतुमद्व्यारोपस्थितिः जायते। अत्र विशब्दः अनुशब्दश्च उपर्युक्तद्योतकतापरिभाषाविरुद्धौ परंतु शिष्टानुभवः, तौ शब्दौद्योतकौ मन्यते। अतस्तयोर्द्योतकतासाधनाय द्योतकतापरिभाषा परिष्करणीया भवति इति विचार्य नागेशभट्टः उक्तादन्यां द्योतकतापरिभाषाम् स्थापयति। यथा प्रादेशं विलिखति तथा जपमनुप्रावर्षत् अनयोः वाक्ययोः क्रमशः मानं कृत्वा एवंच हेतुमद्भावः अर्थः क्रियते। समभिव्याहृत लिखतिपदनिष्ठा अथवा समभिव्याहृतजपम् इति पदनिष्ठा च पूर्वोक्ता द्योतकता विपदगतया अनुपदगतया च उद्बोधकतया उद्बुद्धा न भवति। अत एव सा द्योतकता उक्तौ अर्थौ दातुम् असमर्था यथा लिखतिशब्दे मानंकृत्वा इति क्रियाप्रधानस्य अर्थस्य प्रकाशकता वा जपादिशब्दे

हेतुहेतुमद्‌भावरूपार्थप्रकाशकता अनुभूयते यस्या उद्बोधनं कर्तुम् विशब्दः अनुशब्दश्च समर्थौ न स्तः।

एवं चात्र अनयोः उदाहरणयोः अनुभूयमानस्य अर्थस्य उपपत्तये नागेशः द्योतकतास्वरूपं परिवर्तयति तदुनसारेण क्रियाविशेषाक्षेपकत्वम् संबन्धपरिच्छेदकत्वं चापि द्योतकतायाः स्वरूपं स्वीकार्यं भवति इति नागेशस्य अभिप्रायः। एवं च प्रादेशं विलिखति इति उदाहरणे विशब्दः, "मानं कृत्वा" इति क्रियाविशेषस्य आक्षेपकः जपमनुप्रावर्षत् इत्युदाहरणे च अनुशब्दः जपवृष्ट्योः संबन्धपरिच्छेदकः अर्थात् संबन्धविशिष्टस्य अर्थस्य प्रतिपादकः। अत एव एनां नवीनां द्योतकतापरिभाषामनुसृत्य विशब्दः अनुशब्दश्च द्योतकौ भवितुमर्हतः। नागेशप्रोक्तप्रथमोक्तपरिभाषामनुसृत्य केवलम् पदनिष्ठवृत्त्युद्‌बोधकतास्वरूपायाःद्योतकतायाः स्वीकारेण अनयोरुदाहरणयोः प्रतीयमानस्य क्रियाविशेषाक्षेपस्य तथा जपवृष्ट्योः अनुभूयमानहेतुहेतुमद् भावस्य च श्रोतृसन्तोषमूलकनिराकांक्षशाब्दबोधे भानं न भवति—इत्यनु भववशादेव इयं द्वितीया (नागेशोक्ता) परिभाषा (द्योतकतायाः)। अपेक्षिता वर्तते इति अस्मिन् प्रसंगे नागेशः समर्थयति।

परिष्कृताया अस्या नवीनायाः परिभाषायाः समर्थने पोषणे च (नागेशोक्त) निपातार्थनिरूपणाध्याये स्वमञ्जूषायाम् सुबहुशः चर्चितम् परंतु तच्च अत्र विस्तरभयात् न समालोच्यते जिज्ञासुभिः तत्सर्वं तत एव द्रष्टव्यम्। अतः एतन्मात्रं संसूच्य विरमामोऽस्मात् प्रकरणात्।

निपातविशेषसमभिव्याहृतवाक्येभ्यः जायमानस्य बोधस्य निरूपणावसरे नागेशभट्टस्य दृष्टिः वाचकतावादे द्योतकतावादे च स्थिरीभूता। अस्मिन् परप्रणीतदोषपूर्णनिरूपणापसारणे तथा च निपातघटितविभिन्नवाक्यार्थेषु अनुभूयमानानाम् सूक्ष्माणाम् अर्थानाम् अर्थांशानाम् च व्याकरणशास्त्रीय-नियमानुकूल्यसाधने च सा दृष्टिःसविशेषं स्थिरीभूता वर्तते। अस्मादेव कारणात् एतत्प्रकरणीयं नागेशीयं विवेचनम् तस्य वैदुष्योत्कर्षसिद्धये यशसे च कल्पते इति वक्तुम् शक्नुमः।

इव इति निपातः अपि द्योतकः एव न वाचकः इति नागेशेन साभिप्रायमुक्तम्। तदनुसारेण यत्र कुत्रापि इव इति पदं स्यात् तत्र अवश्यं उपमानताशालि उपमेयताशालि च पदम् उच्चार्यते एव। इदं साहचर्यं

स्वाभाविकम्। अतएव इवपदम् स्वसहोच्चरितपदगतोपमानताशक्तेद्र्योतकम्। अयमेव सिद्धान्तः।

इयम् उपमानताद्योतकता उपमानोपमेयोभयोभयवृत्ति साधारणविशिष्टस्वल्पभेदवत्परिच्छेदकत्वरूपे ज्ञातव्या तथा साधारणधर्मवत्त्वरूपपरिच्छेद्यत्वम् एव उपमेयस्वरूपे ज्ञातव्यम्। एतादृशम् उपमानताद्योतकत्वम् "इव" इति निपाते अवश्यं वर्तते। यतः चन्द्र इव मुखम् इत्यादिस्थलेषु चन्द्रमुखोभयनिष्ठाह्लादकत्वरूपसाधारणधर्मवत्त्वपरकस्वल्पभेद वन्मुखस्य परिच्छेदकता चन्द्रे वर्तते। तस्या एव परिच्छेदकतायाः प्रकाशनम् इव पदं करोति। इव निपातेन ईदृश्याः उपमानतायाः द्योतनमात्रस्य स्वीकारेण न कापि शास्त्रीया व्यवहारसिद्धानुभवविरोधिनी आपत्तिः आयाति।

कतिपये चिन्तकाः चन्द्र इव मुखम् एतादृशस्थलेषु चन्द्रादिपदेषु लक्षणाम् इवादिपदानि लक्ष्यार्थविषयकतात्पर्यग्राहकाणि इति मन्यन्ते। तद्विरोधे नैयायिकाः इवपदं सादृश्यार्थवाचकम् मत्वा प्रतियोग्यनुयोगिभावेन चन्द्रमुखयोरन्वयं स्वीकुर्वन्ति। एषां नैयायिकानां विरोधे सबला युक्तीः प्रदर्श्य नैयायिकमते दोषविशेषं प्रदर्शयति नागेशः नैयायिकानुसारेण चन्द्रप्रतियोगिकसादृश्याश्रयं मुखम् एतादृशः शाब्दबोधः भवति। परंतु चन्द्र इव मुखं दृश्यते तथा च चन्द्रमिव मुखं पश्यामि इत्यत्र उभयोरपि स्थलयोः चन्द्रस्य अन्वयः सादृश्ये भवति। तेन कारणेन एकत्र विशेषणम् अन्यत्र विशेषणं न भवति एतन्न्यायात् चन्द्रस्य मुखेन सह सर्वथा असंबद्धत्वात् तस्मिन् चन्द्रपदे मुखपदसामानाधिकरण्यं न स्यात्। अतः कर्तृकर्मवाच्यगतविभिन्नविभक्तीनामनुगमनं चन्द्रपदे न स्यात्। फलतः उक्तवाक्यद्वये अन्वयः तथा च अवश्यं स्वीकार्या मुखपदानुगामिनी विभक्तिश्च दुर्लभा भविष्यति। एवं स्थितौ नैयायिकाः उक्तवाक्यद्वयम् अशुद्धमिति स्वीकर्तुं विवशाः भविष्यन्ति।

नागेशमते नेयमापत्तिः यतः स आचार्यः, चन्द्रपदस्य अन्वयम् न सादृश्ये अपि तु मुखे स्वीकरोति। अतः तन्मते मुखपदसामानाधिकरण्यं सारल्येनैव उपपाद्यते। अथ च एवम् उक्तवाक्यद्वयम् च व्याकरणनियमैः शुद्धं च।

नागेशः चन्द्रपदं चन्द्रसदृशस्य वाचकम् इव पदं च तस्यैवअर्थस्य द्योतकम् एवम् चन्द्र इव आह्लादकं मुखम् इत्यत्र आह्लादकात् उपमानभूतात् चन्द्रपदार्थात् अभिन्नम् आह्लादकम् उपमेयभूतम् मुखम् ईदृशः शाब्दबोधो

भवति। अत्रन कापि शास्त्रीया व्यवहारसिद्धानुभवविरोधिनी च विप्रतिपत्तिः दृश्यते।

## नागेशप्रदर्शितम् भूषणकारोक्तम् इवपदार्थनिरूपणम्।

भूषणकारः इवसमभिव्याहृतचन्द्रादिपदान्येव स्वसदृशमर्थम् (चन्द्रादिसदृशम् इति रूपमर्थम्) अभिदधते इति मन्यते।

अतः स्वसमभिव्याहृतचन्द्रादिपदेष्वेव स्वसदृशार्थनिरूपिता शक्तिः स्वीकार्या इत्यपि भूषणकारस्य अभिप्रायः वर्तते। अस्यां स्वीकृतौ इवादिनिपाताः उक्ततात्पर्यग्राहकाः इति भूषणकारस्य विचारः। भूषणकारस्य इयं स्वीकृतिः शिष्टाभिमत-सकल-प्रयोगसाधिका इति तथ्ये स्वीकृतेऽपि इवादिनिपाताः उपमानताद्योतकाः इति नागेशाभिमतम् विशिष्टाभिप्रायसाधकम् अत एव अस्मिन् प्रकरणे सिद्धान्तरूपेण तदेव साधकम् इति अस्माकमपि अभिरुचिर्वर्तते तत्र भूषणकारोक्तिविरोधः संभवति।

नागेशोऽपि इमं वक्ष्यमाणं विशिष्टमभिप्रायं स्वमनसि निधायैव उपर्युक्तभूषणकारोक्तम् मौनेन स्वीकृत्यापि परिष्कृतमतम् उपस्थापयति। अस्मदनुभवसंवादि अत्रत्यं नागेशचिन्तनम् एवंविधम् यथा ईदृशेषु इवघटितस्थलेषु सादृश्यप्रतीत्यपेक्षया सादृश्याधारितायाः उपमानतायाः प्रतीति रेव आधिक्येन स्पष्टतया च भवति। इदं सूक्ष्मनिरीक्षणम् सूक्ष्मदर्शिन्याः नागेशदृष्टेरेव फलम् इति न तिरोहितं मर्मज्ञानां विदुषाम्।

एतस्य इवार्थव्याख्यानस्य प्रस्तोतुः नागेशस्य उदारतावशादेव अस्मिन् प्रकरणे भूषणकारोक्तिखण्डनं विनैव स्वीयस्य उत्कृष्टस्य इवार्थव्याख्यानस्य स्थापनं कृतम् अनेन विदुषा। अनेन नागेशीयनिरूपणेन ईदृशस्थलेषु जायमाना वास्तविकी प्रतीतिः (शाब्दबोधः) वैयाकरणपक्षपातिनी सिद्ध्यति।

नागेशं विना न कोऽपि सं० व्या० शास्त्रव्याख्याता अन्यः दृश्यते यः इमां जायमानामपि प्रायः वैयाकरणैः अस्पृष्टाम् उपेक्षितां वा प्रतीतिं सिद्धान्तरूपेण प्रकाश्य अस्मान् अधिगततथ्यान् कुर्यात्। अतः ईदृशस्य स्वीयस्य एतत्प्रकरणीयव्याख्यानस्य कर्तृत्वादेव अयं महानुभावो नागेशः वैयाकरणसमाजस्य संमान्यो व्याख्याता नव्यमतप्रवर्तकश्च अभिधीयते।

न इति निपातः वाक्येषु कदाचित् पर्युदासरूपेण (सदृशग्राहिरूपेण) कदाचिच्च प्रसज्यप्रतिषेधरूपेण प्रयुक्तः उपलभ्यते। सामान्यतः यत्र पर्युदासपरः

न इति निपातः तत्र न-शब्दार्थ-निषेधप्रतियोगिसदृशस्य पदार्थस्य भानं भवति। यथा अब्राह्मणः इत्यत्र ब्राह्मणनिषेधपूर्वकम् क्षत्रियादेर्भानं भवति। अस्मिन् पर्युदासप्रधान-न-निपातप्रयोगे न इति निपातेन समभिव्याहृतघटादिपदानि स्वीयं वास्तविकं प्रवृत्तिनिमित्तम् न प्रकाशयन्ति प्रत्युत तानि, आरोपितप्रवृत्तिनिमित्तम् स्ववाच्यार्थत्वेन प्रकाशयन्ति यथा अब्राह्मणः इति पर्युदासपरके नघटितप्रयोगे न-समभिव्याहृतब्राह्मणपदम् स्वीयं वास्तविकं ब्राह्मणत्वरूपम् प्रवृत्तिनिमित्तम् नाभिदधाति न प्रकाशयति वा। प्रत्युत एतादृशानि पर्युदासपरकननिपातघटितानि पदानि आरोपितप्रवृत्तिनिमित्तम् स्ववाच्यार्थत्वेन प्रकाशयन्ति। यथा अब्राह्मणः इति पर्युदासपरके न-घटितप्रयोगे न समभिव्याहृतब्राह्मणपदम् स्वीयं वास्तविकं ब्राह्मणत्वरूपम् प्रवृत्तिनिमित्तम् नाभिदधाति अपितु तत् ब्राह्मणपदम् आरोपितब्राह्मणत्वं वक्ति। अत एव तत्र क्षत्रियादिरूपस्य अर्थस्य फलतः बोधो भवति। एवम् ईदृशस्थलेषु आरोपितप्रवृत्तिनिमित्तस्य वाच्यार्थस्य वाचकं तु समभिव्याहृतपदमेव नान्यत् किमपि। न इति निपातपदंतु अत्र केवलम् तादृशस्य आरोपितप्रवृत्तिनिमित्तस्य अर्थस्य प्रकाशकम् द्योतकं वा विद्यते। न तु तत्र अयं "न" निपातः वाचकः इति ध्येयम्।

अतएव ईदृशे पर्युदासस्वभावके न—निपातघटिते समस्ते पदे उत्तरपदार्थप्राधान्यम् अनुभूयते। येन "अतस्मै ब्राह्मणाय" "असः शिवः" इत्यादौ सर्वनामकार्यणि भवन्ति। द्योतकताया अभावे अतिसर्वाय इतिवत् "अतस्मै" "असः" इत्यादौ पूर्वार्थप्राधान्यवशात् सर्वनामत्वाभाववशात् तानि सर्वनामत्वोद्देश्यककार्याणि न स्युः। उपसर्जनीभूतास्तु न सर्वादयः इति नियमात्।

अतस्मै अतिसर्वः असः इत्यादौ न इत्यस्य वाचकतावाद सिद्धान्तानुसारेण (न इत्यस्य वाचकतावादे) आरोपितसर्वत्वस्य बोधेन सर्वनामार्थविरुद्धार्थबोधेन पूर्वपदार्थत्वेन तस्य बोधस्य उपसर्जनीभूतम् सर्वनामत्वम् अत एव सर्वनामत्वप्रयुक्तकार्याण्यपि दुर्लभानि भविष्यन्ति।

द्योतकतावादे न इति निपातस्य स्वीयः कोऽपि अर्थः नाभिधीयते अपितु पर्युदासपरकनइतिपदघटितेषु प्रयोगेषु न इति पदस्य द्योतकतावशादेव समभिव्याहृतपदस्यैव वाचकत्वात् उत्तरपदस्य अतस्मै इत्यादिषु तत् इत्यादिकस्य अर्थस्य प्राधान्यम्। एवं च उत्तरपदार्थप्रधानस्तत्पुरुषः इति

संगच्छते। एषु प्रयोगेषु तदादिशब्दानाम् आरोपिततदर्थरूपमुख्यार्थवाचकत्वम् अत एव च सर्वनामार्थस्य उपसर्जनीभूतत्वाभावः, सर्वनामसंज्ञा, तथा तत्प्रयुक्तकार्याणि च भवन्ति। अस्मिन् वादे तत्शब्दादेव आरोपिततदर्थस्य उपस्थितिः। न निपातस्तु तत् इति शब्दबोध्यस्य ईदृशस्य अर्थस्य प्रकाशकमात्रः एव प्रकाश्यश्च अर्थः तत् इत्यादिसर्वनामभ्य एव भवति इति निष्कर्षः। एवम् अस्य पर्युदासपरकननिपातस्य द्योतकतास्वीकारे सर्वं सिद्ध्यति।

यत्र तु न इति निपातस्य निषेधरूपः अर्थः प्रथमतः एव क्रियार्थेन वा गुणरूपेण अर्थेन अन्वयं लभते तत्र "न" इति निपातः पूर्वोक्तस्वभावविरुद्धः (आरोपितदर्थरूपद्योत्यार्थ-हीनः) प्रसज्यप्रतिषेधाद्यर्थकः वैयाकरणैर्मन्यते। "असूर्यंपश्या राजदाराः" "नास्माकमेकं प्रियम्" न सन्देहः "नोपलब्धि" "इत्याद्युदाहरणेषु स्थितः न इति निपातशब्दः उक्तप्रसज्यप्रतिषेध स्वरूपनिषेधार्थपरः। असूर्यंपश्या इत्यत्र न पश्यति ईदृशस्य बोधस्य स्थितिवशात् एव अत्र असमर्थसमासः वैयाकरणैः स्वीक्रियते। यतः न पदार्थस्य सूर्यपदार्थेन सह अत्र संबन्ध एव नास्ति। सूर्यातिरिक्तं पश्यति इति अर्थभानस्य असत्त्वात्। एवमेव नास्माकमेकं प्रियम् इत्युदाहरणे एकत्वसंख्यारूपस्य गुणस्य प्रतिषेधः एवंरूपः अर्थः विधेयः। फलतः अनेके प्रियाः अयमर्थः प्रकटितो भवति। न संदेहः "नोपलब्धिः" इत्यत्र तु सत्तारूपक्रियार्थेन निषेधस्य संबन्धो भवति।

अस्मिन् प्रकरणे नागेशः एक एव वैयाकरणः ईदृशम् "न" निपात संबद्धं सूक्ष्मं सारवत् च व्याख्यानं प्रस्तौति नान्यः कोऽपि नागेशातिरिक्तः वैयाकरणः इत्थं कृतवान्-अनया दृष्ट्या अस्मिन् विषये नागेशः गौरवार्हः एव। तच्च व्याख्यानम् यथा—

नागेशानुसारेण अयं प्रसज्यप्रतिवेधः (न इति निपातस्य अर्थः) समस्तावस्थायाम् अत्यन्ताभावरूपमर्थम् तथा च असमस्तावस्थायाम् अत्यन्ताभावरूपम् अर्थम् अन्योन्याभावरूपं चार्थम् एव उभयविधम् अर्थम् अभिधत्ते।

तादात्म्येतरसंबन्धस्य अभाव एव अत्यन्ताभावः। तथा तादात्म्यसंबन्धस्य अभावः अन्योन्याभावः कथ्यते। प्रागभावः प्रध्वंसाभावश्च न इति निपातद्योत्यौ न स्तः। अत्यन्ताभावस्तु विशेष्यतया तिङन्तार्थक्रियया सहैव अन्वयं लभते।

"एव" इत्ययं निपातशब्दः असंभवरूपस्य अर्थस्य अवधारणरूपस्य च अर्थस्य द्योतकः न तु वाचकः। अत एव तादृशस्य एव निपातस्य अभावेऽपि अवधारणरूपः अर्थः प्रतीयते फलतः वृद्धाः कथयन्ति—असति बाधके सर्वं वाक्यं सावधारणं भवति। ईदृशीं घोषणाम् एवरहितवाक्येष्वपि कुर्वन्ति। क्वेव भोक्ष्यसे इति प्रयोगे आलंकारिकाः असंभवरूपस्य अर्थस्य प्रतीतिं स्वीकुर्वन्ति। स्वोक्तसाधने नागेशः इमाम् आलंकारिकस्वीकृतिम् प्रमाणत्वेन उपन्यस्यति। एवं सः (नागेशः) एवपदस्य द्योतकतां साधयति। न केवलम् इदं तथ्यमेव सः प्रकाशयति परं च अवधारणं त्रिविधम् भवति इति महत्वशालि तथ्यमपि नागेशः एव उद्घाटयति नान्यः, यथा—

१. विशेष्यसंगतः एवकारः, अन्ययोगव्यवच्छेदपरः

२. विशेषणसंगतः एवकारः, अयोगव्यवच्छेदपरः।

३. क्रियासंगतः एवकारः अत्यन्तायोगव्यवच्छेदपरः।

प्रथमोदाहरणम् पार्थ एव धनुर्धरः इति। पार्थेतरस्मिन् अविद्यमानं यत् धनुर्धरत्वं तादृशधनुर्धरत्ववान् पार्थः इत्यस्ति अत्र शाब्दबोधः।

द्वितीयोदाहरणे अयोगः अर्थात् संबन्धाभावस्य व्यवच्छेदः (निवृत्तिः) दर्शितः।

यथा शंखः पाण्डुरः एव। यथा द्वौ निषेधवाचकशब्दौ प्रकृतमर्थं द्रढयतः तथैव अत्रापि स्थितिः। अतः अव्यभिचारितपाण्डुरत्वगुणवान् शंखः एतेन प्रतीतेन अर्थेन सहैव अयं नीलः नास्ति इत्यपि प्रतीतिर्जायते। तृतीय उदाहरणे अत्यन्तायोगः (अतिशयितः योगः) (संबन्धाभावः) तस्य व्यवच्छेदः अभावः अर्थः प्रतीयते।

नीलं सरोजं भवत्येव इत्यस्ति उदाहरणम् अस्य। अस्य तात्पर्यम् कदाचित् नीलत्वगुणवदभिन्नसरोजकर्तृका सत्ता विद्यते। अनेन बोधेन इयमपि प्रतीतिः सुलभा यत् कदाचित् नीलेतरान्यादृशगुणसंयुक्तमपि सरोजं भवति एवमत्र अत्यन्तायोगव्यवच्छेदः स्पष्ट एव।

क्रियागतः एवकारः क्वचित् स्थले आत्यन्तिकम् अयोगव्यवच्छेदकम् अभिधत्ते यथा तमालं नीलं भवत्येव अर्थात् तमालं कदाचिदपि अनीलं न भवति। अत्र तमाले नीलत्वाभावस्य आत्यन्तिको निषेधः प्रतिफलति इति शिवम्।

# धात्वर्थविचारः

संस्कृतव्याकरणशास्त्रे वाक्यार्थघटकेषु प्रमुखस्य धात्वर्थस्य (धातुपदार्थस्य च) अर्थविचारप्रसंगे नागेशभट्टस्य सुसूक्ष्मं गंभीरं च विवेचनम्।

श्रोतारं प्रति संक्रमणीये प्रत्येकविचारे (वाक्यार्थरूपे) गुप्तः प्रकटो वा क्रियारूपः अर्थः अवश्यं विद्यते। एनं विहाय वाक्यार्थस्य पूर्णता श्रोतृबुद्धौ निराकांक्षता च न संभवति, अत एव क्रियार्थहीनवाक्यश्रवणेन श्रोता, अर्थग्रहणजन्यं सन्तोषं नानुभवति। एवं सन्तोषविरहितः श्रोता वाक्यार्थस्य प्रमुखं पूरकं क्रियार्थं ज्ञातुम् व्याकुलो भवति इति सामान्योऽनुभवः। कदाचित् अनेनैव कारणेन संस्कृतव्याकरणशास्त्रमर्मज्ञाः वैयाकरणाः सत्सु अपि अन्येषु वाक्यार्थघटकेषु कारकविशेषणादिपदार्थेषु असन्तुष्टाः सन्तः अन्तिमबोधाय निराकांक्षाखण्डवाक्यार्थबोधाय पूर्णवाक्यार्थबोधाय वा क्रियार्थम् अपेक्षमाणाः क्रियामुख्यविशेष्यकशाब्दबोधसिद्धान्तं स्वीकुर्वन्ति।

सं. व्या. शास्त्रम्, प्रकृतिप्रत्ययतदर्थकल्पनापूर्वकम् प्रक्रियाविशेषैः अनन्तवाक्यार्थानाम् तत्तद्वाचकवाक्यानां च ज्ञानम् आज्जस्येन संपादयति। अनयैव रीत्या प्रत्येकवाक्यार्थे अनिवार्यतया स्थितस्य क्रियार्थस्य परिचयः अपि कार्यते तथा च तस्य क्रियार्थस्य वाचकं पदं ते (वैयाकरणाः) आख्यातमिति व्यपदिशन्ति। अयं च क्रियार्थः, फलविशेषानुकूलव्यापारेण वर्तमानाद्यन्यतमकालेन, कर्त्रा, सति संभवे कर्मणा,संख्यारूपेण च अर्थेन एवं पंचभिः चतुर्भिः वा अर्थांशैः कारणभूतैः (वाक्यार्थः) निर्मितो भवति।

एषामर्थांशानां पृथक् पृथक् बोधाय आख्यातपदम् खण्डद्वये स्थापितम् ययोः प्रथमं खण्डम् "धातुः" इत्युच्यते।

अस्मात् धातुनामकात् क्रियापदांशात् कियान् अर्थः स्वीकर्तव्यः? एवमेव क्रियापदघटकप्रत्ययाश्च कं कम् आख्यातार्थं बोधयन्ति? एषां प्रश्नानां विचारः सं.व्या.शा.ग्रन्थेषु तथा संबद्धविषयकन्यायमीमांसादिग्रन्थेषु उपलभ्यते अस्मिन् प्रसंगे प्राचीनवैयाकरणमतम् पूर्वपक्षत्वेन उपस्थाप्यते अस्माभिः।

प्राचीनवैयाकरणाः श्रीभट्टोजिदीक्षितप्रमुखाः फल-व्यापाररूपयोःद्वयोः अर्थयोः धातोः शक्तिः इति प्रतिपादयन्ति। धातुं क्रियापदगतम् परिचिन्त्य तस्य अर्थः फलम् व्यापारश्च इति द्वित्वसंख्यावान् भवति-ततः तयोः फलव्यापारयोः

अन्वयः श्रोतृबुद्धौ जायते। अनयोः अन्वयः अन्तरंगः धातुरूपैकप्रकृतिजन्य त्वात्तयोः। एवम् अन्वये जाते ततः एव कालादिभिः कर्त्रादिभिः एकत्वादिसंख्याभिश्च सह अन्वयो भवति। अनयोः फलव्यापाररूपयोरर्थयोः परस्परविशेष्यविशेषणभावसंबन्धः एव स्वाभाविकः। अयमन्वयः कदाचित् फलविशेषणकव्यापारविशेष्यकबोधरूपेण भवति कदाचिच्च व्यापार विशेषणकफलविशेष्यकबोधरूपेण। इदमस्ति मुख्यं तात्पर्यम् प्राचीनमतस्य।

अस्मिन् विचारावसरे इदमपि ध्यातव्यं वर्तते यत् पं. गोपालशास्त्रिनेने महोदयः तथा च पण्डितवरेण्याः रामप्रसादत्रिपाठिमहाभागाः धातौ (शब्दरूपे वाचकरूपे) खण्डशः खण्डशः शक्तिम् (एवमुभयत्रमेलनेन्) शक्तिद्वयं स्वीकुर्वन्ति परं च ते द्वे अपि शक्ती न स्वयंपूर्णे अत एव ते खण्डरूपे ताभ्यां अर्थद्वयस्य निष्पत्तिः सारल्येन सिद्ध्यति। तेषां मते वस्तुतः शक्तिः एकैव परंतु सा खण्डद्वये विभक्ता सती द्वित्वभावापन्ना इव, अर्थद्वयं प्रसूते।

खण्डशः धातुनिष्ठया शक्त्या उपस्थितौ फलम् व्यापारश्च इमौ अर्थौ परस्परम् अन्वयं लभेते इत्यत्र नास्ति काचित् विप्रतिपत्तिः।

तथापि वक्ष्यमाणनवीनमतापेक्षया प्राचीनपक्षस्य खण्डशक्तिवादस्य च गौरवदोषग्रस्तत्वात् त्याग एव उचितः। एवं चास्मिन् मते गौरवदोषं दृष्ट्वैव परमलधुमञ्जूषायाः टीकाकर्ता पण्डितचन्द्रिकाप्रसादशुक्लमहोदयः, कुञ्चिकाकलाटीकाकृतश्च, अन्ये वैयाकरणसमीक्षकाश्च धात्वर्थविषयकं प्राचीनं मतम् गौरवदोषदुष्टं स्वीकृत्य तत्त्यागाय परामर्शं प्रस्तुवन्ति। एवं चास्य मतस्य अग्राह्यत्वात् नागेशमतस्य सारल्यात् लाघवाच्च नागेशीय धात्वर्थविषयकं मतं प्रशंसन्ति च।

एतस्य कल्पितस्य धातुनामकस्य अंशस्य अर्थनिरूपणावसरे आचार्यनागेशः स्वपूर्ववर्तिनाम् वैयाकरणानां नैयायिकानां मीमांसकानां च मतानां गंभीरसमीक्षां कृत्वा निर्दुष्टम् धात्वर्थनिरूपणं प्रकटयन् सं. व्या० शा० स्य प्रौढत्वसंपादने गौरववर्धने च साफल्यमवाप्तवान् इति विशिष्टहेतोः सः अभिनन्दनीयो वर्तते।

प्राचीनवैयाकरणो भट्टोजिदीक्षितः कौण्डभट्टश्च धातोरर्थम् फलं व्यापारं चोभयम् मन्वाते। यथा "पच्" धातोः प्रसंगे फलम् = विक्लित्तिः (विक्लेदनम् तण्डुलादीनाम्) वर्तते। व्यापारश्च साध्यावस्थापन्नः

क्रियान्तराकांक्षानुत्थापकः चुल्ल्यादौ पात्रनिधानादिविक्लेदनान्तरूपः सिद्धावस्थापन्नः क्रियारूपः प्रयासः एव क्रियान्तराकांक्षानुत्थापकः। स एव प्रयासः कृदन्तवाच्यक्रियारूपश्चेत् तर्हि सः साधनावस्थः क्रियान्तराकांक्षोत्थापकः इति तत्र विवेकः अवश्यं स्वीकर्तव्यः। स च प्रयासः तिङ.न्तक्रियापदगतधातुना सिद्धरूपे एव अतः क्रियान्तराकांक्षानुत्थापकः।

## प्राचीनमतस्य विशदीकरणम्

धात्वर्थः फलं व्यापारश्च इति कथयद्भिः प्राचीनैः वैयाकरणैः फलव्यापारयोर्धातुः इति कारिकायाम् द्वन्द्वसमासप्रयोगवशात् धात्वर्थः, स्वतन्त्रौ द्वौ अर्थौ इति निष्पद्यते इति साध्यते। यदा इमौ द्वौ अर्थौ स्वतन्त्रौ तदा तत्तदर्थनिरूपिते शक्ती अपि द्वे इत्यत्र नास्ति विप्रतिपत्तिः। एवमेव अनयोः अर्थयोः कदाचित् एकस्य प्राधान्येन कदाचिच्च अपरस्य अर्थस्य प्राधान्येन अन्वयद्वयसाधनमपि आवश्यकं वर्तते। यतो हि धातुघटिते कस्मिंश्चित्क्रियापदे फलविशेषणकव्यापारविशेष्यको बोधः क्वचिच्च व्यापारविशेषणक-फलविशेष्यको बोधः प्रतीयते।

धात्वर्थविषयकस्य अस्य मतस्य उल्लेखः भट्टोजिदीक्षितकृत-कारिकासंवलितकौण्डभट्टकृतग्रन्थव्याख्यायां लभ्यते। नागेशभट्टः इदं मतम् पूर्वपक्षत्वेन संस्थाप्य स्वमञ्जूषाग्रन्थे विस्तरेण परिष्कारपूर्वकम् समीक्षितवान्।

## एतद्विषयकं नवीनं नागेशभट्टस्य मतम्

द्वयोरपि स्वमञ्जूषाग्रन्थयोः नागेशमतेन धातोः इमौ द्वौ अर्थौ (फलम् व्यापारश्च एतद्रूपौ) पृथक् पृथक् स्वयम् स्वस्मिन् पूर्णौ नानुभूयेते। प्रत्युत इमौ परस्परविशिष्टौ भूत्वा एकमर्थं प्रसूतः। तस्य संपद्यमानस्य एकस्यैव अर्थस्य बोधः धातोर्भवति। अयं च धातुवाच्यः अर्थः कदाचित् फलावच्छिन्नव्यापाररूपेण कदाचिच्च व्यापारावच्छिन्नफलरूपेण उपस्थितो भवति इत्यन्यदेतत्।

एवं नवीनमते धातुवाच्यस्य अर्थस्य उक्तरीत्या अन्यतररूपत्वात् एकत्वमेव न तु द्वित्वम् इति संसाध्य प्राचीनमतं दूषयितुम् स इमां कोटिं प्रस्तौति यत् तत्र उपस्थितयोः पृथक् पृथक् अर्थयोः (फलस्य व्यापारस्य च) अन्वयकरणरूपं गौरवं विद्यते प्राचीनमते—इति तु प्रकटमेव दृश्यते। अस्मन्मते (नागेशमते) तु अन्वितस्यैव एकस्य अर्थस्य बोधः एतत्तु अन्यत् यत्

कदाचित् स बोधः फलविशेष्यकः कदाचिच्च व्यापारविशेष्यकः इति । नागेशस्य शक्यतावच्छेदकः एव एतादृशः यः प्राचीनमतानुसारेण अन्वितयोः द्वयोः अर्थयोस्तुल्यः ।

अपरा च आपत्तिः नागेशेन प्रस्तूयते यदा प्राचीनमतम् एकपदोपस्थापितयोः अर्थयोः अन्वयम् स्वीकरोति तदा तस्मिन्नन्वये इमौ द्वौ पदार्थौ (फलं व्यापारश्च) उद्देश्यविधेयभावेन प्रतीयमानौ धात्वर्थः स्याताम् ।

यतः पृथगुपस्थितयोः पदार्थयोः अन्वयः स्वभावतः (सामान्यतः) उद्देश्यविधेयभावेनैव भवति इति व्यवस्था सर्वत्र दृश्यते ।

प्राचीनमतम्—"धात्वर्थरूपेण प्रतीतः जन्यजनकभावसंबन्धात्मकः फलव्यापारबोधः, उद्देश्यविधेयभावसंबन्धात्मकस्य फलव्यापारबोधस्य प्रतिबन्धकः एवम् अनभीष्टान्वयपरिहारः कर्तुं शक्यः" इति वक्तुं शक्नोति । परंतु प्रतिबन्धकस्वीकाररूपगौरवदोषस्वीकाररूपः दीर्घव्यापारः, निरुक्तापत्तिशून्य-तत्परिहारावश्यकताशून्यस्य अस्मन्मतस्य (नागेशमतस्य) तुलनायाम् अरुचिकरः एव । अत एव अत्र प्रसंगे निर्दुष्टमस्मन्मतम् (नागेशमतम्) प्रशस्यमेव तिष्ठति ।

अनेकैः समीक्षकैः टीकाकृद्भिश्च अस्मिन् प्रकरणे अनेककोटिप्रदानेन अत्रत्या प्राचीनमते आपादिता अन्वयगौरवरूपा उक्र्युक्ता आपत्तिः दूरीकृता तथापि नवीनमतापेक्षया अस्मिन् प्राचीनमते एतादृशस्य अन्वयदोषस्य संभावनापि दोषास्पदा एव या नवीनमते सर्वथा स्वतः दूरीभूता वर्तते । यद्यपि नागेशमते प्राचीनापेक्षया गुरुभूतशक्यतावच्छेदकस्य तन्निरूपितशक्तेश्च स्वीकारः कर्तव्यः वर्तते ।

यदपेक्षया प्राचीनमते लघुशक्यतावच्छेदकस्य स्वीकारः इति लाघवं वर्तते (प्राचीनमते) तथापि तत्र प्राचीनमते शक्तिद्वयम् तथा उपस्थितपदार्थयोः अन्वयकरणस्य आवश्यकता वर्तते एतदपेक्षया नवीनमतस्था शक्यतावच्छेदकस्य दीर्घता अपि लघुरेव । एतद्दृष्ट्या अत्रत्यं नागेशमतं प्रशस्यमेवेति अस्माकं विश्वासः । फलमुखगौरवस्य अदोषत्वात् ।

श्रीमण्डनमिश्रप्रभृतिमीमांसकप्रवराः तदनुयायिनश्च फलमेव धात्वर्थः व्यापारस्तु प्रत्ययार्थः इति प्रतिपादयन्ति । वैयाकरणमात्रस्य विरुद्धमेतत् मतं केनापि वैयाकरणेन न खण्डितं नागेशं विहाय । वैयाकरणभूषणसारमतेन महता

प्रयासेन भूषणग्रन्थस्य पंक्तीनां घटाटोपात्मकव्याख्यया च कथंचित् अस्य मीमांसकमतस्य खण्डनम् नाममात्रं भवति इति कृत्वा नागेशभट्ट: अस्मिन् प्रकरणे वैयाकरणाभिमतसिद्धान्तस्य सुरक्षादृष्ट्या वक्ष्यमाणप्रबलयुक्तीः प्रदर्शयन् सं० वैयाकरणानाम् महान् उपकारक: सिद्ध्यति।

अत्र नागेश: उद्घोषयति एतत्प्रसंगे प्रमाणभूत: आचार्य: पाणिनि: लडादिलकाराणां तदादेशानां तिबादीनां च शक्तिं व्यापाररूपे अर्थे न स्वीकरोति अत: मीमांसका: व्यापारस्य प्रत्ययार्थत्वे न किमपि प्रमाणं प्रस्तोतुं समर्था:।

तत्त्वचिन्तामणिकार: पण्डितगंगेशोपाध्याय: "व्यापारस्य धात्वर्थत्वस्वीकारे गौरवं प्रदर्शयन् कथयति पच् धातो: स्थले अग्निसिद्धित: आरभ्य विक्लेदनान्तेषु अनेकेषु व्यापारेषु धातुशक्तिस्वीकारे महत् गौरवम् अत एव तेषां सर्वेषाम् व्यापास्वरूपाणामर्थानाम् प्राप्ति: प्रत्ययार्थत्वेनैव साध्या भवति" इति वदति।

परंतु पचते पक्ष्यति पक्ववान् प्रभृतिषु अनेकप्रत्ययै: कथ्यमानस्य व्यापाररूपस्य अर्थस्य प्राप्त्यपेक्षया सर्वेष्वपि प्रत्ययविशिष्टक्रियापदेषु अनुस्यूतस्य समानतत्वस्य धातुरूपस्य एव अर्थ: व्यापार: इति स्वीकारे लाघवं विद्यते। अनन्यलभ्य: शब्दार्थ: इति न्यायाच्च। व्यापार: अर्थ: धातुजन्य: न तु प्रत्ययजन्यः। एवं व्यापार: धात्वर्थ: इति फलितम्। व्यापारविशेषस्य अर्थस्य बहुत्वात् (पचते पक्ष्यति पक्ववान् इत्यादिषु प्रत्ययभेदसापेक्षतया) मीमांसका: व्यापारसामान्यमेव प्रत्ययार्थं कथयन्ति परंतु वैयाकरणमते फलविशेषावच्छिन्नव्यापारे, पचादिसमभिव्याहृतधातो: शक्ति:। अत एव लाधवम् यत: एकस्यैव धातो: विविधेषु रूपेषु प्रत्ययानामनेकतायां सत्यामपि धातुस्तु एक एव। अत एव धातोरेव व्यापाररूपस्य अर्थस्य लाभे लाघवं निर्बाधम्। प्रत्ययार्थो व्यापार: इति वादिनां कृतेऽपि व्यापारविशेषस्य अर्थस्य उपलब्धये पचादिसमभिव्याहारस्य स्वीकार: आवश्यक: एव। फलरूपस्य अर्थस्य प्राप्तिस्वरूपकार्यान्तरसिद्धये तु मीमांसका: अपि तादृशं समभिव्याहारं (अनिच्छन्तोऽपि) स्वीकर्तुं विवशा: सन्ति। एवं व्यापारविशेषस्य अर्थस्य विचारस्य गौणत्वेन त्यागे सति प्रत्ययापेक्षया धातोरेव सामान्यव्यापाररूपस्य अर्थस्य उपस्थितिस्वीकारे लाघवम् इत्यत्र नास्ति सन्देहावसर:।

अन्या अपि प्रबला: युक्तय: अस्मिन् प्रसंगे नागेशेन प्रदर्शिताः सन्ति याभि: मीमांसकमतम् प्राचीनवैयाकरणमतम् नैयायिकमतं च परास्तं भवति।

अस्मिन् प्रसंगे नव्यमते इयमापत्ति: कर्तुं शक्या यत् नागेशोऽपि फलावच्छिन्नरूपस्य अथ च व्यापारावच्छिन्नफलरूपस्य च परस्परं भिन्नस्य अर्थस्य धात्वर्थत्वं मन्यते अत: "अर्थभेदात् शब्दभेद:" तत: शक्तिभेदश्च इमं सिद्धान्तमनुसृत्य नागेशमतेऽपि शक्तिद्वयकल्पनं स्वीकार्यमेव भवति। प्राचीनमतेऽपि शक्तिद्वयकल्पना खण्डशक्तिकल्पना स्वीक्रियते एव। एतावता उभयेषां मतं प्राय: समानम् एव नतु अन्यतरत् मतं लघु वा गुरु वा। एवमेव यदा प्राचीना: उपस्थितयो: फलव्यापारयो: अर्थयो: परस्परम् अन्वयभारं वहन्ति तदा नवीनमतमपि शक्यतावच्छेदकस्य गुरुतारूपदोषग्रस्तम् एव। एवमपि उभयो: लाघवंगौरवं वा मतविशेषे स्थापयितुं न शक्यम्। एवं समीक्षया स्वमतस्य लाघवं खण्डितं भवितुमर्हति इति जानन्नेव नागेश: स्वमतस्य लाघवसंपादकं वक्ष्यमाणं व्याख्यानं प्रस्तौति। यथा—

यद्यपि अनेकार्थकहरिशब्दात् अनेके अर्था: उपस्थिता: भवन्ति इति सत्यम् तथापि अनेकार्थकशब्दप्रयोगे एकस्यैव अर्थस्य पर्यवसायिनी प्रतीतिर्भवति न तु सर्वेषाम् उपस्थितानाम् हरिपदार्थानाम्। कामम् ईदृशे स्थ्ले एकस्य अर्थस्य बोधात् प्राक् अनेकार्थविषयक: सन्देह: अवश्यम् उपस्थितो भवति परंतु संयोगविप्रयोगादितत्त्वै: सन्देहविषयीभूतानाम् अनेकेषाम् अर्थानाम् निरासपूर्वकम् एकस्यैव अर्थस्य भानं बोधो वा पर्यवसाने तिष्ठति न तु हर्यादि-पदार्थानाम् सर्वेषाम् अर्थानां पर्यवसायी बोध: इत्यवश्यं ध्यातव्यम्। फलत: एकैव शक्ति: तत्र कार्यकारिणी सिद्धयति। एवमेव धात्वर्थप्रसंगे फलावच्छिन्न व्यापाररूपस्य व्यापारावच्छिन्नफलरूपस्य उभयविधस्य अर्थस्य सन्देह: उपस्थित: भवत्येव। परंतु उक्तोदाहरणवत् अनयोरेकतरस्यैव (अन्यतरस्यैव) अर्थस्य पर्यवसायी बोधो भवति न तु द्वितीयस्यापि अर्थस्य। कदाचित् एकस्य कदाचित् अपरस्य बोध इत्यन्यदेतत्। एवं च धातोरेकैवशक्ति: एकमेव अर्थं प्रसूते धातोरुभयार्थकत्वात् अन्यतर: अर्थ:सन्देहविषयीभूत: सन्नपि न शक्तिजन्यपर्यवसायी बोधविषय: अत: तदर्थे बोधविषयीभूतार्थवाचक शक्त्यपेक्षया अन्यस्या: शक्ते: आवश्यकतैव नास्ति। बुद्धस्यैव अर्थस्य कृते शक्त्यपेक्षा न तु सन्देहविषयीभूतस्य अर्थस्य कृते शक्तेरावश्यकता। एवं चात्र न शक्तिद्वयस्वीकारभाररूपगौरवम् नवीनमते यथा प्राचीनमते वर्तते।

उभयोरपि मतयोः फलविशेषणकव्यापारविशेष्यकबोधं प्रति कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्। एवमेव व्यापारविशेषणकफलविशेष्यकबोधं प्रति कर्मप्रत्ययसमभिव्याहृत धातुजन्योपस्थितिः कारणम् इति कारणद्वयस्वीकारः आवश्यकः। एतेन नान्यतरस्मिन् पक्षे एतद्द्विविधबोधदृष्ट्या लाघवं गौरवं वा विद्यते।

तथापि प्राचीनमते-प्रथमं तत्त्वम् (१) शक्तिद्वयस्वीकृतिः द्वितीयम् (२) शक्तिद्वयोपस्थापितपदार्थद्वयकल्पना तृतीयम् (३) तत्र का स्थितिः ? कर्तृप्रत्यय सभभिव्याहारः वा कर्मप्रत्ययसमभिव्याहारः ? इति निरीक्षणम्, चतुर्थं तु (४) उक्तनिरीक्षणोत्तरम् तत्रस्थितवस्तुस्थित्या अन्यतरविधस्य अन्वयविशेषस्य संपादनम्। इमानि चत्वारि तत्त्वानि तथ्यानि वा उभयविधस्थलेषु (कर्तृवाच्यकर्मवाच्यस्थलेषु) जायमानान् परस्परभिन्नान् शाब्दबोधान् घटयन्ति।

नवीनमते उपर्युक्ततृतीयतथ्यस्वीकारः एकैव शक्तिरिति स्वीकारः (सा च नियामकवशात् कदाचित् एकम् कदाचित् अपरम् बोधं घटयति) एवं च द्वे एव तथ्ये अत्यावश्यकत्वे अधिकाधिकंत्रीण्येव तथ्यानि तृतीयतथ्यसंकलनया आवश्यकानि इति कृत्वा प्राचीनमतापक्षया लाघवमेव सिद्ध्यति।

प्राचीनमतवत् अत्र फलरूपस्य अर्थस्य व्यापाररूपस्य अर्थस्य परस्परमन्वयकरणस्य भारोऽपि नवीनमतेनायाति। यद्यपि नवीनमते शक्यतावच्छेदकस्य गुरुता प्राचीनानामाक्षेपाय साधिका तथापि तस्य शक्यतावच्छेदकस्य फलोन्मुखतया आवश्यकत्वेन अथ च प्राचीनमतस्थस्य अन्वयकरणरूपभारस्य दृष्टया लघुत्वाच्च प्राचीनानामाक्षेपः अप्रासंगिक एव निरासयोग्यः। अस्मिन् प्रसंगे स्वमतस्य लाघवप्रयोजकानि तथ्यानि नागेशस्य मंजूषाग्रन्थस्थानि जिज्ञासुभिरवश्यं दर्शनीयानि।

मीमांसकप्रवरस्य आचार्यमण्डनमिश्रस्य तदनुयायिनां च दृष्ट्या फलम् एव धात्वर्थः व्यापारस्तु प्रत्ययार्थः इति मंजूषायाः कलाटीका तथा च तत्त्वचिन्तामणिकारस्य गंगेशोपाध्यायस्य संस्तुतिश्च मीमांसकानाम् उक्त सिद्धान्तस्थापने प्रमाणत्वेन दातुं शक्यते इदं च वैयाकरणमतस्य विरुद्धम्। अतः वैयाकरणसंप्रदायशिरोमणीनाम् मण्डनमिश्रकालादारभ्य नागेशकालात् प्राग्वर्तिनाम् वैयाकरणानां परमं कर्तव्यमासीत् यत् अस्य मीमांसकमतस्य निरासं कृत्वा ते वैयाकरणानां सिद्धान्तभूतम् स्वमतम् प्रतिष्ठापयेयुः परंतु न

केनापि वैयाकरणेन तथा कृतम्। इमाम् स्थितिम् अवतोक्य नागेशः एव एतत्प्रसंगे स्वकर्तव्यंमत्वा मीमांसकमतं खण्डितवान्।

यद्यपि धात्वर्थप्रकरणे भूषणकारस्य पंक्तीनाम् हठात् स्वानुकूलव्याख्यानेन मीमांसकमतस्य विरोधः द्रष्टुं शक्यः तथापि नास्ति तत्र भूषणकारोक्तौ तादृशी स्पष्टता विशदता वा यया सुस्पष्टं सुबहुयुक्तिसिद्धम् बुद्धिग्राह्यम् मीमांसकमतखण्डनं भवेत्। इति विविच्य एतत्प्रसंगीयम् नागेशविवेचनमेव ज्यायः इति हेतोः अधस्तात् तद् विवेचनं प्रस्तूयते।

सर्वप्रथमं नागेशः घोषयति—एतत्प्रसंगे प्रमाणभूत आचार्यः पाणिनिः लकाराणां तदादेशानां तिबादीनां प्रत्ययानाम् शक्तिः व्यापारे वर्तते इति नैव मन्यते। अतः विरोधिनां मतपोषणार्थम् व्यापारस्य प्रत्ययार्थत्वसिद्ध्यर्थम् न किमपि प्रमाणं दृश्यते। एवं प्रमाणाभावात् तेषां मीमांसकानां कथनं स्वकल्पनामात्रम् एव पर्यवस्यति।

मीमांसकमतानुयायी तत्तवचिन्तामणिकारः व्यापारस्य धात्वर्थत्वस्वीकारे गौरवं प्रदर्शयन् कथयति—यत् पच् धातोः प्रसंगे अग्निसिद्धिः इत्यारभ्य विक्लेदनान्ताः अनेकव्यापाराः सन्ति तेषु अनेकेषु व्यापारेषु धातोः शक्ति स्वीकारे महद्गौरवम् इति। अतः तेषां सर्वेषाम् व्यापाराणां लाभाय प्रत्ययस्यैव शक्तिः स्वीकार्या न तु धातोः इति। परंतु सूक्ष्मेक्षिकया इदं तथ्यम् पुरस्तात् प्रकटं भवति यत् पचति पचते पक्ष्यति पक्ववान् इत्यादिस्थलेषु अनेकैः प्रत्ययैः तस्य व्यापारस्य ग्रहणापेक्षया सकलेषु प्रत्ययविशिष्टक्रियापदेषु अनुस्यूतस्य समानतत्त्वरूपधातोः एव अर्थः व्यापारः इति स्वीकारे लाघवं स्पष्टम्। इत्येतद्रहस्यं पूर्वपंक्तिषु स्पष्टीकृतमपि विशदबोधाय तस्य पुनरुक्तिः। इयं पुनरुक्तिः गुणायैव न दोषाय इति मन्ये।

व्यापारविशेषस्य अर्थस्य बाहुल्येऽपि उक्तोदाहरणेषु प्रत्ययबाहुल्यापेक्षया तस्य धात्वर्थत्वे लाघवमेव। यतः एकस्य धातोः विविधेषु रूपेषु (क्रियापदेषु) प्रत्ययानामनेकता वर्तते। धातुस्तु स एक एव। अतः व्यापाररूपः अर्थः एकत्वसंख्याशालिधातोरेव न तु अनेकत्वसंख्याशालिप्रत्ययेभ्यः इति स्वीकारे लाघवं स्पष्टम् एव। व्यापाराः अनेके इति तथ्येन न कापि हानिः। उपयुर्क्तस्वीकृतौ व्यापाराणां बाहुल्यं तु द्वयोरपि पक्षयोः अभिमतमेव परतुं अत्र विचारस्तु धातुप्रत्यययोर्मध्ये वर्तते। अनयोर्मध्ये धातुरेव सर्वप्रत्ययशालिक्रियापदेषु अनुस्यूतः एकत्वेन प्रतीयते च

प्रत्ययास्तु परस्परं भिन्नाः धात्वपेक्षया अनेके च, अत एव तेषु प्रत्ययेषुव्यापारार्थबोधकत्वस्वीकारे स्पष्टमेव गौरवमिति नागेशस्याभिप्रायः।

धात्वर्थो व्यापारः इति कथयन्तः वैयाकरणाः व्यापार विशेषरूपार्थोपलब्धये पचादिसमभिव्याहारान् कारणत्वेन स्वीकर्तुं विवशाः, अतः तेषु गौरवदोषशंका संभवति। परंतु विरोधिनां मीमांसकानामपि फलार्थप्राप्तिरूपकार्यान्तरसिद्धये पचादिसमभिव्याहारस्य कारणता अभिमता एव। एवं च अनया रीत्या उभयोरपि मतयोः साम्यवशात् प्रत्ययापेक्षया धातोरेव व्यापारार्थस्य स्वीकारे उक्तरीत्या लाघवमेव सिद्ध्यति।

अस्मिन् प्रकरणे डा० कपिलदेवद्विवेदिमहाभागः "अर्थविज्ञानं व्याकरणदर्शनम्" इति नाम्नि स्वप्रबन्धे कथयति यत् व्यापारः धात्वर्थः अभिमतश्चेत् तर्हि सकर्मकाणां विभागो न संभवति। परंतु एतत्कथनम् असंगतम् यतः भूषणकारसदृशवैयाकरणप्रवरः प्रश्नमिमम् उद्भाव्य स्वीयपंचमकारिकायां सुस्पष्टं घोषयति यत् व्यापारस्य प्रत्ययार्थत्वे एव सकर्मकाकर्मकत्वव्यवस्था विच्छिन्ना भवति न तु व्यापारस्य धात्वर्थत्वस्वीकारे इयं व्यवस्था विघटते। अतः संशोधितरूपे द्विवेदिमहाभागानामुक्ता कोटिः अयमाक्षेपो वा (नागेशमते वैयाकरणमते वा) प्रत्ययार्थव्यापार वादिमीमांसकेष्वेव आपतति न तु वैयाकरणेषु।

## नागेशेन मीमांसकमतस्वीकारे आक्षिप्ता सफला युक्तिः।

व्यापारः प्रत्ययार्थः स्वीकृतश्चेत् (मीमांसकदृष्ट्या) तर्हि पचति इत्येतद्गततिपा बोध्यस्य फूत्कारव्यापारस्य गच्छति इतिगततिपाऽपि बोधः स्यात् यतः तिपः प्रत्ययस्य स्वरूपम् उभयत्र समानम् एव। अस्य दोषस्य निरासार्थं मीमांसकाः फूत्काररूपव्यापारबोधनाय तिपा सह पचादिसमभिव्याहारस्य कारणत्वं स्वीकृत्य गच्छति इत्येन्निष्ठतिपा फूत्कारव्यापारस्य बोधाभावं मन्यन्ते इति चेत्तर्हि एतादृशी कल्पना स्वयमेव गौरवदोषाय अलम् अतः गौरवं तदवस्थमेव तिष्ठति।

फलरूपबोधप्राप्तये पचादिसमभिव्याहारस्वीकृतिसमकालमेव अनेकेषु प्रत्ययेषु व्यपारसामान्यार्थलाभाय शक्तिस्वीकारः अपि आवश्यकः इत्येतदपि मीमांसकमते गौरवदोषावहम्। शक्तिस्वीकारेण (प्रत्यये व्यापारबोधक-शक्तिस्वीकारे) उक्तसमभिव्याहाररूपकारणस्वीकारेण इत्थम् उभयस्वीकारेण मीमांसकमते गौरवदोष इति नागेशस्य तात्पर्यम्।

अत्र मीमांसका: इत्थम् "यत् व्यापारसामान्यम् आख्यातार्थ: (प्रत्ययार्थ:) शक्तिस्तु फलविशेषे वर्तते। तदाधारेणैव व्यापारविशेषस्य प्रतीति: संभवति" इति कथयन्ति। अस्त्वेतत् अस्य मीमांसकमतस्य विरोधे नागेशभट्ट: स्वमञ्जूषायाम् "यत्तु फलं धात्वर्थ: ...... इत्यन्यत्र विस्तरः" इति ग्रन्थेन प्रबला: युक्ती: प्रदर्श्य मीमांसकमतं खण्डितवान्। जिज्ञासुभि: स ग्रन्थांश: एतत्प्रकरणीयनागेशाशयज्ञानार्थम् अवश्यं समालोचनीय इति निवेद्यते।

मीमांकमतखण्डनान्तरम् नागेश: नैयायिकमते स्थितान् दोषान् एतत्प्रसंगे प्रकाशयति—यद्यपि नागेशप्रतिपदोक्तवाक्यै: इदं खण्डनम् नैयायिकानामिति नोक्तम् "यदपि .... तन्ना" इति प्रतीकमाश्रित्यैव स: मतविशेषम् खण्डयति तथापि अत्रत्यग्रन्थस्य आधारेण कुंजिकाटीकाकृत् इदं खण्डनीयं मतं नव्यनैयायिकानामिति कथयति—परन्तु कलाटीकाकृत् इदं नागेशखण्डितं मतं प्राचीननैयायिकानामिति प्रतिपादयन्ति। डाक्टरकपिलमहोदय: इदं मतं प्राचीननैयायिकानामिति ब्रवीति। विस्तरभयात् अस्मिन् विषये स्वसमीक्षाया: प्रकाशनं विना वयं स्वमतं स्थापयाम: यत् इदं खण्डनीयं मतं प्राचीननैयायिकानामेवेति।

नागेशानुसारेण अयं प्राचीननैयायिकपक्ष: व्यापारमात्रं धात्वर्थं स्वीकरोति। व्यापारविशेषः धातुविशेषस्य अर्थ: इति अयं पक्षः न मन्यते। फलोपस्थितिस्तु कर्मप्रत्ययात् भवति इत्यस्ति अस्य पक्षस्य धारणा।

अस्य विरोधे नागेश: कथयति यदा फलं धात्वर्थ एव नास्ति शुद्धव्यापार एव धात्वर्थ: विद्यते तर्हि ग्रामं गच्छति—त्यजति इत्यत्र उभयोरपि क्रियापदयो: समानव्यापारस्य एवं च कर्मप्रत्ययार्थसंयोगरूपस्य अर्थस्य च उपस्थिति: समानरूपेण अनुभूता भविष्यति (अनुभूयते) एवं व उभयत्रापि समानार्थबोधस्य आपत्ति: दुर्वहा दुरुद्धरा च भविष्यति। इमामवस्थां दूरीकर्तुं (ग्रामं गच्छति त्यजति इत्युभयो: समानार्थकतां दूरीकर्तुम्) एका कारणसामग्री ग्रामं गच्छति इत्यत्र अन्या च कारणसामग्री ग्रामं त्यजति इत्यत्र अवश्यं स्वीकार्या भविष्यति येन उक्त: समानार्थबोध: तेषां मते आपादयितुम् अशक्य: स्यात्। इति कोटिक्रमं स्वयमेव उद्भाव्य नागेशः कथयति उक्तकारणताद्वयस्वीकार: वैयाकरणमतापेक्षया अधिक: इति हेतो: एतत्स्वीकारघटितम् नैयायिकमतम् वैयाकरणमतापेक्षया गुरुभूतम् अत एव त्याज्यं वर्तते।

उक्तोदाहरणयोः बोधपार्थक्यसिद्धये अयं पक्षः संयोगबोधे गमादिसमभिव्याहारः कारणम् इमां युक्तिम् प्रस्तोतुम् शक्नोति परंतु तत्रापि पूर्वोक्तः गौरवदोषः विद्यते एव।

प्राचीननैयायिकपक्षस्य स्वीकारे त्यागः गमनम् अनयोः पदार्थयोः न कोऽपि भेदः सिद्ध्यति इत्ययं दोषः यतः धात्वर्थः ईदृशस्थलेषु कर्मार्थकप्रत्ययस्य अर्थः फलविशेष इति मत्वा उभयत्र अर्थभेदव्यवस्था क्रियते चेत्तर्हि इदं व्यवस्थाकरणम् स्वयमेव अन्यमतापेक्षया गौरवदोषदुष्टम् इति अवश्यं ध्येयम्। एतदपेक्षया **धातुविशेषादेव फलविशेषावच्छिन्नव्यापारस्य उपस्थितिः**। इति रेखांकिताभिप्रायस्वीकारेण उभयत्र अर्थभेदोपपत्तिः सुतराम् लघुत्वात् श्लाघ्यैव वर्तते। धातुविशेषानुपूर्वी व्यापारविशेषार्थस्य प्रतीत्यै कारणम् इति तु अस्य नैयायिकपक्षस्यापि कृते स्वीकार्यमेव विद्यते येन उक्तरेखांकिततथ्यस्वीकारेण वैयाकरणमते गौरवदोष इत्याक्षेपं कर्तुम् अयं नैयायिकपक्षः न प्रभवति।

अथ च सर्वेष्वपि स्थलेषु कर्मप्रत्ययाः द्वितीयाख्यसुब्विभक्तेरन्तर्गता न भवन्ति अतः अनेकेषु सुप्प्रत्ययेषु फलस्वरूपार्थनिरूपितशक्तिस्वीकारस्य आपत्तिरपि अस्मिन् मते आपतत्येव यतः गत्यर्थकर्मणि द्वितीया चतुर्थी ल्यब्लोपे पंचमी इत्यनेन कर्मणि पंचमी क्तस्येन्विषयस्य कर्मणि इत्यनुशासनेन कर्मार्थे सप्तमी क्वचित् तिङ्प्रत्ययबोध्यम् कर्मत्वम् एवम् अनेकस्थलेषु फलनिरूपितशक्तिस्वीकारापेक्षया अयं पक्षः किमर्थम् धातोरेव अस्य फलस्य उपस्थितिं न स्वीकरोति? या स्वीकृतिः कर्मान्तरसाधनाय अस्य पक्षस्य कृते अवश्यं स्वीकार्या वर्तते।

एतदतिरिक्तम् कर्मकर्तृप्रक्रियास्थले अयं पक्षः फलरूपस्य अर्थस्य लाभाय धातुमेव हेतुं स्वीकर्तुं विवशः एव। यतः तत्र फलप्रतिपादकः सुब्विभक्तितिङ्विभक्त्यन्यतररूपः कर्मप्रत्ययः न विद्यते। एवं वैयाकरणविरुद्धधात्वर्थखण्डने अस्य लोकोत्तरतर्कनैपुण्यम् दृष्ट्वा अस्य अंशस्य अस्मिन् प्रबन्धे निवेशलोभः न नियंत्रितः इति शम्।

# तृतीयोऽध्यायः

## प्रक्रियाखण्डसारांशः

*अकारान्तस्य पदस्य अव्यवहितोत्तरम् लृकारादिपदसत्तायाम् विधेयरूपेण "अ+लृ" इत्यस्य स्थाने "अल्" इत्यस्य स्थापनं सकलवैयाकरण-शिष्टजनसम्मतं च वर्तते। परन्तु सूत्रप्रवृत्त्या इदं कथं साध्यमित्यस्ति समस्या। अस्याः समस्यायाः समाधानाय महामहोपाध्याय कैयटभट्टेन तदनुयायिना श्रीभट्टोजिदीक्षितेन च "र" प्रत्याहारस्य आवश्यकता कथिता अथ च 'र' प्रत्याहारेणैव इयं समस्या तैः दूरीकृता वर्तते। तच्च नागेशाय न रोचते। अस्मद्दृष्ट्या प्राचीनानां रप्रत्याहरस्वीकृतिरूपः उपायः गौरवदोषग्रस्तः अत एव त्याज्यः तदपेक्षया अत्यन्तम् ऋजुपद्धत्या नागेशेन कृतम् उक्तसमस्यायाः समाधानम् श्रेयस्करम्।*

*"र" प्रत्याहारवादी पक्षः कथयति-वर्णसमाम्नाये "लण्" इति सूत्रवर्ती अकारः अनुनासिकः "लण्" इत्युपदेशस्थः अच् च वर्तते अतः उपदेशेऽ जनु० इति सूत्रेण तस्य इत्संज्ञा क्रियते पूर्ववर्तिहयवरट् सूत्रस्थं रकारम् आदिं मत्वा "लण्" सूत्रस्थम् अकारम् इत्संज्ञकम् मत्वा साधितः "र" इति शब्दात्मकः प्रत्याहारः निर्मितो भवति यः रकारं लकारं च बोधयति।*

*"उरण् रपरः" इति सूत्रे विद्यमाने "रपर" इत्यत्र स्थितः रकारः प्रत्याहाररूपः अतएव उः ऋकारस्य लृकारस्य च स्थाने विधीयमानः अण् (उद्देश्यावस्थः) रः =र् वा ल् परः यस्य एवंभूतः एव, जायते न तु तद् विना विधीयते इत्यस्ति "उरण् रपरः" इति सूत्रस्य अर्थः तेन स्थानेऽन्तरतमः इति सहयोगेन कृष्ण् अ+ऋद्धि तथा तव् अ लृकारः इत्यत्र आद्गुणः इति सूत्रेण विधीयमानः अकारस्वरूपः गुणः क्रमशः रपरः लपरश्च सन् कृष्णर्धिम् तवल्कारं च साधयति इति प्राचीनवैयाकरणानाम् आशयः अतिसंक्षेपेण वर्णितः।*

*परंतु अत्र नागेशस्य उक्तप्रिक्रयासाधनरीतिः युक्तियुक्ता न्याय्या ऋज्वी च। सा च रीतिः रप्रत्याहारम् अस्वीकृत्यापि इमां समस्यां निराकर्तुम् क्षमा*

इत्यस्ति तस्यां लाघवम्। अस्मिन् प्रसंगे सर्वप्रथमं नागेशः लण्सूत्रस्थस्य अकारस्य कैयटोक्तम् दीक्षितसमर्थितं वा अनुनासिकत्वं न स्वीकरोति। सः एतत्स्वीकारे न किमपि प्रमाणं पश्यति। तेन तदाधारिता रप्रत्त्याहारसिद्धिरपि अप्रामाणिकी इति सविशेषं नागेशः प्रतिपादयति।

द्वितीया कोटिः नागेशस्य इत्थं वर्तते—यदि रप्रत्याहारः पाणिनेरिष्टः अभविष्यत् तदा सः "अतोल्रान्तस्य" इति स्वरचितसूत्रे लकारोच्चारणं नाकरिष्यत्। तत्र रान्तस्य रप्रत्याहारान्तस्य रान्तस्य लान्तस्य इत्यर्थलाभः रप्रत्याहारस्वीकृतौ सरलः। परन्तु लकारोच्चारणेन अर्धमात्रागौरवस्वीकारेण स्पष्टमिदं यत् पाणिनेः एतादृशः रप्रत्याहारः कदाचिदपि नाभीष्टः (अन्यथा सः अत्र अर्धमात्रालाघवरूपानुकूल्यवशात् अतो. इति सूत्रे लकाररहितं रम् पठेत्) अथ च उपर्युक्तस्य दीक्षितादिभिः समर्थितस्य लण्सूत्रस्थाकारस्य अनुनासिकत्वम् पाणिनेरिष्टं स्यात् तदा सः अष्टाध्याय्यां यण्शब्दघटितसूत्रेषु यण् "इति स्थाने" य इत्येव पठेत् । उपर्युक्तस्य अनुनासिकत्वस्य वशात् यण् इति स्थाने य इत्यस्यैव प्रत्याहारस्वरूपत्वात् अस्य स्वरूपस्य यण् इति स्वरूपापेक्षया लघुता सापि अनेकसूत्रेषु स्पष्टैव। तथापि पाणिनिः "य" इति प्रत्याहारम् न स्वीकरोति अत एव "य" इति लाघवपदम् प्रत्याहारम् त्यक्त्वा सःयण् इति स्वरूपम् एव प्रत्याहारम् प्रतिपादयति-एतेनापि उक्तस्य अनुनासिकत्वस्य चर्चा पाणिनेरनभिमता तदाधारिता रप्रत्याहारसिद्धिश्च स्वकल्पनामात्रमेव न तु सिद्धान्तः इति प्रतिपादयति नागेशः।

लघुशब्देन्दुशेखरे नागेशप्रोक्ताः अन्याश्च युक्तीः परीक्ष्य वयं कथयितुं शक्नुमः यत् रप्रत्याहारस्वीकारस्य पन्थाः सर्वथा गौरवदोषपूर्णः क्लिष्टकल्पना प्रचुरश्च। एवं च नागेशसंकेतः रप्रत्याहारास्वीकृतौ एव विद्यते।

समस्यानिवारेणतु नागेशः कथयति—"उरण् रपरः" इति सूत्रम् अनु भाष्यकारः "लपरत्वं वक्ष्यामि" इति पूरकम् वचनम् उक्तवान्। तदर्थश्च उः स्थाने विधीयमानः अण् (उद्देश्यभूतः) यथा रपरः भवति तथैव लपरोऽपि भवति—इत्यस्ति स्पष्टः अर्थः पूरकवाक्यस्य। एवं च स्थानेऽन्तरतमसहयोगेन अ+ऋ इत्यस्य स्थाने अर् अ +ऌ इत्यस्य स्थाने अल् इति व्यवस्थयाकृष्णर्द्धिः "तवल्कारः" इति द्वयं सारल्येन सिद्धयति।

एवं च अत्रत्यं नागेशविवेचनम् दृष्ट्वा एतन्मतं दृढं भवति—यत् वस्तुतः भाष्यवचनस्य पूरकवाक्यस्य उरण् रपर इति सूत्रपरिशेषरूपेण स्वीकृतौ

स्पष्टार्थप्रतिपत्त्या उक्तसमस्यासमाधानम् लाघवेन उपर्युक्तरीत्याभवति इति वस्तुस्थितौ सत्यामपि द्राविडप्राणायामवत् विचित्रकल्पनाघटितरप्रत्याहार सिद्ध्या उक्तसमस्यायाः समाधानम्, अर्थमात्रालाघवेन पुत्रोत्सवं मन्यमानानाम् वैयाकरणानाम् क्लेशायैव न तु लाभाय—इत्यस्ति नागेशस्य दृष्टिः। अस्याः दृष्टेः महत्त्वं तदाश्रितनागेशवैशिष्ट्यं च बुद्ध्वा एव मया अस्य नागेशविवेचनस्य अस्मिन् निबन्धे समावेशः कृतः।

गव्यूतिः गव्यम् इत्यनयोः शब्दयोः प्रक्रियावस्थायाम् गोर्यूतौ छन्दस्युपसंख्यानम् इत्यनेन, अध्वपरिमाणे चेति वार्तिकेन वान्तो यिप्रत्यये इति सूत्रेणापि अन्यतमेन अवादेशे कृते "ग् अव् यूतिः" "ग अव् यम्" इत्यत्र ओकारस्य अवादेशे जाते लोपः शाकल्यस्येति सूत्रार्थज्ञानवतः शिष्यस्य मनसि वलोपस्य शंका उत्पद्यते। सः शिष्यः विष्ण इह इत्यत्र जातम् वलोपम् दृष्टवान् तत्रस्था वलोपकारिणी स्थितिः ग् अव् यम् ग् अव् यूतिः इत्यत्र विद्यते एव। अनपोरुदाहरणयोः वलोपस्य आवश्यकता नास्ति इति कथनं तु पर्जन्यवल्लक्षणप्रवृत्तिः इति न्यायविरुद्धम्। समानायां स्थितौ एकत्र वलोपः क्रियते अन्यत्र न क्रियते—इत्यत्र किमस्ति कारणम्? इति शंकामूलिका शिष्यस्य (उक्तस्य) मनसि मुहुर्मुहुः जिज्ञासा समुदेति। एतज्जिज्ञासाशमनार्थम् श्रीदीक्षितेन प्रश्लेषवादस्य आलंबनं कृतम्। गोर्यूतौ छन्दसि इत्यत्र स्थितछकारात् प्राक् वकारं प्रश्लिष्य तस्य लोपेन अथ च 'वान्तो थि प्रत्यथे'। इत्यत्र च वकारात् प्राक् च वकारं प्रश्लिष्य (अध्वपरिमाणे चेत्यस्य 'वान्तोयीत्यस्य पूरकत्वात् वान्तो यि० इत्यत्र स्थितप्रश्लेषेणैव) अयं संकेतः लभ्यते। (वस्यापि लोपेन उक्तसूत्रवार्तिकस्वरूपम् यथापठितम् स्थिरमेव वर्तते) यदत्र जातः वान्तादेशः वान्त एव तिष्ठेत् अर्थात् तस्य जातस्य वस्य लोपः कस्यामप्यवस्थायां न भवेदिति उक्तसंकेतस्य अर्थः संपद्यते। एवं च प्राप्तोऽपि लोपः दूरीक्रियते इति शिष्य—मनसि समाधानम् उत्पाद्यते। समस्यानिवृत्तिश्च भवतीति दीक्षिताशयः।

परंतु नागेशाभिप्रायः एतत् प्रश्लेषवादस्य विरुद्धः। तदनुसारेण प्रश्लेषे न किमपि प्रमाणम्। इदं तु स्वकल्पनामात्रप्रसूतम् स्फुरणम्। अतः तत्स्वीकारे वैयाकरणानाम् श्रद्धा अस्मिन् प्रश्लेषवादे न जायते। इति कथयित्वा नागेशः प्रतिपादयति—ये वैदिकाः शब्दाः तेषां स्वरूपरक्षा, (स्वरतः वर्णतः आनुपूर्वीतश्च) महत्त्वपूर्णम् कार्यम्। तद्विरोधे यदि किमपि पाणिनिसूत्रं

प्रवर्तयितुं चेष्टते अथ च तत्रवृत्त्या तस्य वैदिकशब्दस्य स्वरूपविकृतिः भवति चेत् तर्हि स्वरूपरक्षारूपमहत्तरकार्यतुलनायाम् विकृतिकारकपाणिनिसूत्र-प्रवृत्तेरभावः एव साधुर्मन्तव्यः। एवं च वैदिकगव्यूतिशब्दे लोपः शाकल्यस्येति सूत्रस्य प्रवृत्तियोग्यसामग्रीसत्त्वेऽपि तस्य सूत्रस्य अप्रवृत्तिः।

एवमेव क्रोशद्वयवाचिलौकिकगव्यूतिशब्दे गव्यम् इति शब्दे च स्वरूपरक्षारूपमहत्तरविधानानुरोधेन लोपः शाकल्यस्य इत्यस्य अप्रवृत्तिः। यतः वैदिकशब्दवत् संज्ञाशब्दानामपि स्वरूपरक्षा अपेक्षिता वर्तते। इमौ गव्यम् गव्यूतिशब्दौ अर्थविशेषस्य कृते संज्ञाशब्दौं अतः तयोर्विकारप्रापकस्य लोपः शाकल्यस्येति सूत्रस्य वैदिकगव्यूतिशब्दे इव अप्रवृत्तिरिति तथ्यम्।

अत एव रघुनाथ इति शब्दे प्राप्तापि णत्वप्रवृत्तिः परिहरणीया भवति। एवमेव सकलसंज्ञाशब्दाः स्वरूपरक्षादृष्ट्या एव सूत्रैरन्वाख्येयाः इति सिद्धान्त वशात् अनेकेषु संज्ञाशब्देषु विविधसूत्रप्राप्तिवशात् संभावितविकृत-स्वरूपापेक्षया विकृतिजनकसूत्राप्रवृत्तेरेव पन्थाः ज्यायान् इति नागेशस्य अभिप्रायः। येन गव्यम् गव्यूतिः इत्यत्र संज्ञाशब्दवशात् आपाद्यमानावलोप-प्राप्तिरपि दूरीक्रियते फलतः अनयोः संज्ञाशब्दयोः स्वरूपरक्षा अक्षुण्णा इति घोषयति नागेशः

अप्रामाणिकप्रश्लेषवादस्वीकृत्यपेक्षया वैदिकशब्दवत् संज्ञाशब्दानामपि स्वरूपरक्षा एव व्याकरणस्य मुख्यं प्रयोजनम्। अत एव संज्ञाशब्दानां वैदिकशब्दानां च परंपरानुमोदितस्वरूपरक्षाविघातकसूत्रप्रवृतेः तिरस्कार एव उपस्थितस्य संकटस्य श्रेष्ठं समाधानम्। इति अस्मत्समीक्षयापि नागेशाभिप्रायः प्रशस्यः एव। यतः सकलाऽपि अष्टाध्यायी शिष्टस्वीकृतवैदिकशब्दानां स्वरूपरक्षायै एव निबद्धा एवमेव शिष्टपरिगृहीतसंज्ञाशब्दानामपि स्वरूपरक्षा पाणिनिसूत्राणां लक्ष्यभूता इति कृत्वैव गव्यम् इत्यादिषु प्राप्तस्य वलोपस्य अपसारणम् लोपः शाकल्यस्य इति सूत्राप्रवृत्त्या साधनीयम् इति।

साधुशब्दान्वाख्याने उपयुक्तानाम् पाणिनिसूत्राणामर्थविशेषकरणे यदा धर्मशास्त्रस्थतथ्यज्ञानापेक्षा उद्‌भवति तदा सं० वैयाकरणानामिदं कर्तव्यमस्ति यत् ते धर्मशास्त्रसमर्थिततथ्यावलोकनपूर्वकम् तत्तत्सूत्राणामर्थविवेचनं कुर्युः। प्रत्यभिवादे शूद्रे इति (८-२-८५ क्रमे स्थितस्य) सूत्रस्य अर्थकरणे इयमेव स्थितिः। धर्मशास्त्रम् शूद्रस्य कृते आशीर्वचनस्य निषेधं करोति इति तथ्यम् अजानन् कोऽपि सं० वैयाकरणः अस्य सूत्रस्य समीचीनमर्थं कर्तुं न प्रभवति।

कदाचित् अत एव नागेशपूर्ववर्तिभिःदीक्षितादिवैयाकरणैः अत्र सारगर्भितं विवेचनं न प्रस्तुतम्। नागेशः यस्य धर्मशास्त्रग्रन्थेषु समीक्षाः उपलभ्यन्ते, पूर्णधर्मशास्त्रज्ञः अत एव सः अस्मिन् सूत्रे स्थितस्य प्रत्यभिवादशब्दस्य अर्थं करोति यत् प्रणामादिविनयपूर्णाभिः क्रियाभिः गुरूप्रभृतिषु प्रतिक्रिया जायते। तस्याः फलम् एतदेव भवति यत् ते गुरुप्रभृतयः मान्याः प्रणामकारकान् स्वाशीर्भिः समृद्धान् कर्तुम् कांश्चित् शब्दान् उच्चारयन्ति ते एव शब्दाः (गुरुप्रभृतीनाम्) प्रत्यभिवादशब्दस्य वाच्यार्थाः भवन्ति। अत्रेदं सावधानतया ज्ञेयम् यत् एवं प्रक्रियया गुरुप्रभृतयः न केवलम् आशीर्वचनात्मकशब्दानेव उच्चारयन्ति प्रत्युत आशीर्वादातिरिक्तसहानुभूतिशब्दानपि उच्चारयन्ति। इत्थं गुर्वादिप्रयुक्तम् द्विविधमपि शब्दजातं प्रत्यभिवादपदेन उच्यते न तु केवलम् आशीर्वचनमात्रम् इति। अत एव 'कुशल्यसि तुभजक' इति भाष्योदाहरणं संगच्छते तत्र टेः प्लुतत्वं प्राप्नोति, यदि आशीर्वाद एव प्रत्यभिवादशब्दार्थः मन्येत तर्हि अत्र तदभावेन प्लुतत्वप्राप्तिरेव नास्ति, प्राप्तेरभावे "अशूद्रे" इति निषेधस्य संगतिः दुर्लभैव। एवं शूद्रविषये आशीर्वादनिषेधस्य धर्मशास्त्रसमर्थितत्वात् प्रत्यभिवादशब्दस्य आशीर्वचनमात्रार्थकरणेन शूद्रविषये प्लुतत्वप्राप्त्यभाववशात् अशूद्रे इति सूत्रकारकृतः अंशः व्यर्थः भविष्यति। नागेशोक्तदृष्ट्या आशीर्वचनातिरिक्तस्यापि प्रत्यभिवादपदार्थत्वेन शूद्रविषये दूराद्धूते चेति सूत्रेण प्लुतत्वप्राप्त्या तन्निषेधार्थम् "अशूद्रे" इति पदं संगच्छते सूपपन्नं च भवति इत्थं वैयाकरणानां कर्तव्यमासीत् यत् प्रत्यभिवादशब्दस्य एतादृशार्थस्य स्फुटतां कुर्युः येन एकतः पाणिनिसूत्रस्थस्य "अशूद्रे" इत्यंशस्य साफल्यम् शूद्रविषये, आशीर्वादातिरिक्तम् नमस्काराद्युत्तरं गुर्वादिकृतप्रत्युत्तरमपि प्रत्यभिवादः कथ्यते इति वस्तुस्थितेः ज्ञानम् सकलवैयाकरणच्छात्राः कर्तुं शक्नुयुः। इत्थम् एतादृशस्य वैयाकरणान्तराकृतस्य केवलं नागेशेनैव कृतस्य तथ्यस्यप्रकाशनेन सः अभिनन्दनीय एव वर्तते।

दूराद्धूते च इत्यस्मिन् पाणिनिसूत्रे दूरशब्दस्य हूतशब्दस्य च अर्थः स्वपूर्ववर्तिना केनापि वैयाकरणेन न कृतः येन "सक्तून् पिब देवदत्त" इति वाक्ये देवदत्तपदश्रवणोत्तरम् प्रमुखतया संबोधनविभक्तेः शंका कैश्चित् कर्तु शक्या भवति। नागेशमते अत्र दूराद्धूते चेति प्लुतस्तु भवत्येव देवदत्तपदान्त्यस्य अकारस्य टिरूपस्य। परंतु मुख्यसंबोधनविभक्तये यः अर्थः अपेक्षितः सः अस्मिन् वाक्ये नास्ति अतः अत्र संबोधनविभक्तिः राजमार्गेण न

सिद्ध्यति गौणतया तु प्लुतसिद्ध्युत्तरम् सा सिद्ध्यत्येव । इति महत्त्वपूर्णभेदः शुद्धसंबोधनस्थले गौणसंबोधनस्थले (= केवलज्ञापनरूपे अर्थे प्रकाशिते सति) च विद्यते तस्य ज्ञानम् एतत् सूत्रस्थशब्दद्वयार्थस्पष्टीकरणं बिना न संभवति अतः अत्रत्यम् नागेशीयविवेचनम् उपयोगि वर्तते ।

यत्र शिष्टैः संबोधनविभक्तिः स्वीकृता तत्रापि ज्ञापनरूपः अर्थः अस्त्येव इति तथ्ये सत्यपि केवलज्ञापनप्रधानेवाक्ये सक्तूनपिब देवदत्त इत्यत्रापि वाक्यार्थघटकतया ज्ञापनरूपः अर्थः अस्त्येव। परन्तु तत्र पारिभाषिक संबोधनार्थत्वाभावः। अत एव केवलज्ञापनरूपसाधर्म्यात् मुख्यसंबोधनार्थे केवलज्ञापनरूपे अर्थे च उभयत्रापि ज्ञापनरूपस्य अर्थस्य सत्त्वात् (संबोधनस्थले ज्ञापनातिरिक्तार्थसत्ता—अन्यत्र केवलज्ञापनसत्ता इति अन्यदेतत्) सक्तून् पिब देवदत्त इत्यत्र गौणी संबोधनविभक्तिः ।

नागेशानुसारेण अस्मिन् सूत्रे दूरशब्दः देशविशेषवाची सापेक्षः च वर्तते सः दूरशब्दः तं देशम् अभिधत्ते यत्र स्थितः वाक्यार्थविषयीभूतः संबोध्यमानः पुरुषः श्रोता वक्तुः सामान्यप्रयत्नोच्चारितं शब्दं श्रोतुम् अक्षमः सन् तस्य वक्तुः अधिकतरप्रयत्नोच्चारितशब्दमपेक्षते तं शब्दं शृणोति च (अपेक्षानुसारेण उक्तं शब्दम् इत्यर्थः) अत्रेदं सविशेषं ध्येयम् एतादृशः दूरदेशः संबोधनविषये तथा च संबोधनातिरिक्तविशिष्टार्थज्ञापने च क्रियमाणशब्दव्यापाररूपव्यवहारस्य कर्तुः श्रोतुश्च अपेक्षयैव निर्णेतव्यः। ईदृशः पूर्वोक्तः कर्तुः अधिकतर प्रयत्नोच्चारितशब्दश्रवणापेक्षः दूरपदार्थः अस्मिन् सूत्रे अभीष्टः इति नागेशाभिप्रायः ।

द्वितीयपदस्य हूते इत्यस्य आह्वानरूपः अर्थः अयं शब्दः उपलक्षणरूपः अत एव आह्वानेन अर्थेन सह दूरावबोधनम् अर्थात् कस्यचित् वक्तव्यार्थस्य ज्ञापनम् इत्ययमपि अर्थः विद्यते अस्य हूत इति शब्दस्य। परंतु अस्मिन् ज्ञापने संबोधनस्थलीयज्ञापने च अस्ति एव भेदः इति नागेशेन साभिप्रायं विवेचितम् । यदर्थे सः सविशेषं श्लाघ्यः। संबोधनार्थश्च सिद्धस्य कस्यचित् वस्तुनः अभिमुखीभावः सोऽपि अभिमुखीभावः किंचिंज्ज्ञापनफलकः सिद्धान्तितः नागेशेन। दूराद्धूते च इति सूत्रेऽपि उपलक्षणीभूतेन आह्वानेन अर्थेन प्रतीयमानः बोधनव्यापारः अपि उक्तनागेशसम्मतसंबोधनार्थसादृश्यवशात् मुख्यां संबोधनविभक्तिं लभते इति भ्रमस्तु त्याज्य एव। यत्र शुद्धं ज्ञापनं बोधनं वा भवति तत्र अनेन सूत्रेण प्लुतत्वे जातेऽपि गौणी संबोधनविभक्तिः सिद्ध्यति ।

यथा वात्सीबन्धुः इत्यत्र भाष्यकारेण केवलबोधनार्थप्रधानत्वेऽपि गुरोरनृतः इति प्लुतत्वे जातेऽपि संबोधनविभक्तेतरभावः स्वीकृतः। तत्र केवला शुद्धा प्रथमा भाष्यकारेण स्वीकृता। अत एव सक्तून् पिब देवदत्त ३ इत्यत्र देवदत्तविषयकसक्तुपानज्ञापनरूपे अर्थे विद्यमानेऽपि केवलं ज्ञापनरूपमर्थमाश्रित्य संबोधनविभक्तिर्नैव मुख्यतया भवति। देवदत्तपदोत्तरम् प्लुतस्तु दूराद्धूते चेति सूत्रेण कृतो वर्तते एव। एवं च यत्र शिष्टैः संबोधन विभक्तिः स्वीकृता तत्रापि ज्ञापनरूपः अर्थः इति तथ्ये सत्यपि केवलज्ञापनप्रधाने वाक्ये "सक्तून्पिब इत्यादौ अपि ज्ञापनरूपः अर्थः वाक्यार्थघटकतया विद्यते। एवं च एतदर्थकृतसाम्यवशात् उभयत्रापि संबोधनविभक्तिः मुख्या गौणी वा भवेत्। सा च शिष्टस्वीकृतसंबोधनस्थले एव भवतु नान्यत्र अत एव सक्तून् पिब देवदत्त३ इत्यत्र मुख्यत्वेन संबोधनविभक्तेरभावः प्लुतत्वं तु विद्यते एव इति नागेशविवेचनेन अस्य सूत्रार्थस्य सा स्पष्टता जाता या तत्पूर्ववर्तिवैयाकरणव्याख्यानात् भवितुम् अशक्या आसीत् इति।

क्वचित् पाणिनिसूत्रे सूत्रविशेषप्रवृत्तियोग्यानि तथ्यानि विद्यन्ते तथापि तत्र सूत्रविशेषप्रवृत्तिर्न भवति इति समस्यायाः समाधानप्रसंगे नागेशः स्वबुद्धिविलसितम् उपायं प्रदर्शितवान् येन समस्या सारल्येन दूरीभूता जायते। तद्यथा भोभगो अघो अपूर्वस्य योऽशि इति पा० सूत्रे भगो+ अघो एवमेव अघो+ अपूर्वस्य इति खण्डयोः एङः पदान्तादति इति पाणिनिसूत्रस्य प्रवृत्तिः फलतः पूर्वरूपैकादेशसन्धिः कथं नेति समस्या। अत्र दीक्षितादिभिः सौत्रत्वात् आर्षत्वाच्च अत्र सन्ध्यभावः इति निर्बला युक्तिः प्रदत्ता एवमेव भो भगो इत्यादयः निपाताः हे इति शब्देन सह उच्यमानौ हे भवन् इति पदेन जायमानम् अर्थम् प्रसूतः इति—इत्यपि वदन्ति दीक्षितादयः परंतु अस्मिन् कथने निपातद्वयस्य सहप्रयोगस्य निषेधकारेण अमरकोशकारेण सह विरोधः। अत एव नागेशः इमान् त्रीन् शब्दान् सान्तान् अनुकरणशब्दान् न तु निपातान् कथयित्वा सकारस्यरुत्वयत्वलोपेषु जातेषु "एङः पदान्तादति" इति दृष्ट्या लोपस्य असिद्धत्वात् न तत्प्रवृत्तिरिति वदति नागेशस्य स्थापना सरला विवादरहिता अत एव प्रशस्या इति कृत्वा तस्या अत्र चर्चा कृता वर्तते। एषां त्रयाणां शब्दानां सान्तत्वस्वीकारेण सह तेषां निपातत्वमपि स्वीकरोति दीक्षितः येन संबोंधनार्थकनिपातानाम् हे भो हे भगो इत्यत्र हे घटितानाम् सहप्रयोगे (हे शब्देन सह प्रयोगे) अमरकोशकारेण विरोधः अमरकोशकारः कौ अपि द्वौ

संबोधार्थकनिपातशब्दौ सहैव न प्रयोज्यौ इति कथयति अतः तेन सह दीक्षितस्य विरोधः परंतु निपातत्वस्थाने एषाम्सान्तानुकरणशब्दस्वीकारेण नागेशमते नास्ति अमरेण सह विरोधः।

## अवशिष्ट-दीक्षित-कार्यपूरको नागेशः

क्वचित् सूत्रद्वयस्य पाणिनिसूत्रपाठे एकत्वेन प्रतीतस्य योगविभागेन अनिष्ट-प्रयोगसिद्धेःमुक्तिःसिद्धयति इति तथ्ये सत्यपि दीक्षितमहोदयेन योगविभागफलविशेषोल्लेखं विनापि योगविभागः सिद्धान्तितः स च अस्मद्बुद्धिं न परितोषयति इति दीक्षितस्य न्यूनतां दृष्ट्वा नागेशः अवशिष्टम् दीक्षित-कार्यं कृतवान्, यथा पाणिनिः टिढाणञ्० अनेन सूत्रेण सहैव "यञश्च" इति सूत्रं पठितवान्। एवं च तत्र उभयोरपि सूत्रयोः एकसूत्रता वर्तते। उभयमपिसूत्रम् टिदादिभ्यः यञन्तेभ्यश्च स्त्रीत्वे अर्थे ङीप् प्रत्ययमेव विदधाति। तथापि दीक्षितस्य मते अनयोः योगविभागः इष्टः तु नागेशेनापि समर्थ्यते परंतु अस्य फल किम् इत्यत्र दीक्षितः मौनमालम्बते यद् नागेशाय न रोचते फलतः सः एतत्फलं प्रदर्शयति यथा—

गर्गस्य गोत्रापत्यं स्त्री इति विग्रहे गर्गशब्दात् यञि वृद्धौ गार्ग्यशब्दात् यञश्च इति सूत्रेण ङीपि "हलस्तद्धितस्य" इति सूत्रं प्रबाध्य 'प्राचां ष्फ तद्धितः' इति तद्धितसंज्ञके ष्फप्रत्यये जाते शेषप्रक्रियया गार्ग्यायणी इति रूपस्य सिद्धिः। ष्फप्रत्ययस्य वैकल्पिकत्वात् तदभावे हलस्तद्धितस्य इति यलोपे जाते गार्गी इत्यपि रूपं तस्मिन्नेव अर्थे सिद्धयति। इत्थं रूपद्वयसिद्धिर्जायते।

यद्यत्र दीक्षितसमर्थितः अस्मत्समर्थितः (नागेशसमर्थितश्च) योगविभागः न स्वीक्रियते तर्हि प्राचां ष्फ तद्धितः इत्यत्र यञः अनुवृत्त्या सहैव टिदादीनामपि अनुवृत्तिः प्रसज्येत येन अनेकेषाम् अनिष्टप्रयोगाणाम् सिद्धिरूपा आपत्तिः संभवति एवं च अनभीष्टटिदाद्यनुवृत्तिप्रतिबन्धाय दीक्षितसम्मतः अस्मत्पोषितश्च योगविभागः कर्तव्य एव। तेन यञश्च इति विभक्तसूत्रात् यञः एव अनुवृत्तिः न तु टिदादीनाम् अनुवृत्तिः प्राचां ष्फ तद्वितः इत्यत्र भवति। फलतः उक्तानिष्टप्रयोगापत्तिः स्वयमेव दूरीभवति।

एतदुक्तलाभदृष्ट्या दीक्षितस्य गौरवदोषग्रस्तवत् प्रतीयमानं योगविभागकरणरूपं मतम् निर्दोषतां भजते इत्यस्ति नागेशस्य उपकारः।

यद्यपि तत्त्ववोधिनीकारोऽपि अनयैव रीत्या योगविभागमिमं समर्थयते

तथापि सः नागेशोत्तरवर्ती अत एव अस्य योगविभागस्य प्रयोजनकथने नागेशः एवं प्रशंसाधिकारी नान्यः इति वक्तुं शक्यते। तत्त्वबोधिनीकारस्तु नागेशीयम् अभिप्रायं बुद्ध्वैव एतल्लिखितवान् इति संभाव्यते। परंतु दीक्षितहोदयः योगविभागं स्वीकृत्यापि तस्य प्रयोजनविशेषम् फलविशेषं वा (नागेशेन उक्तम् अनिष्टप्रयोगापत्तिदूरीकरणरूपम्) न प्रकाशितवान् इयमेव न्यूनता दीक्षितमतस्थ इति वक्तुं शक्यम् अनया दृष्ट्या एतन्नागेशीयं मतम् संस्कृतव्याकरण शास्त्रीयप्रक्रियांशे महत्त्वशालि इत्यस्माभिर्विवेचितम्।

प्रायः सर्वाणि सूत्राणि (पाणिनेः) दृष्टप्रयोजकानि कतिचित् विहाय। अर्थात् येषां सूत्राणामुपयोगः प्रक्रियानिर्वाहादिना साधुशब्दसाधनादिषु स्पष्टतया कर्तुं शक्यते तानि दृष्टप्रयोजकानि सूत्राणि संख्याया विपुलानि तत्तुलनायाम् येषाम् उपयोगः नानुभूयते तानि संख्यायामल्पानि परन्तु तेषां प्रकटदृष्टप्रयोजकत्वाभावेऽपि पठितरूपे एव पारायणेन पुण्यावाप्तिः इत्यस्ति आदर्शः संस्कृतवैयाकरणानाम्। एकवचनं संबुद्धिःइति सूत्रस्थाने 'सुः संबुद्धिः' इति न्यासेन लाघवम् सकलप्रयोजन (लक्ष्य) सिद्धिश्च नागेशेन साधिता एवं च तत्रैका आपत्तिः सप्तमीबहुवचनसुप्प्रत्ययांशसुशब्दस्यापि संबुद्धित्वप्राप्त्या अनिष्टलक्ष्यावतारः संभवति तन्निवारणाय संबोधने चेति सूत्रात् संबोधनपदानुवृत्त्या संबोधनसंबंधी एव सुः संबुद्धिः कथ्यते नान्यः इत्यर्थलाभेन सप्तमीबहुवचने प्रकटिता आपत्तिः दूरीभवति इति नागेशस्य कोटिः। अत्र पण्डितनित्यानन्दपर्वतीयः संबोधने इत्यस्य उक्ताम् अनुवृत्तिम् कार्यान्तरे उपयोजयति अथ च न्यासांशभूतस्य सुशब्दस्य उकारे अनुनासिकत्वप्रतिज्ञया संबोधनसंबन्धी एव सुः संबुद्धिसंज्ञको भवति न तु प्रथमैकवचनस्थः सप्तमीबहुवचनस्थश्च सुः तादृशो भवति इति प्रतिपादितवान्। नागेशापेक्षया इयं कल्पना क्लिष्टा। द्वयोर्मध्ये कतरा युक्तिः ग्राह्या इत्यस्मात् विरम्य वयम् अत्र प्रकरणे नागेशरुचिं पश्यामश्चेत्तर्हि तदनुसारेण एवं न्यासेन लाघवे सिद्धेऽपि तपोरूपपारायणफलदृष्ट्या यथापठितम् एव सूत्रं समुचितम् अर्थात् उक्तदृष्ट्या न्यासस्य ग्राह्यत्वेऽपि 'एकवचनं संबुद्धिः' अस्यैव पाठस्य आदरः कर्तव्यः। वेदांगव्याकरणपाठकाले तेनैव रूपेण पठनेन तपोरूपसाधनसाध्यं पुण्यम् भवतीति कथयन् नागेशः परंपरानुमोदितपाठस्यैव समर्थकः इति सिद्ध्यति। अनेन अभिप्रायेण वयमपि यथाश्रुताष्टाध्यायीपाठे आदरधियं कुर्याम इति संकेतः कथ्यते।

सर्वे इत्यस्य प्रक्रियासाधनावसरे सर्व+जस् इत्यवस्थायाम् दीक्षितेन जसः स्थाने अनेकाल्त्वात् शी आदेशः 'जसः शी' इति सूत्रेणकृतः ज्ञाप्यते साध्यते वाः तत्र महान् दोषः यदि श् ई इति अक्षरद्वयं गृहीत्वा अयमादेशः 'शी' इतिरूपः अनेकाल् भवति तर्हि तस्यामेव स्थितौ अर्वत्+औ, अर्वत्+जस् इतिस्थाने 'तृ' इत्यादेशस्यापि शी इत्यादेशसादृश्यवशात् अनेकाल्त्वं सिद्धमेव। तत्रापि त्+ऋ इत्यनयोः समावेशः। एवं च संपूर्णस्य स्थानिनः जसः स्थाने यथा शी तथैव संपूर्णस्य अर्वत् इति स्थानिनः संपूर्णशरीरे 'तृ' इत्यादेशवशात् अनिष्टप्रयोगापत्तिःदीक्षितमते दुर्वारा। तामपनेतुं 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषाया उपयोगः दीक्षितेन अर्वन्तौ अर्वन्तः इति साधने कृतः वर्तते समानायामपि परिस्थितौ 'सर्वे' इत्यत्र परिभाषाया उपयोगः न कृतः इत्यस्तिमहान् दोषः। परिभाषार्थश्च अनुबंध(इत्संज्ञक)वशात् यत् अनेकाल्त्वं तन्न ग्राह्यम् अतएव 'तृ' इत्यादेशे अनुबन्धस्य ऋकारस्य कारणेन अनेकाल्त्वं नास्ति एवं च संपूर्णस्य अर्वत् शब्दस्य स्थाने तृ इत्यादेशस्य आपत्तिः दीक्षितेन दूरीक्रियते—परंतु समानायामेव स्थितौ शी=श्+ई इत्यत्र अनुबन्धः शकारः अनेकाल्त्वं न विघटयति इति दीक्षितसंकेतः युक्तिविरुद्धः।

एतत्सर्वं समीक्ष्य नागेशः अस्याः परिभाषाया उपयोगः अर्वन्तौ अर्वन्तः इत्यत्र दोषपूर्णः अथ च सर्वे इत्यत्र शित्वात्सर्वादेशः। श् इत् यस्य सः शित् आदेशः संपूर्णस्य स्थानिनः शरीरे भवति इति तत्तात्पर्यम्। यद्यपि सर्वादेशकाले 'श्' इत्यंशः इत्संज्ञको नास्ति, अतः शित्वं दुर्वारं दृश्यते तथापि 'इत्संज्ञायोग्यत्वमनुबन्धत्वम्' इति सिद्धान्तेन भावीत्संज्ञावशादपि अयं 'शी' आदेशः शित् भवत्येव एवं च सर्वादेशव्यवस्थया एकतः सर्वे इत्यस्य सिद्धिर्भवति अपरतश्च पूर्वोक्तस्य तृ इत्यादेशस्य अनया रीत्या नानुबन्धकृतमनेकाल्त्वम् इति परिभाषया अनेकाल्त्वं खण्डितं भवति येन अर्वन्तौ अर्वन्तः इत्यनयोः सिद्धिः अञ्जसैव भवति। सर्वे इत्यत्र अनेकाल्त्वात् सर्वादेशस्य व्यवस्था नागेशसम्मता नास्ति येन दीक्षितमतमिव समानपरिस्थितौ एकत्र नानुबन्ध इति परिभाषाप्रसक्तिः अन्यत्र तस्यामेव परिस्थितौ अप्रवृत्तिः इति दोषारोपणात् नागेशमतम् मुक्तं भवति। अस्मिन् विषये सर्वे इत्यत्र शित्वात् सर्वादेशकरणपक्षे शेखरे प्रबला युक्तयः नागेशेन प्रदत्ताः ताः तत एव द्रष्टव्याः। उद्+स्थानम् उद्+स्तम्भनम् अनयोः प्रयोगयोः उभयत्र सकारस्य स्थाने

*पूर्वसवर्णादेशरूपे थकारे जाते झरो झरि इति लोपस्य वैकल्पिकत्वात् तदभावपक्षे चर्त्वे च जाते 'उत् थ् थानम्' 'उत् थ् तम्भनम्' इति रूपद्वयं सिद्ध्यति इति दीक्षिताशयः। दीक्षितानुसारेण अथ च सर्वेषां मतेऽपि लोपपक्षे 'उत्थानम्' 'उत्तम्भनम्' इति रूपद्वयं निर्विवादम्। परंतु विवादस्तु लोपाभावपक्षीयरूपविषये वर्तते। दीक्षितानुरोधेन अष्टाध्यायीपाठस्य परंपराप्राप्तस्वरूपवशात् खरिचेति सूत्रं त्रिपाद्यां पूर्ववर्ति उदः स्था० इति सूत्रं त्रिपाद्यां परवर्ति। अतः सकारस्थाने थकारादेशस्य खरिचेति दृष्ट्या असिद्धत्वात् तत्र सकारस्यैव सत्तां पश्यति खरिचेति सूत्रम् अत एव लोपाभावपक्षे 'उत् थ् थानम्' 'उत् थ् तम्भनम् इत्येव रूपद्वयं साधु मन्यते श्रीदीक्षितमहोदयः।*

*परंतु अत्र मते नागेशस्य आक्षेपः—दीक्षितकालात् सुचिरं प्राक्कालवर्ती आचार्यः सकलसाधुशब्दसाक्षात्कारवान् भाष्यकारः पतंजलिः श्री दीक्षितापेक्षया सूक्ष्मदर्शी अन्यमेव विचारजातं प्रस्तौति। भाष्यकारकाले अष्टाध्यायीपाठक्रमः दीक्षितकालिकपाठापेक्षया भिन्नक्रमः तदनुसारेण खरिचेति सूत्रं त्रिपाद्यां उदः स्था० इति त्रिपादीस्थसूत्रानन्तरमेव पठ्यते येन असिद्धत्वाभावात् खरिचेति दृष्ट्या सकारस्थानीयः थकारः खरिचेति सूत्रेण दृश्यते एव अत एव तस्य चर्त्वे जाते 'उत् त् थानम्' उत् त् तम्भनम् इति रूपद्वयं लोपाभावपक्षे स्वीकार्यम् व्याकरणशास्त्रानुमोदितसकललक्ष्यसाक्षात्कारवतः ऋषिकल्पस्य आचार्यपतंजलेः वचनानुरोधेन तात्पर्यानुरोधेन लोपाभावपक्षे तकारद्वयघटितमिदं प्रदर्शितम् रूपद्वयमेव साधु मन्तव्यम् न तु दीक्षितकालिकपाठानुरोधेन उत् थ् थानम् उत् थ् तम्भनमिति लोपाभावपक्षे रूपद्वयं ग्राह्यम् इति नागेशस्य संकेतः विद्यते।*

# अथ तृतीयोऽध्यायः

## रप्रत्याहरखण्डको नागेशः

अकारान्तस्य पदस्य उच्चारणानन्तरम् व्यवधानराहित्येन सह कस्यापि उत्तरवर्तिनः लृकारादिपदस्य उच्चारणकाले लृ इत्यस्य उच्चारणस्थाने केवलस्य लकारस्य उच्चारणम् साधुत्वाधायकम् अथवा पुण्यजनकम् स्मर्यते सूत्रकारादिभिः। एतद्विपरीतोच्चारणेन अधर्मः अथ च तत्स्थलीयविवक्षितार्थस्य अभिव्यक्तेरभावः। इमौ द्वौ दोषौ परंपरावादिसंस्कृतभाषाचार्याणां दृष्ट्या उत्पद्येते। अत एव एतादृशप्रयोगेषु विधेयरूपेण (अ+लृस्थाने) लकारोच्चारणस्य विधानम् संकेतपूर्णया अतिसूक्ष्मया 'उरण् रपरः' इति

सूत्ररूपया भाषया सूत्रकारेण लपरत्वं वृक्ष्यामि इति भाष्योक्तिरूपया च वाण्या भाष्यकारेण कृतं वर्तते। यतः उरण् रपरः' लपरत्वं वक्ष्यामि इति च वाक्यद्वयं (कर्तृ) स्वसूक्ष्मतावशात् अस्पष्टतावशाच्च साधारणव्याकरणच्छात्रोपकारदृष्ट्या अस्य विधानस्य ज्ञानं कारयितुम् तथा न समर्थम् यथा अल्पबुद्धिभिः अपेक्षितं वर्तते। अत एव उत्तरवर्तिनः वैयाकरणाः एतादृशस्थलेषु लकारोच्चारण विधानाभिव्यक्तेः सुस्पष्टप्रकाशनाय प्रयत्नम् कृतवन्तः। एषां सर्वेषाम् अथ च परस्परं भिन्नमतानामपि आग्रहः अस्मिन्नेव तथ्ये वर्तते यत् उपर्युक्तदशायाम् (अ+लृ) इतिरूपायाम् लकारोच्चारणमेव विधेयं वर्तते। अस्मिन् विधाने न कस्यापि विमतिरिति।

एवं च यद्यपि सर्वे वैयकारणाः अस्यां स्थितौ लकारोच्चारणं विधिप्राप्तम् मन्यन्ते तथापि एतल्लक्ष्य-साधने प्रदीपटीकाकारमहामहोपाध्याय-कैयटभट्टस्य विदुषः एवं च श्रीमद्भट्टोजिदीक्षितस्य च प्रक्रिया द्राविडप्राणायामवत् गौरवदोषाक्रान्ता अत एव निर्दुष्टप्रक्रियया एतल्लक्ष्य-साधने कृतादरो नागेशः अस्मिन् प्रसंगे सुसूक्ष्मम् वैदुष्यप्रचुरम् च व्याख्यानं प्रस्तुतवान्। नागेशमतस्य सिद्धान्तभूततया प्रतिपक्षित्वेन स्थितस्य प्राचीनमतस्य (दीक्षित-कैयटयोः पद्धतेः) स्थापनम् ततः तत्रत्य-दोषाविष्करणम् प्रसंगप्राप्तम् वर्तते इति धिया प्रथमम् एतत् प्रसंगीयम् प्राचीनमतम् निरूप्यते उक्तलक्ष्यसिद्धये म० म० कैयटः भाष्यव्याख्याने स्वीये प्रदीपे तथा च श्रीभट्टोजिदीक्षितः सिद्धान्तकौमुद्याम् च उरण् रपरः इति संक्षिप्तसूत्रस्य 'लपरत्वं वक्ष्यामि' इति भाष्योक्तेश्च आशयम् वर्णयन्तौ कथयतः यत् वैयाकरणाः इतरप्रत्याहारवत् 'र' नामकं च अतिरक्तम् प्रत्याहारम् स्वीकुर्युः इति। फलतः सूत्रकारः स्वीयलाघवपूर्णपद्धतेर्निर्वाहाय अस्य प्रत्याहारस्य कल्पनाम् प्रामुख्येन कृतवान्। सः निजस्य अभिप्रायविशेषस्य सिद्धये एकाधिकवर्णान् कवचित् स्थले अपेक्ष्यमाणान् दृष्ट्वा पुनः पुनः तत्स्थले तेषां सर्वेषाम् वर्णानाम् पृथक् पृथक् उच्चारणस्वरूपगौरवदोषभिया सर्वानपि वर्णान् संगृह्य अक्षरसमाम्नायमाध्यमेन रचितम् तेषां सर्वेषां वर्णानां प्रत्येकस्य वाचकं लघु पदं स्वीकरोति। इदमेव लघु सूक्ष्मं वा पदम् प्रत्याहारः कथ्यते। यथा अण् इति पदम् प्रत्याहारः वर्णसमाम्नायमाध्यमेन हलन्त्यम् इति सूत्रमाध्यमेन च अ इ उ एषां वर्णानाम् बोधकम्। यत्र यत्र एषां वर्णानाम् अपेक्षा वर्तते तत्र तत्र एषां त्रयाणामपि वर्णानां पुनः पुनः उच्चारणापेक्षया सर्वत्र अण् इति पदस्य उच्चारणम्

लधु सिद्ध्यति इत्यस्ति तात्पर्यं प्रत्याहारवादस्य।

परंतु रप्रत्याहारस्य कृते प्रत्याहारसाधकसामग्र्याः अभावः विद्यते। तदर्थम् प्रत्याहारवाचकपदान्तिमावयवस्य इत्संज्ञा अनिवार्या अन्य प्रत्याहारसाधने इव। इति साधारणोऽपि व्याकरणशास्त्रच्छात्रः जानात्येव। अस्य प्रत्याहारस्य सिद्धये 'र' इत्यत्र स्थितस्य अन्तिमवर्णस्य अकारस्य इत्संज्ञा दुर्लभा, तस्याः दौर्लभ्यनिवारणाय आभ्यां विद्वद्भ्याम् प्रयासः कृतः वर्तते।

अष्टाध्यायीपद्धतौ प्रतिपदोक्तैर्विभिन्नैः प्रत्याहारैः अनेक वर्णघटितनियमानां लाघवेन सिद्धिर्भवत्येव परंतु र इति प्रत्याहारविषये नास्ति तादृशी व्यवस्था। 'र' प्रत्याहाररूपे पदे अक्षरद्वयम्। एकम् अक्षरम् 'र्' इति द्वितीयं च 'अ' इति। लण् इति माहेश्वरसूत्रस्थस्य अकारस्य इत्संज्ञा सूत्रकारस्य गूढाशयवशात् कर्तव्या एव इति अनयोर्विदुषोः आग्रहः सम्मतिः वा। एवं च हयवरट् इति माहेश्वरसूत्रस्थम् रकारम् आदिं मत्वा तस्य आदिरूपस्य रकारस्य इत्संज्ञकलण्सूत्रस्थाकारस्य च मध्ये पठितत्वात् आदिरन्त्येन सहेता इत्यनुशासनेन 'र' प्रत्याहारेण लकारस्य बोधः सुतरां सुलभः। इत्थम् 'र' इति प्रत्याहारः र्‌ल् इत्यनयोवर्णयोः प्रत्यायको भवति येन कृष्णर्द्धिः तवल्कारः ईदृशौ प्रयोगौ सिद्ध्यतः। एवं च रप्रत्याहारसिद्धये लण् सूत्रस्थाकारस्य इत्संज्ञा तदैव संभवति यदा सः अकारः अनुनासिकः अभिमतः स्यात्। यतः इत्संज्ञाविधायकम् हलन्त्यम् इति सूत्रं तु अकारस्य हल्त्वाभावात् अन्त्यत्वाभावाच्च न प्रवर्तते अस्य अकारस्य इत्संज्ञाविधाने उपदेशेऽजनुनासिक इत् इति सूत्रम् (कर्तृ) उपदेशावस्थम् अनुनासिकमेव अचम् इत्संज्ञकं करोति। एभ्यः रेखांकितेभ्यः त्रिभ्यः वैशिष्ट्येभ्यः रहितस्य इत्संज्ञा नैव संभवति। लण्सूत्रस्थः अकारः लण् इति सूत्रस्वरूपोपदेशस्थः अथ च अच् च वर्तते अतः सः अनुनासिकोऽपि स्वीकार्यः येन तस्य इत्संज्ञा भवेत्। अकारस्य इत्संज्ञायां जातायाम् पूर्वत्वेन गृहीतस्य हयवरट् सूत्रस्थरकारस्य आदित्वं स्वीकृत्य अथ च इत्संज्ञकस्य प्रत्याहारबोध्यवर्णज्ञानकाले तस्य लोपः इति सूत्रेण लोपवशात् 'र' प्रत्याहारे टकारस्य अकारस्य च अनिवेशं साधयित्वा मध्यगस्य लकारस्य ग्रहणेन च च रप्रत्याहारेण रकारलकारौ बोध्येते इति हेतोः रप्रत्याहारस्वीकारे अनयोर्विदुषोराग्रहः वर्तते। एवं च अनया रीत्या उरण् रपरः इति सूत्रस्य अर्थोऽपि इत्थं परिवर्तते यथा—उः इति पदम् ऋकारस्य लृकारस्य च षष्ठ्याम् एकवचनम् अण् शब्दः प्रथमान्तः उद्देश्यस्थानीयः रपरः इति पदवर्ति र इति

पदम् प्रत्याहारबोधकम् अत एव तत्पदम् र् ल् इत्यनयोर्बोधकम् इति विवेकः। एवं ऋकारस्य स्थाने विधीयमानःअण् आदेशः 'र' इतिवर्णपरकः लृकारस्य च स्थाने जायमानोऽण् आदेशः लकारस्वरूपाक्षरपरकः इति व्यवस्था स्थानेन्तरतमः इति सूत्रसहयोगेन लभ्यते। अनया रीत्या अस्याः चर्चाया आरंभे उपन्यस्तोदाहरणे अ+लृ इत्यस्य स्थाने अल् इतिरूपेण विधेयस्य लस्य दर्शनम् अन्यत्र रस्य विधीयमानस्य अणः उत्तरवर्तित्वेन दर्शनं संगच्छते। तथा च चर्चितलक्ष्यस्य कृष्णर्द्धिः इत्यस्य तवल्कारः इत्यस्य च दर्शनम् सिद्धिर्वा भवति। एवं च लण् इति माहेश्वरसूत्रवर्तिनम् अकारम् अनुनासिकम् र प्रत्याहारस्थापकम् मन्वानौ इमौ विद्वांसौ उक्तरूपसाधनाय दृढपरिकरौ दृश्येते।

## अत्र नागेशस्य समीक्षा अभिप्रायश्च।

यद्यपि उपरिनिर्दिष्ट प्राचीनपक्ष इव अ+लृ=अल् इत्यस्य विधानस्य नवीनमतस्यापि कृते स्वीकार्यता वर्तते एव। अस्य विधानस्य साधने प्राचीनमतम् रप्रत्याहारसिद्धेरावश्यकतां मन्यते। तत्रैव नागेशः 'र' प्रत्याहारस्वीकारे गौरवदोषं दृष्ट्वा तदभावेऽपि उक्तभाष्याशयव्याख्याविशेषेण उक्तविधेयं साधयति। नागेशः लण् इति सूत्रस्थस्य अकारस्य अनुनासिकत्वस्वीकारे किमपि प्रमाणं न पश्यति। एवं च अप्रमाणितस्य अनुनासिकत्वस्य आधारेण साध्यम् रप्रत्याहारमपि सः न स्वीकरोति तदभावेऽपि तत्कार्यसिद्धिप्रदर्शनेन तस्य व्यर्थत्वात्। सः कथयति र प्रत्याहाराभावेऽपि उक्तभाष्याशयव्याख्याविशेषेणैव सर्वाभीष्टं सेत्स्यति इति।

नागेशानुसारेण लपरत्वं वक्ष्यामि इति भाष्यवचनम् उरण् रपरः इति सूत्रकारवचनस्य पूरकम् विद्यते। अस्यार्थः अणः रपरत्वेन सह लपरत्वमपि अहं कामये इति भाष्यानुमोदितः अर्थः विद्यते। एवं च उः इत्यस्य अर्थः ऋकारस्य लृकारस्य च इति स्वीकारेण सर्वा अपिसमस्याः दूरीभवन्ति। स्पष्टमिदम् एतादृशेन अर्थेन अस्माकं प्रस्तुतम् विधानम् सूपपद्यते। (अ+लृ=अल् इति रूपम् अ+ऋ=अर् इति रूपं च विधानम् इति भावः) भाष्यकारवचनस्य अस्मिन् अभिप्राये साधिते सति एकतः प्रस्तुतविधानस्य (अ+लृ=अल् इति रूपस्य) सिद्धिरपि भवति अन्यतश्च अस्य लक्ष्यस्य सिद्धथे प्राचीनपक्षस्वीकार-जन्यगौरवदोषान्मुक्तिश्च भवति नवीनमतानुयायिनाम्। ते च दोषाः एवमपि ज्ञातव्याः यथा–

प्रस्तुतसमस्यायाः लृकारस्य ल् कथं भवेत् इति रूपायाः समाधानार्थम् प्राचीनपक्षानुमोदितरप्रत्याहारस्वीकारे पाणिनिसूत्रस्य अतोल्रान्तस्य इत्येतद् वर्तिनः लकारस्य उच्चारणं व्यर्थ स्यात् तत्रापि रान्तस्य इति पदवर्तिरपदस्य 'र् ल् इत्येतदन्तस्य' इत्यर्थकरणम् सरलम्।

नागेशमते—लपरत्वं वक्ष्यामि इति भाष्यवचनम् 'उरण् रपरः' इत्यस्य पूरकोंऽशः तेन उः ऋकारस्य लृकारस्य च स्थाने विधीयमानः अण् स्थानेन्तरतमसूत्रसहयोगेन रः परः यस्य तथाच लः परः यस्य एवं भूत एव विधीयते। येन कृष्णर्धिः तवल्कारः इत्युभयमपि सिद्ध्यति। रप्रत्याहारस्थापनां विना।

एतेन स्पष्टं भवति यत् पाणिनिः यदि रप्रत्याहारसमर्थकः स्यात् तर्हि अतोल्रान्तस्य इति सूत्रे लकारोच्चारणं न कुर्यात्। र इत्यक्षरेणैव र् ल् इत्युभयोर्बोधात् सकलापि लक्ष्यसिद्धिः सरलतया भविष्यति। एवं स्थितौ सत्यामपि पाणिनिना कृतम् अस्मिन् सूत्रे लकारोच्चारणम् 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते पाणिनीयाः' इति वैयाकरणसिद्धान्तविरुद्धम् इति मत्वा नागेशः रप्रत्याहारसत्ताम् खण्डयति।

एवमेव यण्घटितेषु अष्टाध्यायीसूत्रेषु यण् इत्यस्य स्थाने य इति प्रत्याहारसिद्धिः संभवति। प्राचीनमतानुसारेण लण् सूत्रस्थाकारस्य अनुनासिकत्वस्वीकारेण यण्घटितसकलसूत्रेषु अर्धार्धमात्रालाघवप्राप्ति-रूपानुकूल्यसिद्धिश्च आपादिता भवति। नवीनमते नास्ति इयमापत्तिः गौरवदोषान्मुक्तिश्च स्पष्टैव। र इति प्रत्याहारस्वीकार्यतायाम् संभावितविविधदोषचर्चा नागेशेन लघुशब्देन्दुशेखरे कृता वर्तते। अतः सा चर्चा जिज्ञासुभिः तत्रैव द्रष्टव्या इत्यस्ति मम परामर्शः। उपलक्षणरूपेण तस्याः चर्चायाः द्वित्राः विन्दवः उपरि मया उपन्यस्ताः।

एवं च मदीयः व्यक्तिगतः अभिप्रायः अयमेव वर्तते यत् प्राचीनपक्ष-सम्मतरप्रत्याहारस्वीकृतिजन्यगौरवदोषस्वीकारापेक्षया नवीनमतस्य ऋजुपद्धत्या प्रस्तुतम् आवश्यकं ज्ञानम् (लपरत्वं वक्ष्यामि इत्यस्य व्याख्यारूपम) निर्दोषम्। एवमेव लघुशब्देन्दुशेखरपंक्तिषु सुस्थापिताः पंक्तयः नवीनमतस्य प्राबल्यसाधिकाः सन्ति। एवं च रप्रत्याहारखण्डनस्य साधकः नागेशीयवाङ्मयांशः संस्कृतव्याकरणशास्त्रवाङ्मये उल्लेखनीयः वर्तते—इत्यनयैव बुद्ध्या मया इयं चर्चा अत्र उपन्यस्ता वर्तते। तस्य सारवत्ता

असारवत्ता च समीक्षकैः स्वयमेव निर्णेतव्या इति।

**गव्यम् गव्यूतिः अनयोः पदयोः प्रक्रियासिद्धौ काठिन्यस्य समाधानं नागेशानुसारेण प्रशस्यं वर्तते।**

समस्या—पर्जन्यवल्लक्षणप्रवृत्तिः इति न्यायेन क्वचित् प्रयोगे संबद्धसूत्रार्थगतस्य आवश्यकस्य निमित्तरूपस्य तथ्यस्य सत्त्वात् अनभीष्टया सूत्रप्रवृत्त्या अनभीष्टप्रयोगापत्तिरूपः दोषः 'गव्यम्' 'गव्यूतिः' इति शब्दसाधनेऽपि आपतति। तत्परिहारायकृता दीक्षितादिप्राचीनवैयाकरणानां पद्धतिः गौरवदोषाक्रान्ता च इति संसाध्य अस्मिन् प्रसंगे नागेशः स्वीयम् निर्दोषम् अत एव प्रशस्यं मतं स्थापयति।

## वस्तुस्थितिः।

गोर्विकारः इत्यर्थे गोपयसोर्यत् इति सूत्रेण् यत्=य प्रत्यये जाते अथ च क्रोशद्वयवाचि गव्यूतिशब्दसाधने वान्तोयिप्रत्यये इत्यनेन ओकारस्य अवादेशे जाते एवमेव वैदिकगव्यूतिशब्दसाधनप्रक्रियायाम् गोर्यूतौ छन्दस्युपंसख्यानम् इति शास्त्रेण अवादेशे जाते 'ग् अव् यम्' तथा च 'ग् अव् यूतिः' इति स्थितौ लोपः शाकल्यस्य इति सूत्रार्थज्ञानवतः शिष्यस्य मनसि एतत्सूत्र विनियोगसाधकसामग्रीसत्त्वात् सूत्रप्रवृत्तौ वैकल्पिकस्य अनिष्टप्रयोगस्य आपत्तिः स्पष्टैव। एतत् सूत्रं तु (लोपः शाकल्यस्येति सूत्रं तु) हर इह इत्यादिसाधु प्रयोगार्थे सर्वथा आवश्यकम् इति तु निर्विवादम्। एवं च पर्जन्यवल्लक्षण प्रवृत्तिरिति न्यायेन परार्थे अत्यावश्यकस्य अस्य सूत्रस्य अत्र प्रवृत्त्या 'गयूतिः' 'ग यम्' इत्यनिष्टप्रयोगसिद्धिरूपा आपत्तिः स्पष्टैव। एवं च अस्या आपत्तेः निरासाय शिष्यमनसः लोपः शाकल्यस्येति सूत्रप्रवृतेः दूरीकरणार्थम् च उपायः कर्तव्यः एव। अस्यां स्थितौ दीक्षितादिप्राचीनवैयाकरणानामुपायस्य समीक्षांकृत्वा अथ च तत्र स्थितदोषम् प्रकाश्य नागेशेन अस्मिन् प्रसंगे सर्वथा दोषशून्यसमाधानम् प्रदत्तं वर्तते। येन संस्कृतव्याकरणशास्त्रीयप्रक्रियासाधक-सूत्रविषयिण्याः अश्रद्धायाः अवसरोऽपि दूरीभवति। अन्यथा कश्चित् शिष्यः अन्ये च समीक्षकाः एतदेव कथयिष्यन्ति यत् एतादृक् एव संस्कृत-व्याकरणशास्त्रम् यत् एकतः साधुशब्दं व्याख्याति अपरतश्च असाधुशब्दसिद्धिं दूरीकर्तुं न समर्थम्। अयमेव विचारः शिष्यस्य समीक्षकाणां च मनसि एतच्छास्त्रविषये अश्रद्धां निष्पादयति।

## अत्र दीक्षितमतम्—प्रश्लेषवादः

श्रीभट्टोजिदीक्षितः गो+य तथा गो यूति इति स्थितौ वान्तोयि प्रत्यये इति सूत्रेण अध्वपरिमाणे च एवम् गोर्यूतौ छन्दस्युपसंख्यानम् इति वार्तिकाभ्यां च अवादेशे 'ग् अव् यम्' 'ग अव् यूतिः' इति स्थितिम् स्वीकरोति। अस्यां स्थितौ उभयत्रापि प्रयोगे वलोपस्य संप्राप्तिरूपम् संकटम् लोपः शाकल्यस्य इति सूत्रवशात् आयात्येव। तस्य दूरीकरणार्थम् दीक्षितमहोदयः वान्तो यि प्रत्यये इति सूत्रस्थवकारात् प्राक् अन्यस्य 'व्' इत्यक्षरस्य प्रश्लेषं स्वीकरोति। एवमेव ग् अव् यूतिः इत्यत्र उक्तस्य वलोपरूपसंकटस्य परिहाराय गोर्यूतौ छन्दस्युपसंख्यानम् इति वार्तिके छकारात् प्राक् वकारप्रश्लेषं तथा च 'वान्तो यि' इति सूत्रे वकारात् प्राक् अन्यवकारस्य प्रश्लेषं च कृत्वा उभयत्रापि वकारस्य 'लोपो व्योर्वलि' इति सूत्रेण लोपे जाते प्रश्लेषस्वीकृतिरूपविधिना अयमभिप्रायः निष्कृष्टो भवति यत् वान्तोयि० तथा गोर्यूतौ० छन्दस्युपसंख्यानम् इत्येभिः कृताः वान्ता आदेशाः वान्ता एव तिष्ठेयुः लोपादिना रूपान्तरेण सह प्रयोगयोग्याः न सन्ति। अध्वपरिमाणे चैतत् वार्तिकम् वान्तो यि प्रत्यये इत्यस्य पूरकमितिकृत्वा तत्कृतः अपि अवादेशः वान्तो यि इत्यत्र स्थितस्य वकारस्य प्रश्लेषवशात् वान्तः एव तिष्ठेत् इत्यपि अभिप्रायः अत्र स्मर्तव्यः एवमेव प्रश्लेषमहिम्ना प्राप्तोऽपि वलोपः लोपः शाकल्यस्य इति सूत्रेण न भवति येन सर्वं संकटम् दूरीभवति।

## अत्र विचारे नागेशस्य विप्रतिपत्तिः।

नागेशस्य अभिप्रायः इत्थं वर्तते। नागेशदृष्ट्या दीक्षितोक्त प्रश्लेषकरणस्य किमपि प्रमाणं न दृश्यते। प्रामाणिकस्य आचार्यस्य समर्थनं विना प्रश्लेषाधारितमिदं समाधानम् निश्चिन्तमनसा स्वीकार्यं न भवति। अथ च एतस्मिन् मते क्लिष्टकल्पनापि दोषायैव।

अत्र नागेशयुक्तिः—यदा वैदिकगव्यूतिशब्दस्य साधनं क्रियते तदा इदं वक्तुम् शक्यते। वैदिकशब्देषु ईदृशम् संकटम् कथमपि न संभवति। यतः वैदिकशब्दानाम् वैदिकेषु परंपरासिद्धम् स्वरूपम् सूत्रान्वाख्यानेन व्याकरणरीत्या संभवति चेत् तर्हि अतीव सुन्दरम् परंतु यदि तस्य वैदिकशब्दस्य अनभीष्टम् विकृतं रूपम् कस्यचित् सूत्रस्य लक्षणसमन्वयवशात् आपद्यते चेत् तर्हि वैदिकशब्दस्य स्वरूपरक्षारूपमहत्त्वपूर्णकार्यतुलनायाम् उक्तसंकटकारकसूत्र-

प्रवृत्तेरभाव एव स्वीक्रियते। न तु शिष्टवैदिकपरिगृहीतविकृतशब्दसाधनम् तदुपायाश्च अत्र चिन्तनीयाः। ते च वैदिकशब्दाः स्वरतः वर्णतः सामस्त्येन च कथमपि परिवर्तनयोग्याः न विद्यन्ते। इति कृत्वैव संकटाधायक सूत्राप्रवृत्तिवशादेव वैदिकगव्यूतिशब्दः सुसाध्यः भवति। तदर्थे दीक्षितोक्तः क्लिष्टः आचार्यान्तरासमर्थितः पन्थाः व्यर्थः एव।

एवमेव संज्ञाशब्दानामपि स्वीयं विशिष्टं महत्त्वम् तेषां शिष्टस्वीकृतस्वरूपरक्षा अतिमहत्त्वपूर्णा। अनया दृष्ट्या यदि किंचित् (किमपि) सूत्रम् स्वलक्षणसत्तावशात् प्रयुक्तं सत् तस्य शिष्टपरंपरास्वीकृतस्य शब्दस्य विकृतौ प्रवर्तते वा प्रवर्तयितुमुद्युक्तं वा भवति तदा तस्य विरोधः (सूत्रप्रवृत्तेर्विरोधः) एव तस्य शब्दस्य स्वरूपरक्षारूपमहत्त्वपूर्णकार्यदृष्टया अभ्युपेयः भवति। एवं च वैदिकशब्दानां गव्यूतिप्रभृतीनाम् लौकिकगव्यूत्यादीनां शब्दानां प्रसंगे पूर्वोक्तसूत्रप्रवृत्तिरूपस्य संकटस्य तत्तच्छब्दस्वरूपरक्षारूप लक्ष्यस्य महत्त्वदृष्ट्या अनेन व्याख्यानविशेषेण समाधानं संभवति। तदर्थे पूर्वोक्ता क्लिष्टकल्पना अप्रामाणिककल्पना च त्याज्या एव। अनया दृष्ट्या प्राप्तायाः व्याकरणशास्त्रीयसूत्रप्रवृत्तेः विरोधः एव श्रेयस्करः न दोषावहः स विरोधः इत्येव व्याख्यानम् ज्यायः इति नागेशाभिप्रायः अस्ति अस्मिन् प्रसंगे। अत एव च रघुनाथ इति शब्दे व्याकरणशास्त्रनियमानुसारेण प्राप्तं णत्वम् तस्य शब्दस्य स्वरूपरक्षारूपमहत्तरकार्यपेक्षया तुच्छत्वात् खण्डितं भवति। वस्तुतः संज्ञाशब्दाः तेषाम् शिष्टस्वीकृतप्रचलितस्वरूपे एव स्वीकृता भवन्ति। तद्विरोधे प्राप्तव्याकरणसूत्रनियमानां तिरस्कारः समीचीन एव। एवमेव वैदिकशब्दानामपि स्वरूपरक्षारूपमहत्त्वशालिकार्यदृष्टया च तत्र तत्र प्राप्तव्याकरणनियमोल्लंघनम् अपि अत्यन्तं समीचीनम् अपेक्षितं च इत्यस्ति नागेशीया व्यवस्था अस्मिन् प्रसंगे। इयं व्यवस्था नागेशस्य व्यावहारिकदृष्टेः परिचायिका। श्रीदीक्षितस्य उपायः तर्कप्रधानः तद्विरोधे नागेशीया व्यवस्था सरणिर्वा परंपरारक्षायाम् आधारिता बुद्धिग्राह्यव्यावहाररिकतथ्यसंपन्ना च वर्तते इत्यलमति प्रसंगेन।

## प्रत्यभिवादेऽशूद्रे

धर्मशास्त्रानुप्राणितस्य कस्यचित् वैयाकरणतथ्यस्य अपेक्षितमपि विशदं व्याख्यानम् नागेशतः पूर्वम् प्रायः सर्वैरपि निबन्धकारैः वैयाकरणैः उपेक्षितम् दृष्ट्वा नागेशः इमां त्रुटिं दूरीकरोति।

प्रत्यभिवादेऽशूद्रे ८-२-८५ इति सूत्रघटकः प्रत्यभिवादशब्दः कस्मिन्नर्थे

प्रयुक्तः सूत्रकारेण इति स्वयुगविभूतिभिः कैश्चिदपि वैयाकरणैः दीक्षितसदृशप्रतिभासंमन्नैरपि वैयाकरणैः न प्रदर्शितम्। अयं शब्दः धर्मशास्त्रीयस्वभावकस्य अर्थस्य वाचकः इति तथ्यम्। अत एव अस्माकं वैयाकरणानां कृते अस्यार्थः विशदरूपेण ज्ञातव्य एव। तदनुसारेण प्रणामादिविनयपूर्णाभिः क्रियाभिः गुरुप्रभृतिषु प्रतिक्रिया उत्पद्यते। तस्याः प्रतिक्रियायाः फलम् एतदेव भवति यत् प्रतिक्रियोत्पत्त्यनन्तरम् ते गुरुप्रभृतयः मान्याः प्रणामकारकान् स्वाशीर्भिः समृद्धान् कर्तुम् कांश्चित् शब्दान् उच्चारयन्ति तदा ते शब्दाः प्रत्यभिवादशब्दस्य वाच्यार्थाः भवन्ति अर्थात् ते शब्दा एव प्रत्यभिवादपदार्थः इति निष्कर्षः। एवं च आशीर्वादेच्छया आशीर्वचनरूपम् तदतिरिक्तं वा यत् किंचित् गुरुप्रभृतीनां कथनम् तदेव प्रत्यभिवादः कथ्यते। **अत्र गुर्वादीनां वचनम् आशीर्वादस्वभावकम् तदतिरिक्तार्थस्वभावकं वा भवेत् उभयविधमपि गुर्वादिकथनम् प्रत्यभिवाद एव।** उभयत्र प्रत्येकमपि कथनम् अर्थात् रेखांकितयोः द्वयोर्मध्ये एकैकमपि कथनम् प्रत्यभिवाद इति विवेकः। नागेशः दृढतापूर्वकम् कथयति यत् अस्यां स्थितौ गुर्वादीनां वाक्यम् न केवलम् आशीर्वचनात्मकमेव अपितु तदतिरिक्तार्थस्वभावकम् अपि प्रत्यभिवादः कथ्यते न तु आशीर्वचनरूपमात्रमेव गुर्वादिवचनं प्रत्यभिवाद इति पुनः पुनः स्मर्तव्यम्।

अस्यां स्थितौ गुर्वादिभिः प्रयुक्तम् आशीर्वचनमात्रमेव प्रत्यभिवादार्थो न भवेत् एतदर्थम् नागेशेन विविधाः युक्तयः प्रस्तुताः सन्ति। नागेशः कथयति सूत्रकारः अशूद्रे इति प्रतिषेधेन प्रत्यभिवादवाक्यस्थटेः प्लुतत्त्वस्य शूद्रविषये निषेधं करोति। निषेधस्तु प्राप्तौ सत्यामेव भवति। अप्राप्तस्य निषेधो न भवति। इति तु व्यवहारेऽपि दृश्यते। यदि प्रत्यभिवादशब्दस्य अर्थः आशीर्वचनमात्रः अभिमतो भवेत् तर्हि शूद्रविषये स्मृतिप्राप्तस्य आशीर्वचननिषेधस्य सत्त्वात् (धर्मशास्त्रग्रन्थेषु) तद्विषयकप्लुतत्त्वप्राप्तिरेव न भविष्यति। कुतः तत्प्राप्तेर्निषेधः। सूत्रकारः शूद्रविषये आशीर्वचनस्य निषेधं न जानाति इति कल्पनापेक्षया सूत्रकारः प्रत्यभिवादशब्दस्य नागेशोक्तमेव अर्थम् आशीर्वचनरूपम् तदतिरिक्तं च गुर्वादीनां वचनम् प्रत्यभिवादः इतिरूपं स्वीकरोति। इति कल्पना ज्यायसी।

अत एव तदतिरिक्तार्थवत् 'कुशल्यसि तुभजक' इति भाष्योदाहरणं प्रत्यभिवादरूपेण प्रस्तूय प्रत्यभिवादत्वात्प्राप्तं तत्र प्लुतत्वनिषेधं साधयति

भाष्यकारः तदनुयायी नागेशश्च। अस्मिन् उदाहरणे भाष्यकारः कुशल्यसि इत्यादि वाक्यस्य टेः शूद्रविषयत्वात् प्लुतत्वनिषेधं करोति। (अशूद्रे इत्यंशेन) निषेधश्च उक्तरीत्या प्राप्तस्यैव भवति। अतः अत्र प्लुतत्वप्राप्तिः भाष्यकार दृष्ट्या अस्त्येव। साच प्राप्तिः तदैव संगच्छते यदा प्रत्यभिवादशब्दस्य अर्थः आशीर्वचनेन सह आशीर्वचनरहितः अपि स्वीक्रियेत। उभयमपि अर्थजातम् (आशीर्वचनरूपम् तदतिरिक्तं वा) अभिवादनश्रवणोत्तरम् गुर्वादीनां मुखात् निःसरति इति तु स्पष्टमेव। आशीर्वचनातिरिक्तः प्रत्यभिवादार्थस्तु गुरुणा तु भजकं प्रति सहानुभूतिप्रदर्शनायैव न तु आशिषे इति। यद्येतत्सूत्रस्थ-प्रत्यभिवादशब्दार्थः आशीर्वचनमात्ररूपः एव गृह्येत तर्हि तद्रहिते कुशल्यसि तु भजक इति भाष्योदाहरणे सहानुभूतिवशात् उच्चारिते प्लुतत्वप्राप्तिर्न भविष्यति। अत्रत्यस्य अर्थस्य आशीर्वचनाभावात्। इत्थं च प्राप्तिं बिना भाष्यकारः अशूद्रे इति निषेधस्य संगतिं कर्तुं क्षमो न भवेत्। एवं समीक्षया भाष्यकारेण अत्र प्लुतत्वप्राप्तिः तन्निषेधघोषणया प्रत्यभिवादार्थस्य आशीर्वचनातिरिक्तत्वम् अपि सर्वथा स्वीकार्यमेव भवति। अस्मिन् प्रसंगे नागेशः कतिपयतथ्यानि स्फुटीकरोति। प्रत्यभिवादात् (गुर्वादिकृतात्) प्राक् अवश्यकर्तव्यस्य अभिवादनपदार्थस्य सः निरूपणमपि करोति यत् अन्यैः वैयाकरणैः न कृतम्।

विनयसूचकमुद्राद्यात्मकनमस्कारपूर्वकम् नमस्कार्यात् आशीर्वचनस्य ख्यापनम् एव अभिवादनपदार्थः। अत एव अभिवादये इत्यस्य अर्थोऽपि अहं नमस्कारपूर्वकम् नमस्कार्यात् भवतः आशिषं भाषयामि। इत्येवं रूपः निष्कृष्टो भवति।

आयुष्मानेधि देवदत्त इति प्रत्यभिवादवाक्ये आयुष्मत्त्वरूपः अर्थः विधेयः न तु स अर्थः उद्देश्यकोटौ तिष्ठति। अत एव अत्र संबोधनार्थत्वम् नास्ति फलतः संबोधनविभक्तिरपि नास्ति आयुष्मच्छब्दे। प्रत्युत अत्र शुद्धा प्रथमा विभक्तिरेव विद्यते। संबोधने चेति सूत्रव्याख्याने नागेशः सिद्धपदार्थस्य अभिमुखीभावम् एव संबोधनार्थं घोषितवान्। तदनुसारेण अस्मिन् वाक्ये वाच्यः आयुष्मत्त्वरूपः अर्थः वक्तुः प्रभावात् उत्पद्यते अत एव वक्ता, आयुष्मत्त्वरूपमर्थम् तद्वाचकशब्दप्रयोगकाले सिद्धं न पश्यति। स अर्थस्तु वक्तुः शब्दप्रयोगोत्तरम् तत्प्रभावेण अनन्तरम् उत्पद्यते। अत एव अत्र आयुष्मत्त्वस्य सिद्धत्वाभावात् तस्य अभिमुखीभावचर्चापि दूरे तिष्ठति। एवं च

नागेशोक्तसंबोधनार्थस्य अभावात् संबोधनविभक्तिर्न प्रत्युत प्रातिपदिकार्थ बोधनात् प्रथमैव।

**प्रत्यभिवादवाक्येषु स्मृतिप्राप्तशर्मवर्मादिशब्दानां नियतत्वं नास्ति।**

शर्मान्तं नाम ब्राह्मणस्य इति स्मृतिवचनात् ब्राह्मणानां नामान्ते एषां शर्मादिशब्दानां व्यवस्थापनात् एते शर्मादयः शब्दा अपि ब्राह्मणादीनामावयवाः सन्ति फलतः तेषामेव शर्मवर्मादिशब्दानां टेः प्लुतत्वं भवति अर्थात् 'शर्मा3न्' 'वर्मा3न्' इत्येवंप्रयोगाः संपद्यन्ते। अस्य कथनस्य नेदं तात्पर्यम् यत् प्रत्यभिवाद वाक्ये सर्वत्र शर्मादिशब्दानां प्रयोगः नियतः इति यतः एचोऽप्रगृह्यस्यानुनासिकः इति सूत्रेण प्रत्यभिवादप्रसंगे एचः प्लुतत्वं विधीयते। यच्च विधानम् प्रत्यभिवादने शर्मादिशब्दानां प्रयोगस्य नियतत्वविरोधे एव संगच्छते। अत्र विषये प्रमाणरूपेण भाष्यकाराशयं प्रस्तौति नागेशः तद्यथा अत्र सूत्रे भाष्यकारेण अग्निभूते इति शब्दं विश्लेष्य अग्निभूता 3 इइत्युदाहरणम् प्रस्तुतम्। येन स्पष्टं भवति प्रत्यभिवादवाक्यस्थितनामभिः सह शर्मादिशब्दानां प्रयोगः नियतकोटौ अवश्यकर्तव्यस्थितौ न तिष्ठति एवं च वैकल्पिकः अस्ति शर्मादिशब्दानां प्रयोगः अत्र प्रकरणे प्रत्यभिवादवाक्ये भाष्यसम्मतः।

## दूराद्धूते च

अस्मिन् सूत्रे दूरशब्देन कः पदार्थः अभिप्रेतः इति दीक्षितादिभिः स्वयुगस्य प्रतिनिधिभूतैर्वैयाकरणैः न स्पष्टीकृतम् अत एव अस्यार्थस्य विशदीकरणम् वैयाकरणत्वेन नागेशः स्वकर्तव्यं मत्वा इत्थं विवृणोति इममर्थम्। तद्यथा नागेशदृष्ट्या अयं सापेक्षशब्दः (दूरशब्दः) विद्यते अथचायं दूरशब्दः देशविशेषवाची च अस्ति। यत्र स्थितः वाक्यार्थविषयीभूत संबोध्यमानपुरुषः वक्तुः सामान्यप्रयत्नोच्चारितं शब्दं श्रोतुम् अक्षमः। अथ च स पुरुषः वक्तुः अधिकतरप्रयत्नोच्चारितशब्दमपेक्षते। तं शब्दं शृणोति च। एतादृशः देशः संबोधनविषये तथा च विशिष्टार्थज्ञानविषयेऽपि क्रियमाण-व्यवहारस्य कर्तुः (श्रोतुः वक्तुश्च) अपेक्षयैव ईदृशः पूर्वोक्तः (अधिक प्रयत्नोच्चारितशब्दश्रवणापेक्षः) दूरपदार्थः कथ्यते। एतादृशस्य सूत्रस्थदूरशब्दस्य वाच्यार्थव्यवस्थाकरणेन नागेशः अभिनन्दनीयः वर्तते। अस्मिन् सूत्रे द्वितीयं पदं 'हूते' इत्यस्ति। तदर्थः आवाहनम् अयं शब्दः उपलक्षणाय इति मत्वा सः शब्दः दूरावबोधनम् कस्यचित् वक्तव्यार्थस्य ज्ञापनम् इत्यर्थद्वयं लक्षयति इति स्वीकरोति नागेशः।

अस्य आवाहनस्य ज्ञापनस्य च विषये एकम् ईदृशं तथ्यं प्रकाशितं यत् अद्यावधि न केनापि नागोशातिरिक्तेन वैयाकरणेन प्रकाशितं वर्तते। संबोधनार्थस्य सिद्धस्य कस्यचित् वस्तुनः अभिमुखीभावः सोऽपि किंचिज्ज्ञापन फलकः सिद्धान्तितः नागेशेन। अत्रापि आवाहनरूपेण अर्थेन उपलक्षणीभूतेन प्रतीयमानः बोधनव्यापारः अपि कथंचित् उक्तनागेशोक्तसंबोधनार्थसादृश्य-वशात् संबोधनविभक्तिं लभते। स च गौणः व्यवहारः अत एव नागेशोक्तमुख्य-संबोधनार्थत्वाभावेऽपि अंशतः सादृश्यवशादत्र सक्तून्पिब देवदत्त इति वाक्ये देवदत्तेति शब्दस्य कृते संबोधनमूलकविभक्तिलुक्। वस्तुतः अस्मिन् उदाहरणे विधेयता प्लुते सिद्ध्यति न तु संबोधनार्थे। अत एव मुख्यः विवक्षितः देवदत्तोत्तरः प्लुत एव तथापि बोधनव्यापाररूपस्य संबोधानार्थैकदेशस्य सत्त्वात्गौणतया अथवा कथंचित् संबोधनार्थविषयकत्वात् अत्र गौणतयैव स्यात् परंतु संबोधनार्थत्वं विद्यते एव अतः सुलुक् इति। एवं च यत्र शुद्धं ज्ञापनं बोधनं वा उपलक्षितं भवति तत्र अनेन सूत्रेण प्लुतत्वे जातेऽपि संबोधनविभक्तेरभावः वस्तुतः वर्तते एव। यथा वात्सीबन्धुः इति भाष्यप्रयोगे केवलबोधनार्थप्रधानत्वेऽपि गुंरोरनृत इत्यादिसूत्रेण प्लुते जातेऽपि संबोधनविभक्तेरभावः। तत्र केवलं शुद्धा प्रथमा विभक्तिरेव भाष्यकारेण स्वीकृता वर्तते। अत एव सक्तून्पिब देवदत्त इति देवदत्तविषयक सक्तुपानज्ञापनरूपे दूराद्धूते अर्थे विद्यमानेऽपि केवलं ज्ञापनरूपार्थमाश्रित्य संबोधनविभक्तिः भवति। देवदत्तशब्दोत्तरम् प्लुतस्तु 'दूरादधूते च' इति सूत्रेण जातः वर्तते एव। एवं च नागेशेन दूरशब्दस्य अर्थः हूतशब्दस्य च अर्थः ज्ञापनरूपसामान्यार्थस्वभावकः अत एव तत्र निरुक्तसंबोधनार्थत्वाभावात् संबोधनविभक्तिःप्रामुख्येन न जायते गौणतया शिष्टस्वीकृतप्रयोगे सा जायते इति सिद्धान्तितम्। ईदृशानि तथ्यानि नागेशेन प्रकाशितानि सन्ति। तस्य अयमाशयो विद्यते। यत्र वस्तुतः शिष्टैः संबोधनविभक्तिः तत्रापि ज्ञापनरूपः अर्थः संबोधनार्थस्य घटकतया वर्तते। एवं च केवलज्ञापनप्रधाने वाक्ये सक्तून्पिब देवदत्त इत्यादिरूपे वाक्येऽपि ज्ञापनरूपः अर्थः समाविष्टः विद्यते। अत एव उभयोः साम्यवशात् संबोधनार्थस्थले संबोधनविभक्तिवशात् केवलं ज्ञापनप्रधाने लक्ष्ये सादृश्यवशात् प्राप्तापि संबोधनविभक्तिः केवलं ज्ञापनार्थप्रधानस्थले मुख्यतया न भवति।

सक्तून्पिब देवदत्त इत्यादौ केवलं ज्ञापनार्थस्य सिद्धत्वात्। परंतु दूराद्धूतत्ववशात् (आरंभे एव दर्शितात्) हेतोः वाक्यस्य टेः प्लुतत्वं न

भवत्येव । अथ चात्र शिष्टस्वीकृतत्वात् संबोधनत्वम् विभक्तिलुक् च सिद्ध्यति येन सक्तून्पिब देवदत्त इत्यत्र शिष्टाभिमतम् आंशिकसंबोधनार्थत्वेऽपि सुलुक्कार्यम् अस्य वाक्यस्य संबोधनविभक्त्यन्तत्वं च स्वीकर्तुं शक्यते ।

## योगविभागविशेषे नागेशः

टिड्ढाणञ् इत्यादिसूत्रोत्तरमेव यञश्च इति सूत्रस्यपाठः अष्टाध्यायीसूत्रस्थापनकाले पाणिनेरिष्टः अत एव टिड्ढाणञ इत्युत्तरमेव यञश्च इति सूत्रं तेन प्रतिष्ठापितं वर्तते । सिद्धान्तकौमुदीकारो दीक्षितः इमे सूत्रे पृथक् पृथक् कृत्वा एव संवद्धानि सर्वाणि लक्ष्याणि साधयति । परंतु ईदृशस्य अनयोः सूत्रयोः योगविभागस्य फलविशेषः कः ? इति तेन न व्याख्यातं प्रकाशितं वा । योगविभागजन्यफलविशेषस्य ज्ञानं बिना अस्माकं बुद्धिः इदमेव स्वीकरोति यत् इमे द्वे अपि सूत्रे एकसूत्रतायां निबन्धनीये । पूर्वसूत्रेण टिड्ढाणञ् इत्यनेन यथा स्त्रीत्वे अर्थे ङीप् प्रत्ययो भवति तथैव उत्तरसूत्रेण यञश्च इत्यनेनापि तस्मिन्नेवार्थे ङीप् (एव) भवति । एवमुभयत्र विषयसामान्यवशात् उभयोः एकसूत्रतास्वीकारे स्पष्टमेव लाघवं वर्तते तथापि एतल्लाघवम् उपेक्ष्य सिद्धान्तकौमुदीकारः सूत्रभेदं करोति अतः तस्य कार्यम्ः गौरवदोषग्रस्तमिति आक्षेपः संभवति तस्मिन् ।

लाघवे सत्यपि तदुपेक्षया गौरवपूर्णरीतेः स्वीकारस्य समाधानं सर्वप्रथमं नागेशेनैव प्रदत्तम् अथ च तेन अस्य दीक्षितकृतस्य योगविभागस्य साफल्यमपि उद्घोषितं वर्तते। अस्य योगविभागस्य पृष्ठभूमौ किमुद्देश्यमिति च नागेशेनैव सूद्घाटितं वर्तते। योगविभागस्य फलविशेषेण सहैव (गार्ग्यायणी गार्गी चेतिरूपद्वयसिद्धिम् तयासहैव) टिदादीनामपि 'प्राचां ष्फ तद्धित' इत्यत्र अनुवृत्त्या संभावितानिष्टप्रयोगसिद्धिचर्चापि नागेशेन कृता। वक्ष्यमाणनागेशीय-तथ्यस्य प्रकाशनं विना तज्ज्ञानं विना (योगविभागफलज्ञानं विना अस्माकं बुद्धिः) सि०कौ०कारस्य सम्मते योगविभागे न तुष्यति। इति परिलक्ष्यैव अस्मद्बुद्धिसमाधानाय नागेशेन बहु सारवच्च उक्त्वा दीक्षितमहोदयस्य कृते यत् कार्यम् अत्यावश्यकम् स्वयमेव तत् कृत्वा वैयाकरणसिद्धान्तेषु वैशद्यं साधितम्। नागेशस्य सरणिः इत्थं वर्तते।

गर्गस्य गोत्रापत्यं स्त्री इति विग्रहे गर्गशब्दात् यञि वृद्धौ गार्ग्यशब्दात् यञश्च इति सूत्रेण ङीपि हलस्तद्धितस्य इति सूत्रं प्रबाध्य 'प्राचां ष्फ तद्धितः'

इत्यनेन तद्धितसंज्ञके ष्फप्रत्यये जाते शेषप्रक्रियानन्तरम् गार्ग्यायणी इति सिद्ध्यति। ष्फप्रत्ययस्य वैकल्पिकत्वात् तदभावे हलस्तद्धितस्य इति यलोपे जाते गार्गी इत्यपि तस्मिन्नेवार्थे सिद्ध्यति। इत्थं रूपद्वयसिद्धिर्जायते। यद्यत्र योगविभागो न स्वीक्रियते तर्हि प्राचां ष्फ तद्धितः इत्यत्र यञः अनुवृत्त्या सहैव टिदादीनामपि अनुवृत्तिः प्रसज्येत येन अनेकेषाम् अनिष्टप्रयोगाणां सिद्धिरूपा आपत्तिः समुदेति। एवं च अनभीष्टटिदाद्यनुवृत्तिप्रतिबन्धाय दीक्षितसम्मतः योगविभागः कर्तव्यः एव। तेन यञश्च इति विभक्तसूत्रात् यञः एव अनुवृत्तिः न तु टिदादीनामनुवृत्तिः प्राचां ष्फ तद्धितः इत्यत्र भवति। फलतः उक्तानिष्टप्रयोगापतिः स्वयमेव दूरीभवति। एतल्लाभदृष्ट्या दीक्षितस्य गौरवदोषग्रस्तवत् प्रतीयमानं मतम् निर्दोषं सिद्ध्यति।

यद्यपि अनयैव रीत्या तत्त्वबोधिनीकारोऽपि उक्तं योगविभागं समर्थयते परंतु सः नागेशोत्तरवर्ती अतः अस्य योगविभागस्य प्रयोजनकथने नागेश एव प्रशंसाधिकारी नान्यः तत्वबोधिनीकारस्तु नागेंशीयम् अभिप्रायं बुद्ध्वा एव एतल्लिखितवान् इत्यपि संभाव्यते। परंतु दीक्षितमहोदयः योगविभागं स्वीकृत्यापि तस्य प्रयोजनविशेषम् फलविशेषं वा (अनिष्ट प्रयोगापत्तिनिरासरूपम्) न प्रकाशितवान्—अयमेव दोषः दीक्षितस्य इति वक्तुं शक्यते। अनया दृष्ट्या नागेशीयम् एतत् वर्णनम् संस्कृतव्याकरणशास्त्रीय प्रक्रियांशे महत्त्वशालि इत्यस्माभिर्विवेचितम्।

## एकवचनं संबुद्धिः

अस्य स्थाने सुः संबुद्धिः इति न्यासकल्पनायाम् नागेशस्य विशिष्टः विचारः लभ्यते। पाणिनिसूत्राणां सफलता द्विविधा वर्तते। प्रथमा च दृष्टप्रयोजना अर्थात् दृष्टं प्रयोजनं लक्ष्यं यस्याः सा दृष्टप्रयोजना भवति। यथा इकोयणचि इति अस्य सूत्रस्य प्रयोजनम् सुध्युपास्यः मध्वरिः इत्यादिप्रयोगाणां प्रक्रियात्मकसहयोगपूर्वकम् तेषां साधुत्वप्रदर्शनमेव। एवम् अस्य इकोयणचि इति सूत्रस्य दृश्यमाना सफलता अस्माभिः सर्वैरपि वैयाकरणैः अनुभूयते एव। अत एव इकोयणचि इति सूत्रं दृष्टप्रयोजनं भवति। परंतु कस्यचित् सूत्रस्य अनुसरणेन न कोऽपि विशेषः प्रक्रियाविशेषसिद्धिर्वा तथापि तेषामपि पठनम् स्वाध्यायकाले (पुण्यजनकत्वेन) आवश्यकं मन्यते नागेशः। तपोरूपस्य प्रयोजनस्य सत्त्वात् तान्यपि सूत्राणि (येषां सत्तया न कोऽपि विशेषः

प्रक्रियायाम्) अदृष्टप्रयोजनानि कथ्यन्ते।

प्रकृते एकवचनं संबुद्धिः इति सूत्रम् अदृष्टप्रयोजनतया कारणेन परिवर्तनीयम् नास्ति परंतु तत्र दृष्टप्रयोजनत्वं स्वीकृत्यापि अत्रेदं वक्तुं शक्यम् यत् सूत्रेऽस्मिन् एकवचनम् इति महति शब्दे कः विशेषः? तत्स्थाने सुः संबुद्धिः इति न्यस्यते चेत् तर्हि महल्लाघवम्? नागेशस्य इयं कोटिः तस्मात् पूर्वम् न केनापि वैयाकरणेन कृता वर्तते इति अस्ति महत्त्वं नागेशस्य। एतस्मिन् न्यासे 'सुः संबुद्धिः' इति रूपे स्वीकृते सति नागेशदृष्ट्या एका आपत्तिः वर्तते यां च नागेशः स्वयमेव उद्भावितवान् अथ च तामापत्तिं स्वयमेव निरस्तवान् च।

सप्तमीबहुवचनस्य सुप् प्रत्ययस्य अवशिष्टः सुः इति अंशोऽपि संबुद्धिसंज्ञको भूत्वा संबुद्धिनिमित्तकप्रक्रियाकार्याणि कृत्वा अनेपक्षितान् असाधून् एव शब्दान् साधयिष्यति। एवमनर्थप्रसंगः संस्कृतभाषायाः कृते इत्येवरूपां कोटिम् सुः संबुद्धिः इति न्यासस्वीकारे स्वयमेव उद्भाव्य नागेशः वदति।

संबोधने च इति सूत्रात् संबोधने इति पदस्य अनुवृतिः एकवचनं संबुद्धिः इति सूत्रे सुः संबुद्धिः इति न्यासे च तुल्यैव भवति। अतः अनुवृत्तिलाभात् स एव सुः संबुद्धिसंज्ञां लप्स्यते यः संबोधनार्थकः एव न तु यः कश्चित्। सप्तमी बहुवचनांशसुप्रत्ययस्य संबोधनार्थत्वाभावात् अधिकरणार्थत्वात् च तत्र संबुद्धि संज्ञा कदापि आपादयितुं न शक्यते। सप्तमीबहुवचने एतन्न्यासे संबुद्धिरूपोद्देश्यकार्यजन्यविकृतिः नैव आपादायितुं शक्यते। तदंशस्य संबोधनार्थत्वाभावात्। पण्डितनित्यानन्दपर्वतीयः वैयाकरणाध्यापकशिरोमणिः संबोधनार्थानुवृत्तिम् मत्वापि तस्या उपयोगम् अन्यं मत्वा सु इति न्यासांशभूते शब्दे उकारे (अुकारे) अनुनासिकत्वप्रतिज्ञया संबोधनार्थकसुशब्दे एव संबुद्धिसंज्ञा भविष्यति न तु सप्तमी बहुवचने अधिकरणार्थवति सौ सा संज्ञा भविष्यति। इत्थं अस्मिन् न्यासे दोषराहित्यं दर्शयति अयं विद्वान्।

अस्यां स्थितौ संबोधनानुवृत्तेः स्वीकृतिवशात् संबोधनार्थाभाववत्— कर्त्रर्थकप्रथमान्तपदात् जायमानः एकवचनसुशब्दः संबुद्धिसंज्ञाया अधिकारी न सिद्ध्यति। संबोधनार्थत्वाभावात्। अत एव केवलप्रथमान्तपदात् परस्य सु इति शब्दस्य लोपो न भवति एङ् ह्रस्वादिति सूत्रेण। अपितु तस्य विसर्ग एव अन्ततः भवति। अत एव रामः इति पठ्यते न तु संबोधनपदवत् राम इति पठ्यते। अनेन प्रकारेण अस्मिन् न्यासे स्वीकृते सति न कोऽपि दोषः आपतति

इति निष्कर्षः जायते। एतद्दृष्ट्या नागेशोद्भाविताया: न्यासविरोधे स्वयमेव कृतायाः कोटेः तेनैव कृतं समाधानम् अरुचिकरं संभवति चेत् तथापि उकारे अनुनासिकत्वप्रतिज्ञापेक्षया पूर्वोक्तं नागेशसमाधानमेव ज्यायः इति अनुभूयते अस्माभिः। **एवं च दृष्टप्रयोजनाभावात् केवलं तपोरूपफल लाभप्रदस्वाध्यायदृष्ट्या सूत्रस्य तथात्वम् (एकवचनं संबुद्धिः इति स्वरूपम्) एव ग्राह्यमिति नागेशस्य मतम्।**

## निर्दुष्टसमाधानाग्रही नागेशः

सर्वे इति प्रयोगस्य प्रक्रियायाम् समागतसमस्यायाः निवारणप्रसंगे दीक्षितमते सदोषतां दृष्ट्वा तत्समस्यायाः निवारणे नागेशेन निर्दुष्टायाः रीतेरवलंबनं कृतम् वर्तते।

द्वयोः स्थलयोः समानायामपि परिस्थितौ अन्यतरस्मिन् स्थले परिभाषाविशेषस्य विनियोगः भवति अन्यस्मिन् स्थले समानपरिस्थितिसत्त्वेऽपि पूर्वस्थलवत् तस्य परिभाषाविशेषस्य (कारणविशेषं विना) विनियोगः न क्रियते चेत् तर्हि इदम् असंगतम् इति वक्तुं शक्यते। अत एव ईदृशम् असांगत्यम् स्वीकृत्य कस्यचित् लक्ष्यस्य सिद्धिः (यद्यपि प्रक्रियादृष्ट्या लक्ष्यविशेषसिद्धि-दृष्ट्या च) सफला एव जायते तथापि एतादृशस्थले स्वीकृतपरिभाषाविनियोग-स्वीकार्यतायामपि सर्वथा एतादृशस्थलसदृशस्थले कारणविशेषं विना तस्याः परिभाषायाः विनियोगाभावः एका विचित्रा स्थितिर्दृश्यते। यथाऽधः।

सर्व इति प्रातिपदिकात् प्रथमाबहुवचने सर्वे इति रूपम् सर्वैरपि शिष्टैर्वैयाकरणैः साधुत्वेन गृह्यते। एतद्रूपसाधनसमये प्रक्रियायाम् सर्वजस् इति स्थितौ 'जसः शी' इति सूत्रेण जसः स्थाने शी इत्यादेशः प्राप्तोभवति स च आदेशः स्थानिनः जसः कस्मिन्नंशे संपूर्णस्य जसः स्थाने वा भवेत् इति चिन्तायाम् अनेकाल्शित्सर्वस्य इति परिभाषासहयोगेन संपूर्णजसः स्थाने शी आदेशः सकलसम्मतः वर्तते परंतु तत्र अयं प्रश्नः समस्या वा उद्भवति यत् सर्वादेशः अनया परिभाषया आदेशस्य शित्ववशात् वा अनेकाल्त्ववशात् उभयमध्ये कतरस्मात् हेतोः अयं सर्वादेशः कर्तुं योग्यः? इति

## दीक्षितमतम्

वस्तुतः संपूर्णस्य जसः स्थाने सर्वादेशः दीक्षितनागेशोभयसम्मतः परंतु तत्र हेतुविषये तयोर्मतभेदः। दीक्षितः अत्र आदेशे अनेकाल्त्वं संसाध्य तत एव

कारणात् संपूर्णस्य जसः स्थाने सर्वादेशं कर्तुं वाञ्छति। अनेके अर्थात् एकाधिकाः अलः वर्णाः यस्मिन् स अनेकाल् इति व्युत्पत्या तन्मते शी आदेशे अनेकाल्त्वं विद्यते। सः 'श्' इति व्यञ्जनम् ई इति स्वरः एवम् एकाधिकानाम् अलाम् स्थितिम् शी इत्यादेशे स्थापयित्वा तस्य सर्वादेशत्वम् निष्पादयति अथ शेषप्रक्रिया सर्वे इति रूपसिद्धिं मन्यते दीक्षितः। परंतु अस्मिन्नुल्लिखिते दीक्षितमते नागेशः दोषं दर्शयति यथा—भाविविनाशवन्तम् शी इत्यादेशस्थम् शकारमाश्रित्य यदि आदेशे अनेकाल्त्वं साध्यते तर्हि अर्वन्तौ अर्वन्तः इति रूपयोः सिद्धौ आपत्तिः उद्‌भवति। तथाहि अर्वत् इति प्रातिपदिकस्य प्रथमाविभक्तेर्द्विवचने बहुवचने च अर्वत्+औ अथवा अर्वत्+जस् इत्यवस्थायाम् अर्वणस्त्रसावनञः इति सूत्रप्रवृत्तिवशात् अर्वत् शब्दस्य 'तृ' इत्यादेशः प्राप्तः। पूर्वोक्तदीक्षितरीत्या शी इत्यादेशवत् अत्रापि भाविविनाशशालिनम् ऋकारमाश्रित्य तृ आदेशस्य अनेकाल्त्वम् दुर्वारं भविष्यति। एवं चात्र तृ इत्यस्य स्थानिनः संपूर्णशरीरे आदेशत्वेन अर्वन्तः इति रूपद्वयस्य सिद्धिः आकाशकुसुमायिता भविष्यति दीक्षितमते। अस्या आपत्तेर्निवारणाय दीक्षितमहोदयेन अर्वणस्त्रसावनञः इति सूत्रेण विधीयमाने 'तृ' इत्यादेशे 'नानुबन्धकृतमनेकाल्त्वम् इति परिभाषाया आश्रयः गृह्यते। परिभाषार्थश्च अनुबन्धवशात् अर्थात् अनुबन्धस्य गणनया अनुबन्धोऽपि एकमक्षरम् वर्णो वा इति मत्वा साध्यमानम् अनेकाल्त्वम् नोचितम् इति। अत्र ऋकारः अनुबन्धः स च एकः वर्णः इति कृत्वा तत्संकलनेन=त+ऋ इति स्वीकारेण अनेकाल्त्वं तृ इत्यादेशे शास्त्रविरुद्धम्। अनया रीत्या अस्याः परिभाषाया आश्रयणेन तृ इत्यादेशे अनेकाल्त्वं नास्ति फलतः अत्र सर्वादेशत्वमपि नास्ति। एवं स्थितौ अलोऽन्त्यस्य इति सूत्रेण अर्वत् शब्दस्य तकारस्य स्थाने तृ आदेशो भवति ततः नुमादिविधानपुरःसरम् अर्वन्तौ अर्वन्तः इति रूपद्वयस्य सिद्धिः सुलभा।

परंतु सर्वे इति प्रयोगस्य साधनावसरे प्रक्रियायाम् अपि परिभाषावशात् (नानुबन्धकृत इत्यादिवशात्) अनेकाल्त्वं विहन्यते। अतः अस्मिन् प्रयोगे अनिच्छतापि दीक्षितमहोदयेन उक्तपरिभाषायाः प्रवृत्तेः अवरोधः केनापि प्रकारेण निवारयितुं न शक्यः। अतः अत्र अनेकाल्त्वाभावात् सर्वादेशत्वाभावात् जसः सकारस्य स्थाने शी आदेशः अलोऽन्त्यस्येति नियमेन दुर्वारः तथा च सर्वे इति रूपस्य सिद्धिरपि दुर्लभा भविष्यति। अर्वन्तौ अर्वन्तः इति साधनाय

पाठक्रमस्य व्यत्यासः न तादृक् दोषकरः यादृक् लक्ष्यविशेषस्य (उपरिदर्शितस्य) साधुताविषये संस्कृतभाषागतसाधुशब्दज्ञानवतः आचार्य पतंजलेः अनुभवस्य विरोधः दोषावहः अत एव आरंभे एव कृतप्रश्नानुरोधेन उपिरदर्शितस्य परस्परविरुद्धस्य रूपद्वयस्य कस्मिन् स्वरूपे कतरस्मिन् स्वरूपे वा साधुता? अस्योत्तरे पतंजलिसदृशस्य आचार्यस्य प्रामाणिकता दीक्षितापेक्षया अधिका इति मत्वा नागेशः स्वीये लघुशब्देन्दुशेखरे साभिप्रायम् लोपाभावपक्षे 'उत् त् थानम्' 'उत् त् तम्भनम्' इत्येव रूपद्वयं साधुत्वेन ग्राह्यम् इति समर्थितवान्। न तु दीक्षितोक्तम् थकारद्वयघटितं रूपद्वयं समर्थितवान् इति। एवं च युक्तिबलात् प्रामाणिकस्य आचार्यस्य महत्त्वं साधयन् नागेशः साधुशब्दज्ञाने प्रयोगे च अस्माकं मार्गदर्शनं करोति अत एव अस्मिन् प्रकरणे तस्य विवेचनम् अस्मदुपयोगि इति धियैव तस्य विचारः अत्र निवेशितः वर्तते।

## भो भगो इति सूत्रे सन्ध्यभावस्य उत्कृष्टं समाधानम्

कदाचित् पाणिनिसूत्रवर्तिपदेषु पाणिनीयव्याकरणशास्त्रीयनियम विशेषप्रवृतियोग्यत्वे सत्यपि तादृशप्रवृत्तिराहित्यम् दृश्यते। अत एव तेषु स्थलेषु व्याकरणशास्त्रदृष्ट्या दोषः आपतति। यथा भोभगो अघो अपूर्वस्य योऽशि इति सूत्रे तादृशस्थितिवशात् दोषः स्पष्ट एव। यद्यपि पाणिन्युत्तरवर्तिभिः वैयाकरणैः अस्मिन् विषये परस्परविरुद्धसमाधानं प्रदत्तं वर्तते तथापि एतद्विषये नागेशोक्तम् समाधानम् सरलम् युक्तिसंपन्नम् सहसा बुद्धिग्राह्यम् वर्तते। अतः एव तस्य चर्चा अधस्तात् क्रियते। यथा ईदृशोपर्युक्तसमस्यानां समाधानार्थम् अगतिकगतिरूपम् सौत्रत्वात् आर्षत्वात् वा हेतोः तत्र व्याकरणशास्त्रीयनियमाप्रसक्तिः इति रूपेण आर्षत्वं सौत्रत्वम् एतद्रूपम् कारणम् एव उक्तसूत्रे एङः पदान्तादति इति प्राप्तस्य पूर्वसवर्णैकादेशस्य प्रतिबन्धकं मन्यन्ते कतिपये आचार्याः परंतु नागेशदृष्ट्या तत् असमीचीनम् अनुचितं वा विद्यते। इयं कल्पना न ज्यायसी। यत्र वस्तुतः उपायान्तरं नास्ति तत्र एतद्द्वयं समाधानम् सह्यं ग्राह्यं वा भवेत् परंतु यत्र एतदद्वयातिरिक्तम् अन्यत् किंचित् सरलं समाधानं संभवति तत्र तु अगतिकगतित्वस्य सौत्रत्वस्य आर्षत्वस्य वा वशात् उक्तसमस्यायाः एङः पदान्तादति इति सूत्रप्रवृत्तिरूपायाः अभावः एवं च पाणिनीयसूत्रस्य प्राप्तौ सत्यामपि तस्य सूत्रस्य अप्रवृत्तेः कारणम् सौत्रत्वम् वा आर्षत्वं वा इति न स्वीकार्यम्।

स्पष्टमिदं यत् भगो+अघो+ तथा अघो+अपूर्वस्य इति खण्डेषु एङः पदान्तादति इति पाणिनिनियमस्य प्रवृत्तिः दुर्वारा भवति। परंतु सूत्रकारः पाणिनिः स्वकृतस्य एङः पदान्तादति इति सूत्रस्य प्रवृत्तिम् (सूत्रप्रवृत्तये आवश्यकसकलसामग्रीसत्त्वेऽपि) अत्र न करोति। किमर्थम् एवं क्रियते सूत्रकारेण पाणिनिना इत्यस्ति समस्या। एवं पाणिनिविषये स्वनियमोल्लंघनस्य दोषः अपि आपतति। सूत्रकारः स्वयं एङः पदान्तादति इति नियमं जानन्नपि ईदृशीं त्रुटिम् (पूर्वरूपैकादेशाभावरूपाम्) करोति इत्याक्षेपः अपि न शोभनः। सूत्रकारस्य महामहिमशालित्वात् सूक्ष्मदर्शित्वाच्च। एवं च किं कारणम् अत्र सन्ध्यभावस्य? इति प्रश्नः अस्मत् पुरतः नरीनर्ति।

अस्मिन् प्रकरणे परस्परविरुद्धानि समाधानानि उत्तरवर्तिभिः आचार्यैः प्रस्तुतानि सन्ति येषु श्रीदीक्षितस्य समाधानम् अगतिकगतिरूपम् वर्तते। यदा शब्दरत्नकारस्य श्रीहरिदीक्षितस्य नागेशस्य च समाधानं दीक्षितविरुद्धं वर्तते।

## दीक्षितमतम्

अयं महाभागः हे भवन् इतिवत् हे भोः इति प्रयोगोऽपि शिष्टस्वीकृतः अत एव साधुः इति मन्यते। मनोरमाग्रन्थे दीक्षितोक्तसूचनानुसोरण वृत्तिकारः हरदत्तश्च इमानि त्रीण्यपि रूपाणि (हे भो हे भगो हे अघो इतिरूपाणि) निपातानि मन्यन्ते। अतः चादिनिपातमव्ययम् इति सूत्रेण चादेराकृतिगणत्वात् इमानि त्रीण्यपि रूपाणि चादिघटितत्वात् अव्ययसंज्ञावन्ति सन्ति। अतः सुब्लुकि अत्र सन्ध्यभावः सिद्ध्यत्येव। एवम् उक्तविद्वद्भ्यां सह दीक्षितोऽपि अप्रत्यक्षतया भो इत्यादीन् त्रीन् शब्दान् निपातं मन्यते। अथ च तेषामव्ययत्वात् अन्ततः सन्ध्यभावः सिद्ध्यति इत्यपि मन्यते। एषां निपातत्वस्वीकारे अनेका युक्तयः दीक्षितेन प्रदर्शिताः सन्ति। तासां समीक्षणेन उक्तहरिदीक्षित—नागेशमतस्य च तेन सह विरोधः प्रकटो भवति। समुचितस्थलाभावात् विस्तरभयाच्च ताः सर्वा युक्तयः अत्र न स्थाप्यन्ते परंतु संबद्धम् एकमेव उदाहरणं प्रस्तूयते येन दीक्षिताशयस्य अपकर्षः त्रुटिः न्यूनता वा ज्ञातुं शक्या भवति।

## समीक्षा

श्रीदीक्षितः हे भवन् इतिवत् हे भोः इति प्रयोगं शिष्टस्वीकृतम् अत एव साधुं मन्यते। अमरकोशग्रन्थानुसारेण संबोधनार्थकनिपातानाम् सहप्रयोगः न

भवति। ईदृश: सहप्रयोग: शिष्टस्वीकृतो न वर्तते अत एव स: असाधु: प्रयोग:। अत एव दीक्षितोक्तप्रतिवाक्यम् हे भो इति निपातद्वयस्य सहप्रयोग: अमरकोशकारस्य विरुद्ध: जायते। अस्यां स्थितौ विवशेनापि श्रीदीक्षितेन भो: इति शब्दस्य भवत् इति शब्दात् व्युत्पत्तिस्वीकार: उभयत्र निपातत्वाभाव: स्वीकर्तव्य एव भवति। भवत् इति शब्दात् भो: इति शब्द: व्युत्पाद्यते इति स्वीकारेण तस्य निपातत्वस्वीकारस्य आवश्यकतैव न भविष्यति (वक्ष्यमाणनागेशमतेन)। एवं च दीक्षितमते इमौ शब्दौ हे भो इति न केवलं निपातौ अपितु लाक्षणिकौ वा व्युत्पत्तिसिद्धौ च । अत एव संबोधानार्थक-व्युत्पन्न-भो शब्देन सह एकस्यैव 'हे' इति निपातस्य प्रयोगेण अमरकोशेन सह विरोधोऽपि दूरीभवति।

अयं विरोध-परिहार: भो तथा हे शब्दौ द्वावपि निपातौ मत्वा न सिद्ध्यति। दीक्षितानुसारेण अमरकोशकार: निपातस्वरूपस्य संबोधनार्थकशब्दद्वस्य प्रयोगम् एव सदोषं मन्यते अत एव दीक्षितमहोदय: भो शब्दम् भवच्छब्दमूलकं व्युत्पत्तिसिद्धम् मत्वा तत्र निपातत्वाभावम् संसाध्य अमरकोशकारेण सह विरोधं परिहरति तथा च तद्दृष्ट्या हे भो: देवदत्त इति साधु मन्तव्यम्। एतावता व्याख्यानेन एषाम् भो इत्यादित्रयाणामपि शब्दानां निपातत्वं स्वीकृतवताम् वृत्तिकृत्-हरदत्तादीनां विरोध: स्पष्ट एव।

एतावान् विचारपूर्ण: ग्रन्थांश: वस्तुत: मूलविषयाद् बहि:। मूलसमस्या तु एषां शब्दानां सन्धि: पूर्वरूपम् कथं न? इतिरूपा। दीक्षितस्य महत्याचर्चया सह सौत्रत्वम् आर्षत्वम् अगतिकगतित्वम् एव सन्ध्यभावे कारणम् इति तन्मतं कथितम् एव। सौत्रत्वात् असन्धे: सिद्धान्त: गौरवदोषग्रस्त: अत एव अप्रशस्य: इति प्रसिद्धवैयाकरणस्य पायगुण्डेवैद्यनाथमहोदयस्य श्रीभैरवमिश्रस्य च वाक्येभ्य: अपि ज्ञायते। अत एव अयम् अधम: उपाय: सन्ध्यभावसमस्याया: इति कृत्वा श्रीहरिदीक्षितमतप्रचारक: स्वयं वा तस्य मतस्य कर्ता प्रचारको वा नागेश: इमान् भो इत्यादीन् त्रीनपि शब्दान् सान्तभोस्इत्यादिशब्दानाम् अनुकरण रूपान्मत्वा तत्र सकारस्य रु: रोर्यत्वम् लोपश्च। तस्य लोपस्य असिद्धत्वभीते: पूर्वरूपसन्धिरपि न भवति। इति प्रतिपादयति। इत्येत्सर्वं सुव्याख्येयं च सुचारुतया संभवति।

अत एव एते शब्दा: भोस् भगोस् अघोस् इति सान्तशब्दानुकरणा: एव।

तेन उक्तरीत्या सकारस्य रुत्वयत्वलोपैः सरलतया संध्यभावो दृश्यते। अस्य मतस्य प्रामाण्ये भाष्यकारः भैरवीकारः श्रीभैरवमिश्रः भावप्रकाशकारः वैद्यनाथः अपि समर्थकः इति ध्येयम्। एवं च एतादृशस्य सरलस्य उपायस्य सत्त्वेऽपि इति सौत्रत्वम् आर्षत्वम् अगतिकगतित्वम् स्वीकृत्य संध्यभावस्य समाधानं न युक्तम्।

सिद्धान्तकौमुद्याम् श्रीदीक्षितेन 'भोस् भगोस् अघोस् इति सान्ताः निपाताः' इयं पंक्तिः प्रक्रियावसरे भो अच्युत! इति प्रयोगसाधनसमये उक्ता वर्तते। तेन अयं भ्रमः संभवति—दीक्षित एव प्रथमम् भो भगो अघो इति सूत्रे एषां शब्दानां सान्तत्वं स्वीकृत्य सन्ध्यभावस्य समाधानं कृतवानिति। भ्रमविरोधे एतदेव वक्तुं शक्यते—दीक्षितोक्ता पंक्तिः निपातत्वमपि घोषयति न केवलम् सान्तत्वम्, अत एव पुनरपि एवम् सान्तनिपातत्वस्वीकारेण एषां शब्दानाम्ः अमरकोशकारेण सह विरोधः दीक्षितस्य उद्‌भवत्येव।

अत एव नागेशः एतान् अनुकरणशब्दान् न तु सान्तनिपातान् मत्वा (तेषु निपातत्वाग्रहं च त्यक्त्वा) अमरकोशेन सह सहमतिं च लब्ध्वा (यतः नागेशमते सान्तानुकरणरूपा भो इत्यादित्रयोऽपि शब्दाः) पूर्वोक्तरीत्या सकारस्य रुत्वयत्वलोपलोपासिद्धिभयरूपप्रक्रियया सन्ध्यभावम् साधयति निर्विरोधम्।

**इत्संज्ञका वर्णाः स्वसमुदायस्य अवयवाः सन्ति न वा? इत्यत्र नागेशीयं विशिष्टं मतम्।**

प्रत्ययागमादेशशब्दैः बोध्येषु शप्श्यन्नुग्लुगादिषु शास्त्रकारैः साभिप्रायं संयोजितेषु इत्संज्ञकवर्णेषु प्रत्ययादीनामवयवत्वम् अस्ति? अथवा नास्ति? इत्ययं विचारः अन्यमतसमीक्षापूर्वकम् नागेशदृष्ट्या अत्र प्रकरणे प्रस्तुतः वर्तते।

आपाततः दर्शनेन अयं विचारः व्यर्थः प्रतिभाति, परंतु प्रश्नस्यास्य उत्तरे अस्ति नास्ति इति परस्परविरुद्धाभिप्रायः प्रक्रियाशास्त्रान्तर्गतसूत्रार्थकरणे विभिन्न प्रभावम् उत्पादयति इति हेतोः अस्य प्रश्नस्य परिनिष्ठितम् उत्तरम् अपेक्षितं वर्तते।

वैयाकरणकेसरी नागेशः इमं प्रश्नम् परिभाषेन्दुशेखरे लघुशब्देन्दुशेखरे उद्योते च प्रस्तुतवान्। तत्रैव अनने विदुषा इदमपि घोषितम् यत् अस्य प्रश्नस्य उत्तरे कतिपयवैयाकरणाः नास्ति इत्युत्तरं प्रस्तुवन्ति अर्थात् तेषां दृष्ट्या इत्संज्ञकवर्णाः अनुबन्धा वा यैः प्रत्ययादिभिः सह संयोजिताः सन्ति तेषां

प्रत्ययादीनां ते (अनुबन्धाः इतः वा) अवयवाः न सन्ति। यद्यपि अथ यावत् अस्मद्दृष्टेषु विशिष्टव्याकरणग्रन्थेषु सिद्धान्तरूपेण अयं निर्णयः (अनुबन्धाः प्रत्ययादीनामवयवा न इति) नोपलभ्यते तथापि नागेशस्य समये अयं निर्णयः श्रुतिपरंपरया वैयाकरणेषु प्रचलितः आसीत् इत्यपि सर्वथा संभवति यस्य उल्लेखम् नागेशः पूर्वपक्षरूपेण स्वग्रन्थे कृतवान्।

## नागेशस्थापितः पूर्वपक्षसम्मतः तर्कः

एते कथयन्ति अवयवावयविषु ईदृशः संबन्धः दृष्टिपथमायाति। अवयवत्वेन स्वीकृतः अर्थः स्थितिविशेषे अवयविना अर्थेन सह दृश्यते एव इयं स्थितिः न सर्वदा परंतु कादाचित्की तु संभवत्येव। वृक्षः अवयवी शाखा अवयवः अवयवरूपा सा शाखा छिन्ना सती अवयविनः वृक्षात् भिन्ना गृह्यते इति तु सत्यम् तथापि छेदनात्प्राक्क्षणविशेषेषु सा शाखा अवयविना वृक्षेण सह दृश्यते एव। परंतु अनुबन्धास्तु (इत्संज्ञकवर्णास्तु) प्रत्ययादिभिः सह तेषां प्रत्ययादीनाम् परिनिष्ठितावस्थायां कदाचिदपि न दृश्यन्ते, अतस्ते अनुबन्धा इतो वा अवयविनाम् प्रत्ययादीनाम् अवयवाः इति स्वीकर्तुं न शक्यम्। इति परेषां मतं वर्तते—इत्युद्घोषयति नागेशः।

एवं च अनुबन्धाः प्रत्ययादीनामवयवाः न सन्ति इति सिद्धान्ते सिद्धे सति प्रत्ययविशेषाणाम् विशेषणीभूतस्य शित् कित् इति रूपस्य शब्दस्य अर्थनिष्पादनं कठिनं दुर्लभं च भविष्यति। यतः इमौ शब्दौ बहुव्रीहिघटितौ अतः श् इत् यस्य क् इत् यस्य इति विग्रहः आवश्यकः वर्तते। अत्र शकारेत्संज्ञकस्य अवयविनः अन्यपदार्थस्य अनेन शकारेण एतदुक्तमतानुसारेण असंबद्धत्वात् बहुव्रीहिर्नोपपद्यते। यतः अस्मिन् मते शकारः अनुबन्धः अन्यपदार्थस्य प्रत्ययादेः संबन्धी नास्ति। एतन्मतानुसारेण 'श'रूपस्य अनुबन्धस्य समुदायरूपम् अन्यपदार्थं प्रति अथवा अवयविनं प्रति अवयवत्वस्वीकारं विना बहुव्रीहेरुपपत्तिः दुर्लभा इत्यस्ति अस्मदाशयः। एवं च शिदादिपदघटितप्रक्रियोपयोगिसूत्राणामर्थोऽपि कठिनः एव। इत्यस्ति आपत्तिः। अनुबन्धानाम् इत्संज्ञकानां वा प्रत्ययाद्यवयविभिः समुदायैः अन्यपदार्थैर्वा संबन्धाभावस्वीकृत्या इयमापत्तिः पुष्टा भवति।

एवमेव 'चुट्' इत्यस्य सूत्रस्य किद्घटितसूत्रस्थबहुव्रीहिपदानामर्थस्यापि दुर्लभता। अनुबन्धानाम् अवयवत्वास्वीकारे उत्थापिताया अस्या आपत्तेरुत्तरम्

पूर्वपक्षिभि: दीयते तदनुसारेण ईदृशस्थलेषु वस्तुत: अवयवत्वस्य अभावेऽपि अनुबन्धेषु शकारादिषु लक्षणावृत्त्या आरोपितम् अवयवत्वम् स्वीकृत्य बहुव्रीहि- घटितशिदादिपदानाम् तत्तत्पदघटितसूत्राणां च अर्थकरणस्य व्यवस्था आञ्जस्येन उपपद्यते। एवं च अनुबन्धा: वस्तुत: अवयवा न सन्ति प्रत्ययादीनाम् अयमेव सिद्धान्तः परपक्षीयाणां विचारे मान्य: भवति। एवं नागेश: प्रतिपक्षिसमर्थनेन अस्या मान्यताया: स्थिरतां दर्शयन् तत: सिद्धान्तिमतं स्थापयति। एतत् सिद्धान्तिमतस्थापनावसरे परपक्षस्य खण्डनं विरोधं च महता कौशलेन नागेशः कृतवान्। अस्य विरोधस्य सर्वश्रेष्ठो बिन्दु: अयमेव प्रतीयते यत् प्रथमं तु वैयाकरणा: लक्षणासदृशवृत्तिम् नहि स्वीकुर्वन्ति, द्वितीयम् सूत्रस्य अर्थकरणे अभिधावृत्ते: क्षमतायां सत्याम् अपि लक्षणास्वीकार: दूरदर्शिता सूक्ष्मदर्शिता वा नास्ति। नैतावदेव, उक्तस्य पूर्वपक्षिण: मते दोषाधिक्यं च वर्तते। यथा लक्षणाया: कृते मुख्यार्थलक्ष्यार्थयोर्मध्ये परिगणितसंबन्ध-विशेषस्य अनिवार्यत्वम् अपेक्षितं वर्तते पूर्वपक्षी प्रत्ययादिषु अनुबन्धेषु च सामीप्यसंबन्धस्वीकाराय विवश: अस्ति।

सूत्रार्थकरणसमये लक्षणासिद्ध्यै पूर्वोक्तसमीप्यसंबन्धस्वीकारे बुञ् छण् इत्यादिसूत्रेण अनिष्टप्रयोगाणामपि सिद्धि: आपद्येत। अस्मिन् सूत्रे णकार: अनुबन्ध: यथा छस्य समीपे तथैव स णकार: ककारस्यापि समीपस्थ:। छेपरत: यानि णित्त्वप्रयुक्तानि कार्याणि वृद्ध्यादीनि कर्तुं शक्यानि तान्येव वृद्ध्यादीनि कार्याणि के परे सत्यपि भविष्यन्ति। के परे सति वृद्धिरूपकार्याणि लक्ष्यसिद्धये अवांछितानि सन्ति। नागेश: लघुशब्देन्दुशेखरे इममेव अभिप्रायं स्थापयति यथा बुञ् छण् कठ सूत्रेणित्त्वप्रयुक्तवृद्धिर्न स्यात् एतै: शब्दै:।

एवं लक्षणास्वीकारे दोषोद्भावनावशात् तस्या: स्वीकार: कर्तुं न शक्यते। लक्षणाया अभावे पूर्वपक्षी तादृशबहुव्रीहिघटितसूत्राणामर्थकरणे कामपि उपपत्तिम् द्रष्टुं दर्शयितुं च न शक्नोति।

अवयव: स एव य: कदाचिदेव स्यात् अर्थात् कस्मिन्नपि क्षणे अवयविन: समीपे दृष्ट: स्यात् अनुबन्धास्तु प्रत्ययादीनामर्थस्वरूपे परिनिष्ठित-शब्दरूपे कदाचिदपि दृष्टिगोचरा न भवन्ति। अत एव ते अनुबन्धा: प्रत्ययादीनाम् अवयविनाम् अवयवा: न सन्ति इदं कथनं तु त्रुटिपूर्णमेव।

यत: अवयविरूपे अस्माभि: (प्रक्रिया) शास्त्रस्थप्रत्ययादय: एव स्वीकर्तव्या: न तु परिनिष्ठितशब्दरूपप्रत्ययादय:। अस्यां स्थितौ अनुबन्धास्तु

शास्त्रान्तर्गतप्रत्ययादिषु सर्वत्र सदैव तिष्ठन्ति। एवं सुलभा बहुव्रीहिः। अथ च अनया स्वीकृत्या ध्वस्तः विरोधिनां परक्षीयाणामाशयः इति उद्घोषयति नागेशभट्टः। एवम् अनुबन्धानाम् अवयवता निर्विरोधतया आवश्यकस्थतेषु वांछनीयतया सह सिद्धा भवति। येन सिद्धान्तरूपेण अस्य प्रकरणस्य आरंभे कृतस्य प्रश्नस्य उत्तरम् ओम् इति रूपेण दातुं शक्यम् अर्थात् अनुबन्धाः (इत्संज्ञका वर्णाः) प्रत्ययागमादेशानामवयवाः इदमेव तथ्यं निष्कृष्टं भवति। नागेशस्य अनेन सिद्धान्तेन अनुबन्धघटितबहुव्रीहिप्रधानसूत्राणामर्थः आञ्जस्येन कठिनतर्कोत्तरप्रदानावश्यकतां विनैव साधयितुं शक्यः। यद्यपि तादृशसूत्रार्थः अन्येनापि केनापि प्रकारेण कर्तुं शक्यः भवति तथापि नागेशीयपद्धत्या सूत्रार्थकरणे न कापि विप्रतिपत्तिः यथा परमते विप्रतिपत्तिरायाति। अयमेव नागेशमतस्य स्पृहणीयः स्वतंत्रश्च लाभः वर्तते। एतादृशलाभयुक्ततथ्य-प्रकाशकत्वात् अत्रत्यं नागेशीयं मतम् संस्कृतव्याकरणशास्त्रे महत्त्वपूर्णम्, अत एव अत्र प्रकरणे एतदुल्लिखितं वर्तते।

अस्य मतस्य स्थापनाया लाभः न केवलं बहुव्रीहिघटितसूत्रार्थकरणे एव भवति प्रत्युत एतदतिरिक्ता अन्येऽपि लाभाः सान्ति येषां वर्णनम् मूल परिभाषेन्दुशेखरे तट्टीकासु च द्रष्टुं शक्याः। अत्र तु उपलक्षणरूपे नागेशमतलाभस्य चर्चा कृता वर्तते। अनेन संस्कृतव्याकरणस्य प्रक्रियावाङ्मये आवश्यकस्य तथ्यस्य साधनं संपद्यते इत्यस्ति महान् उपकारः नागेशस्य संस्कृत व्याकरणशास्त्रीयलेखने इति प्रशस्य विरम्यते।

# चतुर्थोऽध्यायः

## परिभाषाप्रकरणे नागेशस्य विचारसारांशः ।

*संस्कृतव्याकरणशास्त्रीयविविधप्रकारेषु परिभाषा इति शब्दवाच्यः अपि एकः प्रकारः विद्यते—अयं प्रकारः इयं विधा वा पाणिनिसूत्राणामर्थकरणे कियत् सहयोगिनी ? इति तु परिभाषावाङ्मयज्ञानवन्तः जानन्त्येव । नागेशात् पूर्वम् महाभाष्ये अन्यत्र च पुरुषोत्तमदेवादिभिः मैत्रेयादिभिः च रचितविविध परिभाषासंग्रहग्रन्थेषु परिभाषाणाम् विचारः उपलभ्यते तस्य सर्वस्यापि परिभाषा वाङ्मयस्य गंभीराध्ययनेन नागेशः स्वपरिभाषाग्रन्थे अत्यन्तं विशदम् सारवत् अखण्डनीयं च तथ्यजातम् उपन्यस्तवान् । यस्य ग्रन्थस्य विद्वत्ताप्रचुराभिः अनेकाभिः प्रशस्तटीकाभिः अत्यन्तं विशदस्य सारवतः अखण्डनीयस्य च नागेशकृतपरिभाषेन्दुशेखरस्य महत्त्वम् दृढं भवति । अस्य ग्रन्थस्य विशिष्टप्रशंसकः पुण्यपत्तनस्थः कैलासवासी महामहोपाध्यायः वासुदेवशास्त्री अभ्यंकरः एकस्यां कारिकायाम् एतद्ग्रन्थस्थानि कानिचित् अतिप्रशस्यानि स्थलानि उल्लिखितवान् । यान्यधिकृत्य नागेशः नव्यमतप्रवर्तकः इति गौरवास्पदां सिद्धिम् एतत्स्थलीयविवेचनवशात् प्रदर्शितपाण्डित्योत्कर्षवशाच्च अलभत इति अभ्यंकरोपाह्वस्य पूर्वोक्तविदुषः श्रीवासुदेवशास्त्रिणः विचारः, स च अस्मत्समीक्षया अत्यन्तं युक्तिसिद्धः अनुभवगम्यश्च वर्तते ।*

*अस्त्वेतत् सर्वम् मूलाध्यायतः अवगन्तव्यम् । व्यपदेशिवेदकस्मिन् इति परिभाषा लोकन्यायसिद्धा इति भाष्यकारः सिद्धान्तयति । कस्यचित् निमित्तस्य सत्तावशात् यदि कुत्रापि कोऽपि व्यवहारः भवति तर्हि स व्यवहारो मुख्यः यथा बहुपुत्रकस्य देवदत्तस्य बहुपुत्ररूपनिमित्तवशात् प्रथमोत्पन्ने पुत्रे अयं ज्येष्ठः इति व्यवहारो जायते स च मुख्यः व्यवहारः परंतु यदि देवदत्तस्य एक एव पुत्रः नान्यः कश्चित् तर्हि कस्यापेक्षया अयमेको ज्येष्ठः इति प्रश्नः जागर्ति पूर्वोदाहरणे मुख्यस्य ज्येष्ठत्वव्यवहारस्य दृष्टत्वात् एकपुत्रकदेवदत्तस्य एकस्मिन्नेव पुत्रेऽपि देवदत्तः कथयति अयं मे ज्येष्ठः पुत्रः अयमेव मध्यमः इत्यादि । निष्कर्षस्तु अयमेव यत्र कुत्रापि मुख्यव्यवहारस्य निमित्तसत्ता विद्यते*

तत्र तमेव (मुख्यम्) व्यवहारम् अथ च तादृशनिमित्तस्य सत्ताया अभावेऽपि गौणरीत्या विद्वांसः तन् निमित्तहेतुकं व्यवहारम् स्वीकुर्वन्ति यथोक्तस्थले। (एकपुत्रकदेवदतोक्तज्येष्ठव्यवहारे) एवमेव शास्त्रीयेष्वपि कार्येषु मुख्यव्यवहारदर्शनेन क्वचित् तस्य मुख्यव्यवहारस्य निमित्ताभावेऽपि गौणरीत्या तादृशः व्यवहारः भवति इति विवेचनपुरःसरम् भाष्यकारः गम् हन् इत्यादिषु एकाच्त्वव्यवहारस्य सुस्पष्टनिमित्तवशात् मुख्यम् एकाच्त्वव्यवहारं साधयति। अथ च तादृशनिमित्ताभावेऽपि इयाय इत्यत्र प्रकृतौ 'इ' धातौ गौणरीत्या एकाच्त्वं साधयति भाष्यकारः। गम् हन् इत्यत्र एकः अच् यस्य यस्मिन् वा इति व्युत्पत्या व्युत्पत्तिसंगत्या वा मुख्यम् एकाच्त्वम् स्पष्टम्। यतः उभयस्मिन् अपि उदाहरणे अकाररूपः एकः अच् अवयवः अस्ति यस्य सः अस्ति ग् म् ह् न् इति वर्णघटितसमुदायः। एवं तत्र बहुव्रीहिः सुलभा सरला च। परंतु 'इ' इत्येकावयवे धातौ 'इ' इतिरूपः एकः अच् यस्य सः कः पदार्थः अत्र तु ईदृशः न कोऽपि पदार्थः इति कृत्वा 'इ' धातौ एकाच्त्वं दुर्लभम्। एकपुत्रकदेवदतस्य एकस्मिन् एव पुत्रे गौणरीत्या साधितज्येष्ठत्ववत् अत्रापि 'इ' धातौ गौणम् एकाच्त्वम्। बहुपुत्रकदेवदत्तस्थले तस्य अयं मे ज्येष्ठः अयं मे मध्यमः इत्यादिव्यवहारस्य कृते कनिष्ठमध्यमपुत्रसत्तारूपनिमित्तम् गम् हन् इत्यादिषु च तादृशं निमित्तं स्पष्टमेव अतः एकपुत्रकेदेवदत्तव्यवहारे एकमात्रस्वरविशिष्टे 'इ' इति धातौ च पूर्वोक्तनिमित्तसत्ताया अभावेऽपि पूर्वोक्तोदाहरणस्थ-निमित्तसत्ताप्रभावादेव अयं मे ज्येष्ठः इत्यादिव्यवहारः 'इ' धातौ एकाच्त्वव्यवहारः साध्यते। एतत्सर्वं भाष्यकरविवेचनं नागेशस्य प्रीतिकरम् एव। एवं चेदं विवेचनं गौणरीत्या व्यवहारविशिष्टस्य उपपादकं वर्तते। अस्मिन्नेव प्रसंगे भाष्यकारेण 'भद्रं नो अपि वातय मनः' इति ऋक् एकपदा अस्ति इति व्यवहारः स्वीकृतः। तदनुसारेण भद्रं नो ...... इत्यानुपूर्व्याः अर्थः आनुपूर्वीच उभयमपि ऋक् पदार्थः। अत एव एकः पादः आनुपूर्वीरूपः यस्याः अर्थरूपाया ऋचः सा अर्थरूपा ऋक् स्वस्मिन् अवयत्वेन इमाम् आनुपूर्वीम् भद्रं नो ........ मनः इतिरूपाम् समावेशयति एवं च मुख्यरूपेण बहुव्रीह्यर्थोऽपि संगच्छते। इदं मुख्यव्यवहारस्य उदाहरणम्। अस्य भाष्याशयस्य सूक्ष्ममननेन स्पष्टं भवतियत् भद्रं नो० इत्यत्र प्रदर्शितभाष्यचर्चया इदमुदाहरणं मुख्यव्यवहारस्य मुख्यार्थघटितबहुव्रीहेश्च इति नागेशः प्रतिपादयति।

अत्रेदम् अवश्यं स्मर्तव्यम् यत् भाष्यकारः गम् हन् इत्यादौ 'एकपदाऋक्' इत्यत्र च मुख्यार्थलाभेन शुद्धबहुव्रीहिं मत्वापि 'इयाय' इत्यत्र गौणम् एकाच्त्वम्, अत एव गौणरीत्या बहुव्रीह्यर्थलाभं स्वीकरोति परंतु तट्टीकाकृत् महामहोपाध्यायकैयटभट्टः एकपदा ऋक् इत्यत्र उक्तम् भाष्यविवेचनम् अन्यथा व्याख्याय इयाय इत्यत्र याम् एकाच्त्वसाधिकाम् व्यवस्थाम् अकरोत् सा वस्तुतः भाष्यविरोधिनी प्रसंगान्तरस्थभाष्यविवेचनस्य अन्यथा समायोजनेन मुख्यबहुव्रीहिसाधिका च भवति। इममेव गूढमाशयम् प्रकटयन् नागेशः कैयटदोषमुपन्यस्तवान्। इत्थम् अनुमीयते यत् कैयटभट्टः अर्थरूपाम् शब्दरूपाम् उभयविधाम् ऋचम् भाष्यकारानुमोदितां दृष्ट्वा व्यस्मरत् यत् भाष्यकारस्य इदं विवेचनम् मुख्यबहुव्रीहिलाभार्थम् अथ च स एव भाष्यकारः शब्दार्थोभयवाच्यतास्वीकारेऽपि 'इयाय' इत्यत्र अनयारीत्या बहुव्रीहिं न सिद्धान्तयति प्रत्युत व्यपदेशिवदेकस्मिन् इति परिभाषया साधितगौणबहुव्रीहिमेव स्वीकरोति इति नागेशस्य वक्ष्यमाणपंक्तिषु अभिप्रायः द्रष्टव्यः।

भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषा अणुदित्सवर्णस्य० ज्यादादीयसः इत्यनयोश्च सूत्रयोः भाष्ये भाष्यकारेण ज्ञापकसिद्धा इति स्वीकृतं वर्तते। स्थलविशेषप्रक्रियायाः सिद्ध्यै अस्याः अनिवार्यत्वम् सर्वैरपि वैयाकरणैः स्वीक्रियते यथा त्यदादीनामः इति सूत्रेण इदम् इत्यन्तर्गतस्यअकारस्य स्थाने विधीयमानः अकारः स्थानिनः अकारस्य ताल्वादिस्थानाभ्यन्तरप्रयत्नकृत-सादृश्यवशात् अनुनासिकः अकारः प्राप्तोऽपि अनया निवार्यते। यतः विधीयमानः अकारः एतत्परिभाषावशात् स्वसवर्णम् अन्तरतममपि अनुनासिकम् ग्रहीतुं विधातुं वा न शक्नोति परिभाषाविरोधात्। एवं चास्याः उपयोगिता तु निःसन्देहं सिद्ध्यति तथापि 'चोः कु' इति सूत्रेऽपि एतत्प्रवृत्त्या विधीयमानः 'कुः' कखगघङादीन् सवर्णान् विधातुं ग्राहयितुम् वा असमर्थः त्यदादीनाम इत्येतत्स्थितविधीयमानाकारवत्। एवं च 'चस्य' स्थाने 'कः' छस्य स्थाने खः जस्य स्थाने गः इत्यादिकार्याणि यानि शिष्टप्रयोगसिद्ध्यै आवश्यकानि तान्यपि प्रतिबद्धानि अवरुद्धानि वा भवन्ति, इत्यस्ति अस्याः परिभाषायाः अनभीष्टप्रसरजन्या समस्या। तां च दूरीकर्तुम् सीरदेवः श्रीदीक्षितमहोदयः तदनुयायिनश्च इमां परिभाषां स्वरूपपरिवर्तनेन सह पठन्ति यथा भाव्यमानेन सवर्णानां ग्रहणं नेति इत्यस्य स्थाने भाव्यमानो ऽण् सवर्णान् न गृह्णाति इति

पठन्ति एवं च कुशब्दस्य अण्त्वबहिर्गतत्वात् अत्र चोः कुः इत्यत्र अस्याः अप्रवृत्तिः त्यदादीनामः इत्यत्र प्रवृत्तिश्च। फलतः 'इमम्' 'या' 'सा' इत्यादीनां शिष्टप्रयोगाणां सिद्धिः अथ च चोः कुः इत्यत्र अप्रवृत्त्या सारल्येन विधीयमानस्यापि कुशब्दस्य कखगघङाः इत्यर्थः लभ्यते येन सकलप्रक्रियानिर्वाहः जायते परंतु सीरदेवदीक्षितादीनाम् इदं परिभाषास्वरूप परिवर्तनरूपसाधितम् समाधानं नागेशाय न रोचते। सूत्रस्थाया आनुपूर्व्याः भाष्यकारवचनानुपूर्व्याः एवं च शब्दशास्त्रीयवाक्यविशेषस्थाया आनुपूर्व्याः स्वतंत्रं महत्त्वं वर्तते तत्रैव पुण्यजनकता च वर्तते। यावच्छक्यं सूत्रादिस्थशब्दपरिवर्तनं शब्दप्रकृतिधनानां वैयाकरणानां रीतौ अनभीष्टं वर्तते, यदा तु तद् विना शिष्टस्वीकृतप्रयोगोपपत्तिः दुर्लभा भवेत् तदा अगतिकगतितया तत् परिवर्तनं स्वीकार्यं भवति इति श्रेयान् पन्थाः। अत्र तु व्याख्यानविशेषेणैव परिभाषारूपपरिवर्तनं विनापि प्रकृतसमस्यायाः समाधानं संभवति अतः दीक्षितादीनां कल्पना तिरस्करणीया इति नागेशाभिप्रायः।

चोः कुः इत्यत्र साभिप्रायम् उदित्-कु-शब्दोच्चारणसामर्थ्येन परिभाषोपेक्षापूर्वकम् विधेयेऽपि सवर्णग्राहकता सूत्रकारमते स्पष्टैव। यदा सूत्रकारः स्वयमेव ज्ञापयति यत् अत्र 'अप्रत्यय' ज्यादादीयसः इत्युभयत्र भाव्यमानः प्रत्ययः आगमः आदेशो वा सवर्णान् न गृह्णति अथ च भाष्यकारोऽपि अप्रत्ययः इत्यंशेन ज्यादादीयसः इति दीर्घग्रहणरूपसूत्रकार-कार्येण उक्तार्थमेव ज्ञापयति तथापि सूत्रकारः चोः कुः इति सूत्रे विधेयघटिताम् तां सामग्रीं निदधाति यया अणुदित्सूत्रगतोदित्पदसाहाय्येन विधेयसंबद्ध वर्णानां ग्रहणं स्यात् तदा एतत्स्वीकारे विधेयोऽपि कुः सवर्णान् गृह्णाति इति स्वीकारे न कोऽपि संकोचः कर्तव्यः यतः सूत्रकारस्य मनसि स्वज्ञापितनियमानाम् क्वचित् सफलानामपि चोः कुः इति सदृशसूत्रे सविशेषम् विनियोज्यताया अभावः एव वर्तते। या चोः कुः इति स्थलेऽपि अनया परिभाषया सवर्णग्राहकता विद्यते सा सूत्रकाराभिमता न स्यात् तर्हि कु इति शब्दे सवर्णग्राहकतातिरिक्तकार्यशून्यत्वात् एवंभूतम् उकारघटितम् अक्षरगौरव-दोषपूर्णम् परस्परविरुद्धतात्पर्यस्थापकम् ककारं किमर्थं पठेत्? तत्स्थलं तु अन्यदेव यत्र सवर्णग्राहकतातिरिक्तः अभिप्रायः स्पष्टः सन् प्रक्रियासाधको भवेत्। यथा त्यदादीनामः इत्यत्र त्यदीदादीनां शब्दानाम् अन्त्यस्य स्थाने अकारकरणम् मुख्यं प्रयोजनं सूत्रकारस्य न तथा चोः कुः

इत्यत्रस्थितकुशब्दावयवस्य अुकारस्य अन्यत् किमपि फलम् सवर्णग्राहकतातिरिक्तं विद्यते, इत्यनयोर्भेदः। इत्थं सूत्रकाराभिप्रायम् विशदव्याख्यानेन ज्ञात्वा एव अस्याः परिभाषायाः अप्रवृत्त्या (चोः कुः इत्यत्र) सकलकार्यनिर्वाहे संभावितेऽपि रूपपरिवर्तनेन परिभाषाया अप्रवृत्तिरूपः उपायः हीनः इति मूले अस्माभिः प्रपंचितमेव द्रष्टव्यम्।

## विप्रतिषेधे परं कार्यम्

अस्मिन सूत्रे भाष्यकारस्य चर्चायाः मननेन लोकव्यवहारस्य च अनुभवेन नागेशभट्टः अस्य सूत्रस्य उभयस्वभावकताम् नियमस्वभावकमिदं सूत्रम् विधिसूत्रस्वभावकं चेदं सूत्रम् इतिरूपेण प्रतिष्ठापितवान्।

ययोः सूत्रयोः लक्ष्याणि निमित्तानि परस्परं भिन्नानि तयोः परस्परं प्रथमप्रवृत्तिविषये विरोधविषये प्रश्न एव नोत्पद्यते परंतु एवंभूतयोः द्वयोः परस्परं विविधलक्ष्येषु प्राप्तगतिकयोः सूत्रयोः युगपत् प्राप्तिः कस्मिंश्चित् लक्ष्ये भवति तर्हि उभयोरपि स्वस्वस्थाने बलशालित्वात् कस्य अन्यतरस्य प्रथमं प्रवृत्तिरिति प्रश्नः। भाष्यकारश्च अस्योत्तरं ददत् 'ण्वुल् तृचौ' इति सूत्रेण कृ धातोः कर्ता कारकः इत्यत्र उभयोरपि प्रत्यययोः पर्यायेण उपस्थितिं साधुं मन्यते परंतु तत्रापि अन्यतरस्य रूपस्य अनिष्टप्रयोगतापत्तिरूपदोषभिया अयमपि पन्थाः भाष्यकारस्य नातिप्रियः। अत एव सः अनिर्णयावस्थाम् घोषयति पृथक् पृथक् अन्यत्र चरितार्थयोः लक्ष्यविशेषे संकीर्णलक्ष्ये प्राप्तयोर्मध्ये कतरत् सूत्रं प्रवर्तनीयम् इति निर्णये सन्देहो जायते—पाक्षिकत्वेन उभयोरपि प्राप्तिः अतः इदं सूत्रम् अस्याम् अवस्थायाम् परसूत्रप्राबल्यघोषकं सत् नियमस्वभावं धारयति—अर्थात् परत्वात् अष्टाध्यायीपाठक्रमदृष्टया परस्थितस्यैव प्रवृत्तिर्भवेत् न तु अन्यस्य इत्यस्ति नियमः। अस्यैव अर्थस्य अनुवादिका "सकृद्गतौ यद्बाधितं" तद्बाधितमेवेति परिभाषा ज्ञाप्यते।

एवं च परसूत्रस्य विनियोगे ज्ञातेऽपि दैवयोगात् बाधितसूत्रस्य प्रवृत्तये योग्यानि निमित्तानि अवशिष्टानि स्युः तर्हि बाधितस्यापि पुनः प्रवृत्तिर्भवति अस्यैव अर्थस्य अनुवादिका पुनः प्रसंगविज्ञानात् सिद्धम् इति परिभाषा। अत्र अस्यैव नियमत्वस्य विधित्वस्य परिभाषाद्वयस्य च साधनाय कैयटेन यत् कथितं तत्तु दोषपूर्णम् इति नागेशः स्थापयति तद् मूलाध्यायादेव द्रष्टव्यम्। अन्तरंगानपि विधीन् बहिरंगो लुग् बाधते इतीयं परिभाषा ज्ञापकसिद्धा

चेति भाष्यकारनागेशयो: सिद्धान्त: परंतु इममेव सिद्धान्तम् स्थापयन् पदमञ्जरीकारो हरदत्त: यान् हेतून् याश्च युक्ती: प्रदर्शयन् पूवोक्तं सिद्धान्तं समर्थयति तत्र तेषु हेतुषु युक्तिषु च दोषप्रकाशनपूर्वम् इमां परिभाषाम् महता कौश:लेन नागेश: ज्ञापकसिद्धाम् गोमत्प्रिय: इतिवत् शिष्टप्रयोगसाधिकाम् समर्थितवान् तच्च सर्वं मूलत: एव ज्ञातव्यम् ।

प्रत्ययागमादिषु अन्ते निविष्टा: इत्संज्ञका: वर्णा यथा 'यत्' प्रत्यये तकारः ण्वुल् प्रत्यये लकारः एवमादिवर्णाः प्रत्ययादीनामवयवा: सन्ति न वा? इति प्रश्न: समुत्थापित: नागेशेन? नागेशसमये श्रुतिपरंपरया एषाम् इत्संज्ञकवर्णानाम् अनुबन्धाख्यानाम् प्रत्ययाद्यवयत्वं नाभिमतमासीत् तत् खण्डयित्वा तान् इत्संज्ञकान् वर्णान् प्रत्ययादीनाम् अवयवस्वरूपानेव साधितवान्। विरोधिपक्षस्य इयमेव न्यूनता यत् तन्मतस्वीकारे शित् कित् इत्यादिबहुव्रीहि: सरलतया नोपपद्यते बहुव्रीहौ अन्यपदार्थ: प्रधान: अवयवरूपेण स्थिता: अर्था: द्वौ वा अनेके वा सर्वेऽपि अन्यपदार्थस्य अवयवा: अवश्यं सन्ति यथा 'शित्' इति बहुव्रीहि: अन्यपदार्थ: आदेशरूपः 'शी' इतिरूप: तस्य अवयव: शकार:। स: शकार: अवश्यमेव शी इत्यस्य अवयवत्वेन ग्राह्य:। इत्संज्ञकवर्णानाम् समुदायस्य अवयवत्वास्वीकारवत: विरोधिपक्षस्य दृष्ट्या अयं शकार: इत् अनुबन्ध: समुदायस्य अवयवो नास्ति एवं च तस्य अन्यपदार्थेन सह असंबद्धत्वात् बहुव्रीहिर्दुलभैव। अस्योत्तरे विरोधिनः लक्षणावृत्तिस्वीकारेण कथंचित् गौणावयवत्वं संसाध्य बहुव्रीहिम् उपपादयन्ति चेत् तर्हि गौरवदोष: अथ च वैयाकरणा: प्रामुख्येन लक्षणां न स्वीकुर्वन्ति इति बाधापि वर्तते अत्र मते। अथ च लक्षणासिद्धये तै: विरोधिभि: सामीप्यसंबंधस्वीकार: आवश्यक: इत्येतत् सर्वं व्यर्थं विस्तरंत्यक्त्वा नागेशदृष्टया इताम् समुदायावयवत्व-स्वीकारेण सर्वं सरलतया उपपन्नं भवति दोषोऽपि कश्चन नोत्पद्यते। अनया रीत्या शकार: ककार: उभौ अपि शी इत्यादेशस्य आतोऽनुपसर्गेकः इति विहितस्य 'क' इति प्रत्ययस्य च अर्थात् अन्यदार्थस्य अवयवौ स्त: येन बहुव्रीहि: सरलतया संपद्यते। अथ प्रतिपक्षिणा अयमपि आरोप: यत् अवयव: स एव य: कदाचिदपि अवयविना सह दृश्यते—यथा 'वृक्षस्य शाखा' इत्यत्र शाखाया: अवयवत्वम् अत एव स्वीक्रियते यतः सा, छेदनात् प्राक् वृक्षेण सह दृश्यते परंतु इत्संज्ञकास्तु परिनिष्ठितशब्देषु कदाचिदपि दृष्टिगोचराः न भवन्ति अत एव इतः, अवयवाः इति वक्तुं न शक्यम्—अस्योत्तरम् ददत् नागेश:

*कथयति प्रक्रियावस्थायाम् अवयविनासह इत्संज्ञकवर्णानां दर्शनं भवत्येव—तदेव गृहीत्वा तेषां अवयवत्वं स्वीकार्यम् न तु छिन्नशाखस्य वृक्षस्य शाखाभावात् शाखानामवयवत्वं खण्डनीयं भवति।*

*एवं च सामीप्यसंबधवशात् लक्षणावृत्त्या इत्संज्ञकवर्णाः बहुव्रीहिप्रपत्तये अवयवाः मन्यन्ते चेत् तर्हि वुञ्छण् कठ० इत्यादिसूत्रे णकारः यथा छस्य समीपे तथैव कस्य अपि समीपे तिष्ठति अवएव अनया रीत्या बहुव्रीहिकरणेन यथा छप्रत्ययः णित् तथैव कठ इत्यपि णित् एवं च तत्रापि णित्त्वप्रयुक्तवृद्ध्यादीनि कार्याणि प्राप्तानि येषां विधानेन अनेकेषाम् अनिष्टप्रयोगाणामापत्तिर्दुर्वारा भविष्यति। एवमेव 'चुटू' इति सूत्रस्य अर्थकरणेऽपि सौलभ्यम् तत्र चुः टुः अवयवौ यदि न स्वीक्रियेते तर्हि तौ प्रत्ययस्य आद्यौ कथं भविष्यतः? आद्यौ अन्त्यौ च अवयवौ एव प्रायः भवतः प्रत्ययावयवत्वाभावे तयोः प्रत्ययाद्यावयवता बाधिता येन तदर्थकरणे क्लेशः। नागेशदृष्ट्या तु नेयमापत्तिः चुः टुः चवर्गः टवर्गः च जसादीनाम् टादीनाम् च सुप्प्रत्ययानाम् अवयवौ अतः तौ सरलतया प्रत्ययाद्यौ सिद्ध्यतः। एवमत्र विषये मूलपरिभाषेन्दुशेखरे तट्टीकासु च बहु उक्तं ततः जिज्ञासुभिर्द्रष्टव्यम्। इत्थं नागेशः प्रत्पयागमादेशादीनाम् संबद्धाः इत्संज्ञका वर्णाः तेषाम् प्रत्ययादीनाम् अवयवा एव इति महता कौशलेन सिद्धान्तितवान्।*

## अथ परिभाषाप्रकरणम्

### भूमिका।

संस्कृतव्याकरणवाङ्मस्य अनेकासु विधासु परिभाषा इत्याख्यापि एका विधा वर्तते। अस्यां विधायाम् स्वपूर्ववर्तिभिः लिखितवाङ्मये नागेशः क्वचित् दोषं दृष्टवान्। अतः सः युक्तिसिद्धदोषान् संकेत्य अस्मतुरतः तमवसरम् स्थापितवान् यदाधारेण वयं स्वकृतसमीक्षया तत्तत्स्थलीयनागेशीयकथने अथ च प्राचीनवैयाकरणकथने च चिन्तयितुं शक्नुमः। समीक्षणचिन्तनानन्तरम् वयं नागेशकथने स्वारस्यं स्वीकर्तुं प्रभविष्यामः।

नागेशोक्तप्रत्येकस्थलेषु अपितु तदुक्तेषु अनेकेषु स्थलेषु प्राचीनमते नागेशाभिमतयुक्तिसिद्धदोषप्रकाशनेन संस्कृतव्यकारणवाङ्मयस्य विशदता प्रामाणिकता ग्राह्यता च साधिता वर्तते। अनया दृष्ट्या परिभाषावाङ्मयस्य संस्कारकत्वेन सः अस्माकं वैयाकरणानाम् कृते सर्वथा अभिनन्दनीयः वर्तते।

## परिभाषा-विचार-जगति नागेशस्य महत्त्वपूर्णं स्थानम्

संस्कृतव्याकरणशास्त्रीये परिभाषावाङ्मये नागेशप्रणीतः परिभाषेन्दुशेखर इत्याख्यः ग्रन्थः कियत् महत्त्वमादधाति? इति तु तं ग्रन्थमधिकृत्य लिखितासु अनेकासु विद्वत्ताप्रचुरासु गंभीरासु टीकासु दृष्टिपातेनैव ज्ञातुं शक्यते। महामहोपाध्यायः अभ्यंकरोपाह्वः श्रीकाशीनाथशास्त्रिमहोदयः तत्त्वादर्शाख्यटीकासंवलितं नागेशरचितम् परिभाषेन्दुशेखरं संपादितवान्। तत्र संपादकपित्रा श्रीमता वासुदेवशास्त्रिणा अभ्यंकरेण एका संग्रहकारिका रचिता वर्तते। तस्याम् तासां परिभाषाणां परिचयः प्रदत्तः यासां व्याख्याने नागेशेन गंभीर-सूक्ष्मदृष्टिपूर्णायाः महत्याः स्वप्रतिभायाः उपयोगः कृतः। सहैव सः विद्वान् स्वतत्त्वादर्शटीकायाम् तानि स्थलानि (नागेशप्रतिपादितानि) संगृहीतवान् यानि अधिकृत्य प्राचीनवैयाकरणापेक्षया श्रेष्ठस्य ग्राह्यस्य च वर्ण्यविषयस्य सुप्रतिपादनवशात् समीक्षकाः नागेशम् महता गौरवेण नव्यमतप्रवर्तकम् घोषितवन्तः। नागेशभट्टेन सुव्याख्यातेषु परिष्कृतेषु प्राचीनवैयाकरणैः व्याख्यातेषु स्थलेषु एकं स्थलम् ईदृशममपि लभ्यते यत्र प्रदीपकारः कैयटः मुख्यव्यवहारे गौणव्यवहारे च वास्तविकं भेदम् उपेक्ष्य प्रासंगिकसमस्यायाः समाधानं प्रस्तुतवान्। नागेशः तत्रस्थले कैयटव्याख्यानगतम् इमम् दोषम् संकेतयन् कैयटात् भिन्नरीत्या प्रासंगिकसमस्यायाः समाधानं कृतवानेव। अथ च तत्रैव गौणमुख्यत्वगतभेदस्य सुस्पष्टं परिचयमपि अस्मत्पुरतः प्रकटितवान् नागेशः।

नागेशः कथयति 'इण्' गतौ इति धातोर्लिटि प्रथमपुरुषैकवचने 'इयाय' इति सर्वसम्मतरूपसिद्धिप्रक्रियायाम् इ+लिट् इत्यवस्थायाम् 'लिटि धातो०' इति सूत्रेण लिट्परकस्य अनभ्यस्तधातोः प्रथमैकाचः द्वित्वं भवति। परंतु अस्मिन् द्वित्वकार्ये बाधापि वर्तते एव। यस्या बाधाया निवारणं 'व्यपदेशिवदेकस्मिन्' इति परिभाषया शास्त्रकारैः कृतं वर्तते। बाधा तु इत्थम्—उक्तपाणिनिसूत्रेण द्वित्वरूपविधेयसिद्धये उद्देश्यकोटौ स्थितः धातोरवयवः प्रथमः 'एकाच्' अवश्यं भवेत्। तस्य एकाच्त्वाभावे सूत्रापेक्षितसामग्रीविरहेण द्वित्वकार्यं दुर्लभं स्यात्। अर्थात् यावत् स धातोरवयवः 'एकाच्' न सिद्ध्यति तावत् तमधिकृत्य तत्स्थाने द्वित्वं न सेत्स्यति इति वस्तुस्थितिः वर्तते। अयम् एकाच् इति शब्दः बहुव्रीहिगर्भितः अतः नियमतः अत्र कोऽपि समुदायः संबन्धी अन्यपदार्थः आवश्यकः यस्य घटकः

एकः अच् भवेत्। स च अन्यपदार्थः कः? इति जिज्ञासायाम् वर्णसमुदायः एव अन्यपदार्थः यस्य अवयवः एकः अच् भवेत्। एवं च गम् हन् इत्यादि धातुषु सारल्येन बहुव्रीह्यर्थो घटते। ततश्च द्वित्वादिना जगाम जघान इति रूपसिद्धिर्जायते।

परंतु प्रकृतस्थले इ+लिट् इत्यत्र बहुव्रीहिलभ्यस्य एकाच्त्वस्य प्राप्तिर्नास्ति। 'इ' इति विहाय अन्येषां वर्णानाम् सत्ता नास्ति फलतः वर्णसमु दायरूपस्य अन्यपदार्थस्य असत्त्वात् 'इ' इत्यंशः एकः अच् यस्य इत्येवंविधव्युत्पत्तिविषयो न भवति। अतः द्वित्वं कथम्? इत्येषा द्वित्वविधान बाधा जागर्तितराम्। अत्र धातुरूपः 'इ' इतिवर्णः एकाकी एव। इमम् धातुरूपम् एकम् अचम् अवयवत्वेन गृह्णीमस्तर्हि तदतिरिक्तः कः अवश्यंप्राप्तव्यः पदार्थः वर्णसमुदायरूपः अन्यपदार्थो वा विद्यते यमधिकृत्य अवयवस्वरूपे धातुरूपे इकारे एकाच्त्वं साधयितुं शक्यम्? इति प्रश्नः। एवं चात्र निमित्तरूपे (द्वित्वं प्रति) 'इ' इत्यंशे वर्णसमुदायस्य अन्यपदार्थस्य वा सर्वथा संबन्धाभाववशात् स्पष्टतया एकाच्त्वस्य अभावः वर्तते। फलतः द्वित्वकरणे बाधा अस्त्येव।

इमां बाधां दूरीकर्तुम् एव भाष्यकारः व्यपदेशिवदेकस्मिन् इति परिभाषायाः स्वीकारं करोति। तदनुसारेण यदि कस्यचित् निमित्तविशेषस्य हेतोः कुत्रापि कोऽपि व्यवहारो भवति तर्हि कदाचित् स्थलविशेषे तस्यैव निमित्तस्य अभावेऽपि स एव व्यवहारः क्वचिदन्यत्रापि कर्तुं शक्यः। इयं परिभाषा लोकन्यायसिद्धा वर्तते। अत एव शास्त्रीयाशास्त्रीयेषु उभयेष्वपि स्थलेषु मुख्यव्यवहारस्य कृते आवश्यकनिमित्तस्य अभावेऽपि मुख्यव्यवहारः यथा शास्त्रे तथा लोकेऽपि भवति। अर्थात् मुख्यव्यवहारस्य कृते अत्यावश्यक निमित्तसत्ताया अभावेऽपि मुख्यव्यवहारः भवति। अत एव अनुजरूपस्य निमित्तस्य सत्वे अग्रजस्य कृते अयं ज्येष्ठः इति व्यवहारः भवति परंतु कदाचित् एकस्यैव पुत्रस्य सत्तायाम् अनुजरूपनिमित्ताभावेऽपि तस्य एकस्यैव अयं ज्येष्ठः इति गौणव्यवहारः सिद्ध्यति।

इत्थं च व्यपदेशिवदेकस्मिन् इति परिभाषा लोकन्यायसिद्धा उपर्युक्तस्वभावा च इति विशिष्टां सूचनाम् दत्त्वा भाष्यकारः अस्याः परिभाषायाः साहाय्येन उपर्युक्तद्वित्वनिमितस्य एकाच्त्वस्य अभावेऽपि व्यपदेशिनाम् गम् हन् इत्यादीनां स्थले द्वित्वनिमित्तकस्य एकाच्त्वस्य सत्त्वात् द्वित्वं भवति इति कृत्वा क्वचित् इ+लिट् इत्यत्र तादृशद्वित्वनिमित्तैकाच्त्वस्य अभावेऽपि

गौणरीत्या द्वित्वादिकं संपादयति। अत्रेदमवश्यम् अवधेयम्—अस्य उपर्युक्तस्य गौणव्यवहारस्य लाभार्थम् स्थलान्तरे मुख्यव्यवहारस्य प्रसिद्धनिमित्तघटितस्य सत्ता परमावश्यकी। यदि क्वचिदपि स्थले मुख्यव्यवहारयोग्यनिमित्तानि न सन्ति तर्हि गौणव्यवहारस्य चर्चा एव लुप्ता स्यात्। अतएव गम् हन् इत्यादिषु द्वित्वनिमित्तम् एकाच्त्वम् सिद्धं दृष्ट्वैव कदाचित् तदभावेऽपि द्वित्वव्यवस्था भाष्यकारेण साधिता। इ+लिट् इत्यत्र गौणरीत्या द्वित्वे लिटस्तिपि णलि शेषप्रक्रियया इयाय इति सिद्ध्यति इति भाष्यकारस्य आशयः। अत्र मुख्यं तत्त्वम् इदमेव विवक्षितं वर्तते यत् गम् हन् इत्यादिषु भाष्यकारः मुख्यम् एकाच्त्वरूपम् निमित्तं पश्यति इयाय इत्यत्र गौणम् एकाच्त्वम् 'इ' इत्यत्र पश्यति।

अतएव तत्त्वादर्शे अभ्यंकरश्रीवासुदेवशास्त्री कथयति भाष्ये तु इयाय इत्यत्र व्यपदेशिवद्भावात् द्वित्वसिद्धिरित्युक्तम् इति नागेशः। अनया पंक्त्यापि जगाम जघान इत्यत्र मुख्यमेकाच्त्वं द्वित्वनिमित्तम् इयाय इत्यत्र गौणम् तत् भाष्यकाराभिमतम् इति नागेशसम्मतिः उपपद्यते एव। एवं गौणरीत्या 'इ' इत्यस्मिन्नंशे गम् हन् इत्यादिस्थलीयस्य मुख्यस्य एकाच्त्वव्यवहारस्य अतिदेशेन सः 'इः' एकाच् भूत्वा द्वित्वाधिकारी संपद्यते फलतः अग्रिमप्रक्रियया इयाय इति रूपसिद्धिर्जायते एव।

एवं चास्याः परिभाषायाः क्षेत्रम् अशास्त्रीयकार्येषु (एकपुत्रकदेवदत्तस्य पुत्रविषये अयं ज्येष्ठः अयं मध्यमः अयमेव कनिष्ठोऽपि इति व्यवहारेषु) इव शास्त्रीयकार्येष्वपि विद्यते। तथ्यमिदं प्रकटयन् नागेशः शास्त्रीयकार्येषु इयाय इत्यस्मिन्नुदाहरणे एकाच्त्वनिबन्धनद्वित्वसिद्धिं पश्यति इति स्पष्टप्रायमेव। तथा चात्र 'इ' इत्यंशे द्वित्वार्थम् परमावश्यकस्य एकाच्त्वस्य सिद्धिः गौणरीत्या सिद्ध्यति। तटस्थदृष्ट्या समीक्षणेन नागेशस्य अभिप्रायः युक्तिसिद्धत्वात् भाष्यानुमोदितत्वाच्च सुग्राह्यः अनुभूयते। यतः अत्र 'इ' इत्येकमक्षरं विहाय न कोऽपि धात्वंशरूपो वर्णः वर्णसमुदायो वा वर्तते यद्वशात् 'इ' इत्यंशे बहुव्रीहिघटितम् एकाच्त्वम् उपपद्येत। इयं स्थितिः अत्यन्तं स्पष्टैव।

अतएव गौणरीत्या मुख्यव्यवहारस्यैव साधिकायाः भाष्यकारेण अनुमोदितायाः अस्याः परिभाषाया उपयोगेन अत्र (इयाय इत्यत्र) गौणमार्गेण एकाच्त्वसिद्धिपरंपरा वैयाकरणसंप्रदाये प्रचलिता वर्तते। एवं स्थितौ सत्यामपि महामहोपाध्यायः प्रदीपकारः कैयटभट्टः इमाम् 'इ' इत्यंशे एकाच्त्वस्य बाधाम्

दूरीकर्तुम् एकाम् ईदृशीम् युक्तिम् प्रस्तुतवान् यया इदं स्पष्टं भवति यत् इदं स्थलम् (इयाय इति) गौणरीत्या प्राप्तस्य एकाच्त्वस्य विषयो नास्ति प्रत्युत अत्र तु इयाय इति पदस्य प्रकृतौ 'इ' इत्यंशे मुख्यरीत्या एकाच्त्वस्य सिद्धिर्भवति। एवं च भाष्यविरोधः।

## कैयटप्रतिपादितारीतिः

कैयटः विचारयति यः वर्णः अर्थवान् अस्ति तस्य अर्थस्य एकदा त्यागेन एकदा ग्रहणेन सः वर्णः एकाच्त्वव्यवहारस्य योग्यः भवति। 'इ' इति स्थले बहुव्रीहिगर्भितस्य एकाच्पदस्य अर्थः अतएव समन्वितो न भवति यतः तत्र अन्यपदार्थस्य उपस्थितिर्न वर्तते। अस्यां समस्यायाम् अस्य कैयटव्याख्यानस्य उपयोगेन इयं स्थितिः (वक्ष्यमाणा) पुरतः आयाति—'इ' इत्ययं धातुः अर्थवान् अस्ति। 'इ' इत्यस्य सः धात्वर्थः एकः पदार्थः 'इ' इत्ययं वर्णरूपः शब्दः द्वितीयः पदार्थः वर्तते। तयोः समुदायः अन्यपदार्थः अवयवश्च 'इ' इत्ययं धातुः वर्णरूपः अर्थत्यागवशात् यस्मिन् अर्थे समुदायरूपे अन्यपदार्थः बहुव्रीहिलाभाय घटकः वर्तते सः 'इः' एकाच् भवितुं शक्नोति। एवं रीत्या कैयटः प्रतिपादयति एकः 'इ' वर्णरूपः अवयवः अच् यस्य सः धात्वर्थः समुदायश्च सारल्येन एकाच् भवति। शब्दार्थयोरभेदव्यवहारस्य बहुशः प्रतिपादितत्वात् धात्वर्थस्थाने 'इ' इति धातुरपि एकाच् भवितुं शक्नोति इति कैयटाशयः संभवति। परंतु कैयटोक्ता इयं रीतिः नागेशस्य कृते अरुचिवहा इति वक्ष्यमाणेन व्याख्यानेन साध्यते।

भाष्यकारः 'भद्रं नो अपि वातय मनः' इति ऋचम् एकपदा ऋक् इति स्वीकरोति। तत्र अस्याः आनुपूर्व्याः भद्रं नो ...... मनः इति रूपाया यः अर्थः सोऽपि ऋक्पदार्थः आनुपूर्वी च ऋक्पदार्थः अनयोः समुदाय एव अन्यपदार्थः अत एव बहुव्रीहिसाधकः आनुपूर्वीरूपः अवयवश्च 'एकपदा ऋक' इति व्यवहारयोग्यः।

यतः एकः पादः यस्याम् इति व्युत्पत्तिः अत्र घटते। एकपादरूपा आनुपूर्वी एव ऋक् इति कथितम्। बहुव्रीहिसमन्वयाय भाष्यकारेण अर्थः आनुपूर्वीरूपः उभयमपि ऋक्पदवाच्यम् स्वीकृतम्। भद्रंनो ........ मनः इति रूपम् एकं पादं विहाय अत्र नान्ये पादाः दृश्यन्ते येषां दृष्ट्या अत्र बहुव्रीह्यर्थः संघटेत। एवं च अनया ऋचा संबद्धस्य अन्यस्य कस्यापि पादसमूहस्य अत्र अभावात् अन्यपदार्थः कः यस्य अवयवः इयम् ऋक्? इति प्रश्नः भाष्यकारस्य

पुरतः आसीत्। अस्योत्तरं ददत् भाष्यकारः वदति अर्थेन युक्तः व्यपदेशः इति। अर्थात् अर्थवशात् पदस्य तथा व्यवहारो भवति। एतेन निरूपणेन आनुपूर्व्या अर्थः आनुपूर्वी च समेत्य समुदायरूपः अन्यपदार्थः उभयावच्छेदेनैव ऋक्पदार्थः ज्ञातः भवति। स एव ऋक्पदार्थः यदा अनेकपदस्थलंविहाय एकपदवान् भवति तदा सा ऋक् वर्णार्थसमुदायरूपा ऋक् एकपदा कथ्यते। अन्यपदार्थस्य ऋगर्थ-समुदायस्य अन्यपदार्थत्वात् तदवयवत्वं अस्याम् आनुपूर्व्याम् अक्षुण्णम्। एवं च अन्यतरपदार्थः = वर्णः वा अर्थश्च एकाकी एव ऋक्पदार्थ एव नास्ति इति भाष्याशयः। एवं भूतापदार्थद्वयवती एव ऋक् यदि वक्तुः कृते अर्थनिरपेक्षा सती वर्णरूपा तिष्ठति तदा एकपदा ऋक् इति व्यवहारः सूपपाद्यो भवति। ऋक्पदार्थत्वेन केवलम् वर्णानुपूर्वी एव अभिमता भवेत् तर्हि इयमुपर्युक्ता व्यवस्था (भाष्योक्ता) न संभवति। एवं च नित्यसंबद्धम् पादार्थसमुदायम् अन्यपदार्थम् अन्यतरांशम् पादम् अवयवं च मत्वा क्रियमाणः बहुव्रीहिः कामपि समस्यां विना मुख्यरीत्या उपपद्यते। भाष्यकारः अनया रीत्या बहुव्रीहेरुपपत्तिम् एकपदा ऋक् इत्यत्र दर्शयन् गौणरीत्या अत्र साधिताया बहुव्रीहेर्नामापि न प्रकटयति। अतएव कैयटीया भाष्याधारिता रीतिः सर्वथा मुख्यव्यवहारविषयिणी परंतु अत्र भाष्यकारस्तु सिद्धान्ततः गौणरीत्या इयाय इत्यत्र कार्यसिद्धिं मनुते। एवं च कैयटः भाष्यकारस्य एतत्प्रकरणीय-गूढार्थग्रहणासमर्थः भाष्यविरोधी सिद्ध्यति। इति नागेशस्यः संकेतः।

प्रक्रियासिद्धिसंपादनमात्रेणैव कैयटपक्षः साधीयान् इत्यपि वक्तुं न शक्यते। यतः कैयटमतस्वीकारेण युक्तिसिद्धमुख्यव्यवहारगौणव्यवहारत्व विषयिणी अत्रत्या भाष्यचर्चा एकदृष्ट्या व्यर्था भवति। अतएव कैयटरीतिः नागेशदृष्टौ अरुचिवहा इति कथितप्रायमेव। भाष्यकारप्रदत्तोदाहरणे एकपदा ऋक् इत्यत्र उपरिदर्शितभाष्याशयदृष्ट्या मुख्यार्थलाभजन्यसूपपाद्य बहुव्रीहिसाध्यता न तु इयाय इत्यत्र। इयाय इत्यत्र तु भाष्यकारोऽपि गौणरीत्यैव एकाच्त्वसिद्धिं स्वीकरोति एकपदा ऋक् इत्यत्र कृतम् भाष्याशयम् अनुचित स्थाने योजयन् इयाय इत्यत्रापि मुख्यरीत्या बहुव्रीहिसाधनस्य कैयटप्रयासः वैयाकरणपरंपराविरुद्ध इत्यत्र नागेशस्य आग्रहः।

## यथोद्देशपरिभाषा

एतत्परिभाषाविवेचनप्रसंगे नागेशेन कैयटोद्धृतमतस्य परिष्कारः कृतः वर्तते। तद्यथा—अत्र क्ङिति चेति सूत्रे स्व-भाष्यप्रदीपे स्वमतविशेषं स्थापयन्

कैयटः इत्थं विवृणोति। सः कथयति—यथोद्देशपक्षे परिभाषासूत्रस्य प्रदेशे एव विधिसूत्राणि उपस्थित्य स्वसंख्यानुसारेण परिभाषाशास्त्राणाम् आवृत्तीः कारयित्वा तस्मिन्नेव परिभाषादेशे स्वार्थस्य उपस्थापनं फलतः प्रक्रियासिद्धिं च कुर्वन्ति। इममेव कैयटीयम् अभिप्रायम् प्रकाशयन् नागेशः स्वपरिभाषेन्दुशेखरे कथयति क्ङितिचेति सूत्रे कैयटेन यथोद्देशे प्रधानानि आत्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते इति उक्तम्।

एवमेव इको गुणवृद्धी इति सूत्रभाष्ये प्राप्तकैयटानुसारेण कार्यकालपक्षे परिभाषासूत्राणि स्वयं विधिशास्त्रप्रदेशे उपस्थित्य तैः सह एकवाक्यतापन्नानि भूत्वा तत्रैव विधिशास्त्रप्रदेशे स्वार्थबोधं कुर्वन्ति। अयम् कैयटीयः अभिप्रायः न च कार्यकालपक्षे ......... अदोषात् इति तत्रैव नागेशोद्धृतपंक्तीनामाशयस्य आलोडनेन निष्कृष्टो भवति।

अस्मिन् कैयटीये मते अस्य तथ्यस्य समधिका संभावना वर्तते यत् इदं मतं द्रढयति यत् यथोद्देशपक्षे कार्यकालपक्षे च उभयत्र क्रमशः विधिसूत्राणि तथा परिभाषासूत्राणि स्वदेशत्यागपूर्वकम् परिभाषादेशीयानि विधिसूत्रदेशीयानि च भूत्वा स्वार्थस्य उपस्थापनं कुर्वन्ति।

## नागेशोक्तखण्डनस्य महत्त्वम्

उपर्युक्तं कैयटमतम् तस्मिन् एव प्रदर्शिते रूपे संस्थाप्य परिष्कृत्य च नागेशः तत्रस्थितान् दोषान् अस्मत्पुरतः स्थापितवान्। यान् दोषान् विशदं समीक्ष्य वयं कथयितुं शक्नुमः धन्योऽयम् नागेशः यः इमान् दोषान् अस्मद्गोचरान् कृतवान्। अनेनैव तस्य विचारः अस्मिन्नध्याये निवेशितः वर्तते। यदि केचन समीक्षका इमामापत्तिं प्रकटयेयुः यत् नागेशदर्शितः कैयटस्य आशयः तथा नास्ति यथा दर्शितः तथापि अस्य अस्मदुद्धृतस्य नागेशीय विवेचनस्य महत्वं न ह्रसति यतः तस्यामपि स्थितौ इदं नागेशीयं मतं विवेचनं वा प्रस्तुतस्पष्टार्थकत्वेन महत्त्वशालि इति तु कथयितुं सुवचम्। एवमेव अत्र वर्णितम् नागेशीयविवेचनं संस्कृतव्याकरणवाङ्मये महत्त्वपूर्णम् इति मनसि दृढीकृत्य अग्रेसरामः। कैयटोक्तयोः उभयोरपि पक्षयोः खण्डने नागेशोक्ताः कोटिक्रमाः अत्यन्तं बुद्धिग्राह्याः वर्तन्ते। तत्र प्रथमा कोटिः इत्थम्।

कैयटोक्तप्रथमपक्षे विधिसूत्राणि स्वार्थबोधाय परिभाषादेशं प्राप्य तद्देशीयानि (अष्टाध्याय्याः अध्यायपादसूत्रसंख्यादृष्ट्या) भूत्वा स्वार्थं

बोधयन्ति। अस्यां स्थितौ वृक्षेभ्य इत्यत्र एत्वं दुरुपपादं भविष्यति। वृक्षप्रातिपदिकात् चतुर्थीपंचमीविभक्त्यन्यतरबहुवचने भ्यस्प्रत्यये बहुवचने झल्येदिति विधिसूत्रेण प्रातिपदिकान्तस्य अकारस्य एत्वं प्राप्तम्। एवमेव सुपि चेति उक्तस्य अकारस्य दीर्घत्वं प्राप्तम्। एत्वदीर्घत्वयोः प्राप्तिः युगपदेव भवति। इमे द्वे अपि सूत्रे स्वार्थबोधाय 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषासमीपं गत्वा तद्देशीये भविष्यतः। परिभाषादेशस्वीकारेण उक्तपरिभाषासाहाय्येन उक्तसूत्रयोः स्पष्टबोधोपपत्तौ जातायामपि उभे अपि सूत्रे तस्मिन्निति इति सूत्रदेशीये भवतः। अतः तयोः परस्परम् परत्वापरत्वव्यवस्था कथमपि न संभवति। एवं च एत्वस्य लाभाय बाधा समुत्पद्यते प्रतिद्वन्द्विनोः उभयोरपि सूत्रयोः तस्मिन्निति सूत्रदेशरूपैकदेशीयत्वात् परत्वकृतम् एत्वस्य प्राबल्यम् दुर्लभम् अत एव बाधा। अतएव च तयोरेकदेशत्वात् विप्रतिषेधे परम् इति सूत्रकृतव्यवस्था न संगच्छते तत्र। एवं च एत्वाभावात् शिष्टाभिमतस्य प्रयोगस्य सिद्धिः आकाशकुसुमसमाना स्यात्। इत्ययमस्ति दोषः कैयटीये व्याख्याने इति नागेशः स्मारयति।

एवमेव कार्यकालपक्षे परिभाषासूत्राणि स्वयमेव विधिसूत्रदेशं प्राप्य तत्र तद्देशीयानि भूत्वा स्वार्थबोधं कुर्वन्ति इति कैयटीये मते स्वीकृते सति तस्मिन्नितिसूत्रस्थभाष्येण सह विरोधः उपजायते। भाष्याशयस्तु इत्थम्—'ङमोह्रस्वादचि ङमुण् नित्यम्' इति सूत्रे तस्मिन्निति० तस्मादित्युत्तरस्य चेति उभयोः परिभाषासूत्रयोः प्रवृत्तियोग्यानि लक्षणानि विद्यन्ते। परंतु अनयोः परिभाषासूत्रयोः परस्परं विरुद्धार्थोपस्थापकतावशात् उक्तसूत्रयोर्मध्ये अन्यतरस्यैव प्रवृत्तिः (उपस्थितिः) संगमनम् वा न्याय्यम्। अतएव परत्वात् पंचमीनिर्देश एव बलवत्तरः इति भाष्याभिप्रायः। अनेन भाष्याशयेन सह स्पष्टमेव कैयटमतस्य विरोधः। यदा इमे द्वे अपि सूत्रे तस्मिन्निति तस्मादिति० इति रूपे ङमोह्रस्वादचि इति सूत्रदेशीये अर्थात् समानदेशीये वर्तेते तर्हि तयोः परत्वापरत्वव्यवस्था सर्वथा असंभवा। इत्थं भाष्यविरोधः स्पष्ट एव।

## अस्य आक्षेपस्य कैयटपक्षात् उत्तरम्

स्वस्य पूर्वोक्तमाशयं सुरक्षितं स्थापयन् कैयटः वृक्षेभ्यः इत्यत्र परत्वापरत्वव्यवस्थाभंगस्य उत्तरं दातुं शक्नोति। तदनुसारेण अष्टाध्यायीपाठकृतम् एव सूत्रपौर्वापर्यम् कैयटस्य अभिप्रेतं वर्तते। तदनुसारेण बहुवचने झल्येदिति तथा च सुपिचेति सूत्रद्वयम् स्वार्थस्य उपपत्तये अर्थात्

सूत्रार्थस्य सुस्पष्टतया लाभाय कामं परिभाषादेशं गच्छेत् परंतु तयोः प्रत्येकम् सूत्रम् पाठदेशे आधारितम्। तयोः परत्वापरत्वम् अक्षुण्णमेव वर्तते। यस्य आश्रयणेन विप्रतिषेधे परं कार्यमिति सूत्रप्रवृत्त्या एत्वस्य बलवत्तरत्वात् एत्वसिद्धिर्भवत्येव।

एवमेव तस्मिन्निति० तथा तस्मादिति० इति परिभाषासूत्रे ङमोह्रस्वादचि एतत्सूत्रदेशीये भूत्वा केवलं स्वार्थबोधं कर्तुं शक्नुतः परंतु तयोः अष्टाध्यायीगतपाठदेशे परस्परं भेदः अस्त्येव। तमेव भेदम् आश्रित्य परत्वापरत्वव्यवस्थायाः स्वीकारात् भाष्यकारेण अत्र पंचमीनिर्देशस्य बलवत्तरत्वं घोषितम्। येन इष्टप्रयोजनसिद्धिर्भवति। ईदृश्या व्यवस्थया उक्त कैयटविवेचने दोषाभावः आपाततः दृश्यते एव तथापि अस्मिन् मते पूर्वपंक्तिषु आपादिता समस्या तु आयात्येव। कामं सा समस्या अनया कैयटपक्षीयरीत्या समाहिता भवति परंतु यत्र ईदृशी समस्या एव नोत्पद्यते अथ च यत्र उत्पन्नसमस्यायाः समाधानश्रमः अपि नास्ति तस्मात् नागेशमतात् प्रदर्शितसमस्यायाः समाहितत्वेऽपि संभावितापत्तिरूपाक्षेपः समाधानश्रमपूर्णम् कैयटमतम् अरुचिकरम् इति अस्ति अस्मद्विवेकः।

## अत्र नागेशमतम्

नागेशः कथयति यत् भाष्यतत्त्वविद् विचारकः यथोद्देशपक्षे विधिसूत्राणाम् परिभाषादेशे साक्षात् उपस्थितिम् न मन्यते। अपि तु प्रक्रियासाधकः छात्रः तत्र विधिसूत्रार्थस्य स्मरणम् (गुरुणा उपस्थापितस्य कतिपयविधिसूत्रार्थस्य स्मरणम्) एव मन्यते। तथैव कार्येण काल्यते स्वसन्निधिं प्राप्यते इति कार्यकालः इति पक्षे अनया व्युत्पत्त्या विधिसूत्राणि स्वार्थस्य स्पष्टबोधाय परिभाषासूत्राणाम् आवाहनं कुर्वन्ति। अर्थात् उभयोरपि पक्षयोः परिभाषासूत्राणाम् बोधः स्वदेशे एव भवति। यथोद्देशपक्षे परिभाषादेशे विधिसूत्रार्थबोधः इति पक्षेऽस्य अर्थः तत्रैव परिभाषादेशे विधि सूत्रार्थस्य स्मरणमात्रं भवति इतिरूपः यानि विधिसूत्राणि तत्र स्मरणप्रक्रियां न लभन्ते तानि अवशिष्टानि विधिसूत्राणि कार्यकालपक्षम् आश्रयन्ति। तत्र परिभाषासूत्रार्थः अवशिष्टविधिसूत्राणाम् बोधसमये स्मृतः सन् तेषामर्थपूर्तिं करोति। अस्मिन् मते वृक्षेभ्य इत्यत्र प्रदर्शिता वा आपादिता वा एत्वाभावभीतिः स्वयमेव दूरीभवति।

यतोहि अत्र मते विधिसूत्राणि परिभाषासूत्राणि च स्वदेशस्थानि एव परार्थसंपादनप्रक्रियां निर्वाहयन्ति। अत: तेषां देशदृष्ट्या परत्वापरत्वव्यवस्था सुलभा। एवं वृक्षेभ्य: इत्यत्र एत्वसिद्धि: बहुवचने झल्येत् इति परसूत्रदृष्ट्या जायते। एवमेव ङमोह्रस्वादचि इत्यत्र कैयटमते इव परत्वापरत्वव्यवस्थाभंगस्य शंका एव नोत्पद्यते यत: तत्र द्वे अपि परिभाषे स्वदेशस्थे एव अर्थबोधिके। एवम् एकदेशस्थत्वात् तयो: परत्वापरत्वव्यवस्थाभंगस्य शंका अस्मिन् मते नायाति यत: उभयोरपि परिभाषयो: स्वस्वदेशे एव स्थानं वर्तते तद्दृष्ट्या अत्र पंचमीनिर्देशस्य परत्वात् इति भाष्यकृदुक्तम् परत्वम् पंचमीनिर्देशस्य परत्वम् अञ्जसा सिद्ध्यति। एतद्दृष्ट्या उत्पन्नापत्तिसमाधानपूर्णकैयटमतापेक्षया समाधेयापत्तिदोषेण सर्वथा शून्यम् नागेशप्रदर्शितम् मतम् कस्य समीक्षकस्य मनसि नागेशीयं महत्त्वं नोत्पादयेत्।

## नागेशमतसमर्थने भाष्यबलम्

षष्ठी स्थाने योगा इति भाष्ये त्रय: अधिकारा: वर्णिता: सन्ति। तत्रैक: प्रदीपवत् अधिकार:। सुप्रज्ज्वलित: प्रदीप: स्वस्थाने स्थित्वा एव स्वस्थानं प्रकाशयन् सकलमपि गृहम् स्वप्रभया प्रकाशयति। अस्मिन् प्रसंगे स: प्रदीप: स्वस्थानं न त्यजति। स्वदेशस्थ एव स: सर्वगृहप्रकाशनकार्यं करोति। तस्य प्रदीपस्य कृते प्रसर्पणस्य आवश्यकता नास्ति इति भाष्यकाराशय: एवं विधमधिकारं प्रकटयति स:। इदमुपमागर्भितम् भाष्यवचनम् परिभाषारूपाणि अधिकारसूत्राणि मनसि निधायैव उक्तम्। इत्थं स्पष्टीकरणं कैयटेन कृतं वर्तते।

## नागेशीयं सुस्पष्टं मतम्

अस्मिन् भाष्ये नेदं स्पष्टम् यदयमभिप्राय: यथोद्देशे एव वा कार्यकाले एव ज्ञातव्य: इति। अतएव उभयपक्षेऽपि परिषासूत्राणां प्रदीपप्रभा इव अधिकार: विधिसूत्राणि प्रकाशयति। इत्थं वयं पश्याम: उभयोरपि पक्षयो: परिभाषाणां स्वार्थबोध: स्वदेशे एव भवति प्रदीपसंसर्पणाभाववत्। अथ च तस्य पूर्णतायै विधिसूत्रार्थस्य अत्र स्मरणं जायते अथवा परिभाषार्थस्य स्मरणं विधिसूत्रे भवति यस्य विधिसूत्रस्य स्वदेशस्थस्यैव बोध: भवति क्रमश: यथोद्देशपक्षे कार्यकालपक्षे च। अनेन नागेशीयसिद्धान्तेन एकत: कैयटपक्षस्थितप्रदर्शितदोषसंभावनापि दूरे तिष्ठति अथ च परिभाषासूत्रणि

अधिकारपदवीं संस्थाप्य भाष्यकारेण तेषां प्रवृत्तिः विधिसूत्रार्थप्रकाशने तथैव यथा प्रदीपप्रभायाः गृहप्रकाशनप्रवृत्तिरिति संकेतितम्। साऽपि प्रवृत्तिः अस्मिन् नागेशाभिमते मतान्तरापेक्षया अधिकं संगच्छते।

परंपराशैलीमनुसृत्य अध्यापनकुशलानाम् केषांचिद् विपश्चिताम् अयं विचारः श्रूयते यत् नागेशः अस्मिन् प्रसंगे कैयटविचारखण्डनाभि-निवेशग्रस्ततया कैयटमतम् इत्थम् उपन्यस्य तत् खण्डितवान्। वस्तुतः कैयटस्य आशयः नागेशोल्लिखितकैयटमतात् भिन्नः आसीत्।

व्यक्तिगतविचारदृष्ट्या अस्मद्बुद्धौ इदमेव आयाति यत् कैयटपक्षस्य समर्थकेन नागेशे कृतः अयम् पूर्वोक्तः युक्तिविरुद्धः आक्षेपः प्रमाणरहितश्च तथापि उक्तविदुषाम् कथने सत्यांशस्वीकारेऽपि अस्य नागेशीयमतस्य महत्त्वं न ह्रसति यतः कैयटस्थाने अन्यः कोऽपि कैयटमतत्वेन नागेशोल्लिखितकैयटविचारस्य समर्थकः स्यात् तर्हि तत्कृते निर्दोषम् नागेशीयम् उत्तरम् आवश्यकम् सिद्ध्यति। अथवा अस्य विषयस्य स्पष्टार्थबोधकम् समुचितसिद्धान्तस्य पोषकं च अस्ति नागेशमतम् इति कृत्वा प्रत्येकं स्थितौ अयम् नागेशीयवाग्विलासः अभिनन्दनीयः एव।

## भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषासत्तया प्राप्ताया आपत्तेर्निरासे नागेशस्य महत्त्वम्।

यदा कदा ईदृशी अपि परिस्थितिः उत्पद्यते यस्याम् परिस्थितौ प्रमाणसिद्धायाः परिभाषायाः प्रवृत्तिः प्रसारः वा विनियोगः शिष्टस्वीकृतप्रयोगे अत्यावश्यकः सन्नपि स परिभाषाप्रसरः अनभीष्टेषु अतिरिक्तेष्वपि प्रयोगेषु प्राप्तो भवति येन केषुचित् अपेक्षितेष्वपि प्रयोगेषु प्रक्रियासिद्धिसंबन्धिनी बाधा उत्पद्यते।

इमामापत्तिं दूरीकर्तुम् तस्याः प्रमाणसिद्धायाः परिभाषायाः सर्वथा त्यागस्तु नोचितः यतः आपत्तिग्रस्तस्थलातिरिक्तप्रक्रियाकार्येषु तस्याः अपरिहार्या आवश्यकताऽपि वर्तते एव। तथापि स्थलविशेषे तस्या अनपेक्षितः प्रसारः प्रवृत्तिर्विनियोगो वा अवरोधनीयः भवति येन अनिष्टप्रयोगसंभावनापि दूरीभूता स्यात्। नागेशः भाव्यमानेन सवर्णानां ग्रहणं नेति इमां परिभाषाम् स्वपरिभाषेन्दुशेखरग्रन्थे उपस्थापितवान्। इयं परिभाषा 'अणुदित् सवर्णस्य०' 'ज्यादादीयसः' इत्यनयोः सूत्रयोः भाष्ये भाष्यकारेण ज्ञापकसिद्धात्वेन स्वीकृता वर्तते।

## अस्या अवश्य-ग्राह्यता

अस्याः सत्तावशेनैव 'त्यदादीनामः' इति सूत्रेण 'इदम्' इतिशब्दगतमकारस्य स्थाने विधीयमानः अकारः स्थानेऽन्तरतम इति परिभाषासहयोगेन अनुनासिको न भवति। यतः अत्र स्थानिनः मकारस्य आभ्यन्तरताल्वादिदृष्ट्या अनुनासिकः अकारः आदेशरूपः अन्तरतमः वर्तते। परंतु इयं परिभाषा भाव्यमानस्य विधीयमानस्य अकारस्य सवर्णग्राहकतां निषेधति। अयंच मस्थाने विधीयमानः अकारः, अतएव त्यदादीनामः इत्यत्र उच्चरितात् प्रतिपदोक्तात् निरनुनासिकात् अकारत् भिन्नं सवर्णम् अनुनासिकम् न गृह्णाति। एवं च अनुनासिकस्य अकारस्य आदेशत्वेन आपाद्यमानस्य चर्चैव समाप्नोति अस्याः परिभाषायाः प्रवृत्तिवशात्।

एवम् इयं प्रमाणसिद्धा परिभाषा, निरनुनासिकस्य अकारस्य स्थापनपूर्वकम् अभीष्टशिष्टप्रयोगाय अनिवार्या सिद्धयति। तथापि सा परिभाषा अनपेक्षितप्रसारवशात् एकाम् समस्यामपि उत्पादयति। यथा चोः कुः इति पाणिनिसूत्रेण चवर्गस्य स्थाने कवर्गस्य आदेशत्वेन विधानं भवति। अत्र चु शब्दस्य अर्थः चवर्गः (च् छ् ज् झ् ञ् इति रूपा वर्णाः) इति भवति। अणुदित्सवर्णस्येति सूत्रेण उदितः सवर्णग्राहका भवन्ति। अत्रापि षष्ठीप्रकृतिचुशब्दः उदित् अतएव सवर्णान् छादीन् चादीन् वा गृह्णाति। अणुदितिसूत्रबलात्। एवं च चुशब्दात् च् छ् ज् झ् ञ् इति रूपा वर्णाः सवर्णाः (तुल्यास्यप्रयत्नम् इति अनुशासनबलेन) सिद्धयन्ति। एषां स्थानेः कुः भवति इति सूत्रनिर्देशः। उक्तरीत्या उदित् कुः सवर्णान् गृह्णाति, एवं स्थानिनः पंच आदेशाश्च पंचैव इति कृत्वा यथासंख्यमनुदेशः समानामिति सूत्रबलेन चस्य स्थाने ककारः छस्य स्थाने खकारः एव भवतः।

परंतु भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषायाः अत्र (कु विषये) प्रवृत्तये आवश्यकसकलतथ्यसत्तावशात् आदेशरूपे विधेयरूपे सवर्ण ग्राहकतानिषेधात् चस्य स्थाने कः छस्य स्थाने खः इत्यादि सवर्णानां विधेयता दुर्लभा भविष्यति। येन अपेक्षितप्रयोगसाधने क्लेशः उत्पद्यते।

एवं चेयम् परिभाषा या, इयम् इत्यादिप्रयोगसिद्धये सर्वथा अपेक्षिता सती सर्वथा ग्राह्या अतएव अत्याज्या भवति। तथापि कुशब्दे विधीयमानतावशात् अप्रत्ययः इति निषेधात् कवर्गस्य सवर्णानां वर्णानां ग्रहणे

बाधा स्पष्टैव। एवं चेयम् परिभाषा स्थलविशेषार्थम् उपयोगिनी आवश्यकी वा इति स्वीकारेऽपि तस्याः अतिरिक्तप्रसारवशात् 'कु' शब्दजन्य सवर्णोपस्थितिबाधारूपसमस्यायाः उत्पादिका सिद्ध्यति।

## समस्या-निवारकम् दीक्षित-मतम्

नागेशः अस्याः समस्यायाः समाधानाय नव्यविचारकैः दीक्षितदिभिः प्रदर्शिताम् युक्तिम् पूर्वपक्षत्वेन उद्धृत्य ततः तत्र मते स्वस्य अरुचिवशात् स्वीयं निर्दुष्टम् समाधानम् उपन्यस्तवान्। नागेशेन प्रयुक्तः नव्य इति शब्दः दीक्षितमेव संकेतयति इति परिभाषेन्दुशेखरस्य अनेकटीकामर्मज्ञैः महामहोपाध्याय श्रीवासुदेवशास्त्रिभिः अभ्यंकरोपाह्वैः स्वीयतत्त्वादर्शटीकायाम् कथितम्। अथ च परिभाषेन्दुशेखरस्य महाराष्ट्र्याम् भाषान्तरकारकैः जस्टिम वांडेगांवकर महोदयैः च एतत् (दीक्षितमेव नव्यत्वेन नागेशः सकंतेयति इत्येतत् तथ्यम्) स्वव्याख्याने साधितं वर्तते। तत्र न्यायाधीशमहोदयः कथयति नागेशः मतमिदं स्वविरुद्धमिति हेतोः तिरस्कारदृष्ट्या उपालम्भभाषायाम् नव्याः इत्यारंभेण दीक्षिततदनुयायिनश्च संकेतितवान्। भाष्यकारापेक्षया नवीनतया दीक्षितमतम् नव्यमतं भवितुं शक्नोति। एवं च नव्यमतवादिनाम् दीक्षितस्य अथ च तत्समर्थकानां च तात्पर्यमित्थं निरूपितम्। इदं मतम् मूलपरिभाषायाम् परिवर्तनेन ताम् 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इतिस्वरूपे स्थापयित्वा अणतिरिक्तभाव्यमानानां विषये सवर्णग्राहकतायाः निषेधं न करोति। एतदेव अभिप्रेत्य दूरदर्शिभिः सूत्रकारैः चोः कुः इति सूत्रं रचितम् तत्र स्पष्टमेव विधेये सवर्णग्राहकता दृश्यते। अन्यथा कुस्थाने अन्यं कंचन उपायम् कुर्यात् सूत्रकारः। एवं च अस्याः परिभाषायाः स्वरूपपरिवर्तनेन त्यदादीनामः इति सूत्रस्य लक्ष्यम्ः इमम् इत्यपि सिद्ध्यति सहैव चोः कुः इत्यत्र साभिप्रायम् उदित्करणवशात् बुध्यमाने सवर्णे न कापि विप्रतिपत्तिः तत्र अण्त्वाभावात्। इत्थं दीक्षितमतं सर्व साधयति। इदं नव्यमतत्वेन प्रदर्श्य तद्दोषं दर्शयति नागेशः वक्ष्यमाणरीत्या। ततश्च प्रसंगेऽस्मिन् स्वमतं स्थापयति नागेशः।

## नागेशस्य अस्मिन् नव्यमते (दीक्षितमते) अरुचिः।

उक्तसमस्यानिवारणे दीक्षितादिनव्यमतानुसारेण भाव्यमान० इत्यादिपरिभाषायाः रूपपरिवर्तनस्य उपायत्वेन स्वीकृतिरस्ति। परंतु एतत्परिवर्तनाभावेऽपि सर्वकार्यं सेत्स्यति इति नागेशाभिप्रायः। स चेत्थम्

व्याख्यानविशेषेण चोः कुः इत्यत्र साभिप्रायम् उदित् 'कु' शब्दोच्चारणसामर्थ्येन परिभाषोपेक्षापूर्वकम् विधेयेऽपि सवर्णग्राहकता सूत्रकारमते स्पष्टैव। यदा सूत्रकारः स्वयमेव ज्ञापयति यत् अत्र अप्रत्ययः ज्यादादीयसः इत्युभयत्र भाव्यमानः प्रत्ययः आगमः आदेशो वा सवर्णान् न गृह्णाति अथ च भाष्यकारोऽपि 'अप्रत्ययः' इत्यंशेन ज्यादादीयसः इति दीर्घग्रहणरूप-सूत्रकारकार्येण उक्तार्थमेव ज्ञापयति तथापि स एव सूत्रकारः चोः कुः इति सूत्रे विधेयघटिताम् ताम् सामग्रीम् निदधाति यया अणुदित्सूत्रसाहायेन विधेयसंबद्धसवर्णानां ग्रहणं स्यात् तदा एतत्स्वीकारे (विधेयोऽपि कुः सवर्णान् गृह्णाति इति स्वीकारे) न कोऽपि संकोचः कर्तव्यः यत् सूत्रकारस्य मनसि स्वज्ञापितनियमानाम् क्वचित् सफलानामपि चोः कुः इति सदृशसूत्रे सविशेषम् विनियोज्यताया कठिनता वर्तते एव। यदि चोः कुः इति स्थलेऽपि अनया परिभाषया विधेये सवर्णग्राहकता सूत्रकारस्य अभीष्टा न स्यात् वर्हि 'कु' इति शब्दे उकारस्य सवर्णग्राहकतातिरिक्तकार्यशून्यत्वात् एवंभूतम् उकारघटितम् अक्षरगौरवदोषपूर्णम् परस्परविरुद्धतात्पर्योपस्थापकम् ककारम् किमर्थं पठेत्। तत्स्थलं तु अन्यदेव यत्र विधेयस्य भाव्यमानसवर्णग्राहकतातिरिक्तः अभिप्रायः स्पष्टः अथ च प्रक्रियासाधको भवेत्। यथा त्यदादीनामः अत्र त्यदादीनाम् शब्दानाम् अन्त्यस्य स्थाने अकारकरणम् मुख्यं प्रयोजनं वर्तते अनुषंगतः तत्र अणुदित् सूत्रप्रवृत्या अष्टादशानाम् अकाराणाम् प्राप्तिः अतः तन्निवृत्तये परिभाषायाः सत्ता समीचीना नेयं स्थितिः चोः कुः इत्यत्र उक्तव्याख्यानवशात्।

एकत्र प्रत्ययागमादेशानां सवर्णानां विधानम् सूत्रान्तरैः प्राप्तम् तस्य निषेधातिरिक्तं नान्यत् कार्यमिति अप्रत्ययः इत्यंशेन ज्ञाप्यते परंतु चोः कुः इत्यत्र एतत्परिभाषाविरुद्धम् विधेयस्य कवर्गस्य ग्रहणमेव मुख्यं प्रयोजनम् सूत्रकारस्य इत्यस्ति त्यदीदानामः चोः कुः इत्यनयोर्मध्ये परिभाषाप्रवृत्तिदृष्ट्या (भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषाप्रवृत्तिदृष्ट्या) विषयेभेदः। एतत्सर्वमभिप्रेत्य नागेशः इमम् इत्यत्र अस्याः परिभाषायाः प्रवृत्तिम् चोः कुः इत्यत्र सविशेषम् उदित्करणम् यद्वशात् अत्र उक्तपरिभाषाया अप्रवृत्तिम् सूत्रकारसम्मताम् पश्यति कथयति च चोः कुः इत्यादौ भाव्यमानेनापि सवर्णग्रहणम् विधेये उदिदुच्चारणसामर्थ्यात्।

अस्त्वेतत् समीक्षकदृष्ट्या वयम् तथाकथितनव्यानाम् दीक्षितप्रभृतीनाम् विदुषां परिभाषास्वरूपपरिवर्तनरूपोपायम् अथ च नागेशदृष्ट्या व्याख्यानलभ्य-

सूत्रकाराभिमतम् एतत्परिभाषाया: अप्रवृत्तिरूपोपायम् च उक्तसमस्याया: निवारणाय दृष्ट्वा विचारयाम: कतरस्मिन् लाघवं सारल्यम् चेति ?

यावत् अन्याभि: युक्तिभि: प्रक्रियानिर्वाहो जायते तावत् शिष्टाभिमतप्रयोगप्रक्रियानिर्वाहाय सूत्रवार्तिकादिषु स्वरूपपरिवर्तनोपाय: नाश्रयणीय: । सूत्रस्य वार्तिकस्य भाष्यपंक्तेश्च आनुपूर्व्या अपि स्वीयं महत्त्वं वर्तते एव ।

यतोहि संस्कृतव्याकरणशास्त्रस्य प्रकृति: शब्दप्रधाना वर्तते । शब्देषु तदैव परिवर्तनं विधेयम् यदा तत्परिवर्तनातिरिक्तम् अन्यत् किमपि उपायजातम् नोपलभ्यते । यदि समीक्षका: वाचकाश्च तथ्यमिदं स्वीकुर्यु: तर्हि ते अवश्यम् अस्य विचारस्य समर्थका भवेयु: यत् भाष्यकारेण स्वीकृतपरिभाषाया: आनुपूर्वीं रक्षन् वैयाकरण: शिष्टप्रयोगप्रक्रियानिर्वाहम् कर्तुं शक्नोति चेत् आनुपूर्वीपरिवर्तनापेक्षया युक्त्यन्तराश्रयणमेव तस्य कृते श्रेय: इति । अनया दृष्ट्या दीक्षितापेक्षया इदं नागेशीयं विवेचनम् तर्कपूर्णम् संस्कृत व्याकरणच्छात्रोपयोगि च मतान्तरापेक्षया आधिक्येन वर्तते । यथा तत्त्वादर्शकार: विशदयति तथा विचारेण नागेशस्य अभिप्राय: अस्मिन् प्रसंगे अयमेव वर्तते यत् दीक्षितादिविद्वांस: इमां परिभाषां रूपान्तरेण सह (निर्दिष्टाण्घटितरूपाम्) पठन्ति । अनेनैव तथ्येन सह इदमपि बोध्यम् यत् सीरदेव: प्राचीन: परिभाषाशास्त्री स्वपरिभाषावृत्तिग्रन्थे तथाकथित दीक्षितादिसम्मतपाठस्य उपयोगं करोति । अत: नागेशप्रतिपादिता दीक्षितमतस्थिता अग्राह्यता सीरदेवस्य कथनेऽपि सिद्ध्यति । अनया दृष्ट्या सीरदेवात् ततोऽपि पूर्ववर्तिदीक्षितादिविद्वद्वैयाकरणै: स्वीकृतात् अस्मात् परिभाषारूपपरिवर्तनस्वरूपपरिष्कृतात् पक्षात् नागेशप्रतिपादनरीतिरेव ज्यायसी इत्यस्ति अस्माकं विश्वास: ।

## विप्रतिषेधे परं कार्यम् इत्याश्रित्य द्वे परिभाषे

विप्रतिषेधे परं कार्यम् इति सूत्रस्य प्रवृत्ति: यस्यां स्थितौ भवति तां प्रति विचारविशेषेण अयं निष्कर्ष: आयाति यत् इदं सूत्रम् नियमसूत्रम् विधिसूत्रं चेत्युभयस्वभावकं वर्तते । सूत्राणां षट्सु प्रकारेषु इदम् उक्तप्रकारद्वये स्थापनीयमिति समीक्षया लभ्यते । अत्र भाष्यकारस्य आशय: लोकन्यायश्च इदमेव तथ्यम् साधयति यस्य स्पष्टता वक्ष्यमाणविवेचनेन सुविशदं भवति ।

असंकीर्णलक्ष्याणि संकीर्णानि च तानि प्रथमं बुद्ध्वैव एतद् विवेचनं बुद्धिग्राह्यं संभवति। अतः प्रथमम् उभयविधलक्ष्याणां स्वभावः एव विमृश्यते। द्वे सूत्रे यदा परस्परं निरपेक्षस्थितौ स्थित्वा पृथक् पृथक् लक्ष्येषु प्रवर्तेते तदा तानि लक्ष्याणि असंकीर्णानि अभिधीयन्ते। असंकीर्णस्थितौ पृथक् पृथक् स्थितयोः उभयोरपि निरपेक्षयोः लक्ष्ययोर्मध्ये प्रत्येकम् अन्यतरस्य सिद्धिः भवति परंतु संकीर्णानि लक्ष्याणि तान्येव येषां सिद्धयै उभे सूत्रे युगपत्प्राप्नुतः ययोः प्रवृत्तये समानम् उद्देश्यम् निमित्तभूतम् विद्यते अथ च ये सूत्रे परस्परं विरुद्धं कार्यं विधेयं वा निष्पादयतः।

तत्र असंकीर्णलक्ष्येषु चरितार्थे द्वे सूत्रे यदा कस्मिंश्चित् संकीर्णस्वभावके लक्ष्ये युगपत् प्राप्नुतः तदा समस्या उत्पद्यते—समस्या च—एवंविधयोः असंकीर्णलक्ष्ययोः चरितार्थयोः इदानीम् संकीर्णलक्ष्ययोः युगपत्प्राप्तयोः परस्परं विरुद्धकार्यकारिणोः सूत्रयोर्मध्ये कस्य कृते प्राथमिकता स्वीकार्या अथवा उक्तसूत्रयोर्मध्ये कस्य प्राबल्यं स्वीकार्यमिति सन्देहस्वरूपा एव समस्या उत्पद्यते। भाष्यकारेण इमां परिस्थितिम् पर्यालोच्य तथ्यद्वयम् प्रकाशितम्। तदनुसारेण उपर्युक्तपरिस्थितौ तृजादिवत् शास्त्रद्वयप्रसंगः अर्थात् पर्यायापत्तिः अथवा अनिश्चयात्मिका स्थितिः इति तथ्यद्वयं समुपस्थितं भवति वैयाकरणानां पुरस्तात्।

## भाष्यसम्मततृजादिदृष्टान्तेन पर्यायापत्तेः प्रस्तावना तत्खण्डनं च।

भाष्यकारः कथयति उक्तपरिस्थितौ समस्यां निराकर्तु वयं विचारयितुम् शक्नुमः यत् ऋषिप्रणीतत्वात् प्रामाण्यं तु उभयोरपि सूत्रयो र्वतते एव। अतः बलं तु उभयोः समानम् एव। अतएव धातोरग्रे कर्त्रर्थक-ण्वुल-तृजरूपयोः उभयोः प्रत्यययोः विधेयत्वेन प्रसंगः उपस्थितो भवति अथ चात्र द्वाभ्यामपि प्रत्ययाभ्याम् साध्यशब्दयोः रूपम् परस्परं भिन्नं भवति तदा तत्र पर्यायेण उभयोरपि विधेययोः सिद्धिः शास्त्रसम्मता। अतएव कारकः कर्ताचेति उभयशब्दरूपम् शिष्टाभिमतं सिद्धयति।

सर्वथा इममेव दृष्टान्तमनुसृत्य उक्तसमस्यायाः समाधाने पर्यायतः उभयोरपि सूत्रयोः प्रवृत्तिः संभवति। एवं कथयित्वापि भाष्यकारः उभयोरपि सूत्रयोः (उक्तसमस्याविषये) प्रवृत्तिम् अभीष्टाम् न मन्यते यतः तस्यां स्थितौ अन्यतरसूत्रप्रवृत्तिजन्यायाः अनिष्टप्रयोगोत्पादकतायाः संभावना स्पष्टैव। अत

एव तृजादिदृष्टान्ताधारितपर्यायापत्तिम् आपत्तिरूपाम् दर्शयित्वा भाष्यकारः परामृशति यत् अभीष्टलक्ष्यस्य पूर्तिः संभवति चेत्तदा उक्तविरोधे परसूत्रम् एव प्रवर्तेत न तु पूर्वसूत्रम्—इमं नियमं विप्रतिषेधसूत्रेण माध्यमेन सूत्रकारः करोति।

"नियमः पाक्षिके सति" अस्यां कारिकायां नियमाख्यतथ्यस्य स्वरूपमपि इदमेव ईदृशमेव अभिव्यक्तं वर्तते। तदनुसारेण उभयोर्विधेययोः पाक्षिकप्रवृत्तौ सत्याम् उभयसूत्रप्रवृत्तिम् खण्डयित्वा अनन्तरस्य प्राबल्यस्वीकारः नियमसूत्राणां स्वभावः।

एवं प्रतिपादितात् विप्रतिषेधसूत्रस्य नियमस्वभाववशात् एव सकृदगतौ यद्बाधितं तद्बाधितमेवेति परिभाषाया उपपत्तिर्भवति। इति भाष्यकारस्य कथनं विद्यते सत्यमिदम् यतः यदा पर्यायतः उभयोरपि सूत्रयोः प्रवृत्तिम् अवरोद्धुम् अथ च फलतः परसूत्रस्य प्राबल्यं घोषयितुम् एव यदा विप्रतिषेधसूत्रम् कार्यकारि विद्यते तदा तस्य स्वभावगतनियमत्ववशात् बाधितसूत्रस्य पुनः प्रवृत्तिः कथमपि भवितुं न शक्नोति। इदं तु सुस्पष्टमेव। यदि एवं नियमत्वसत्तायामपि शास्त्रकारः पूर्वसूत्रस्य (बाधितसूत्रस्य) विनियोगलाभम् दातुम् अनुकूलः चेत् तर्हि सः विप्रतिषेधसूत्रेण अन्यतरसूत्रस्य प्रथमप्रवृत्तिमेव उद्घोषयेत् न तु प्रवृत्तिबलवत्तायाः परसूत्रबलवत्तायाः विधानं कुर्यात्। एवम् संकीर्णलक्ष्यस्थलीयव्यवस्थया साधुशब्दान्वाख्यानाय भाष्यकारानुमोदितं विप्रतिषेधसूत्रस्य नियमत्वम् अथ च तस्यैव अनुवादिकायाः सकृद्गतौपरिभाषायाः उपयोगिता च सिद्धयति। तथ्यमिदम् परिभाषाग्रन्थेषु अनया परिभाषया साध्यानि लक्ष्याणि साक्षात्कृत्य ज्ञातुं शक्यम्।

संकीर्णलक्ष्यस्थलीयायाम् उक्तपरिस्थितौ कदाचित् ईदृशी अपि स्थितिरायाति यत् अन्यतरसूत्रस्य विनियोगे प्रथमतः कृते सत्यपि तिरस्कृतसूत्रेप्रवृत्तियोग्यनिमित्तानि अवशिष्यन्ते। अतस्तत्र विरोधसमाप्त्यनन्तरम् विरोधस्थलीयतिरस्कृतसूत्रस्य निमित्तसद्भावात् तस्य तिरस्कृतस्य बाधितस्य वा सूत्रस्य प्रवृत्तिर्न्याय्या वर्तते। अस्य विधानस्य पुष्ट्यै लोकानुभवस्यापि बलं विद्यते। तुल्यबलयोः द्वयोः स्वामिनोः एकः (समान) एव भृत्यः तयोर्द्वयोरपि स्वामिनोः कार्यार्थम् युगपदेव विरुद्धासु दिक्षु गन्तुं न प्रभवति अतः केनापि हेतुना अन्यतरस्य स्वामिनः प्राबल्यं सिद्धं स्यात् अथ च निर्बलस्य वा पराजितस्य स्वामिनः कार्यम् प्रबलस्वामिनः कार्ये संपन्नेऽपि अवशिष्टं चेत् तर्हि लोके अवशिष्टकार्यसंपादने (भृत्यद्वारा) न कोऽपि विरोधं प्रकटयति। फलतः

पराजितस्यापि अवशिष्टकार्यं, प्रबलस्वामिनः कार्यानन्तरम् स भृत्यः करोत्येव।

सर्वथा अस्याः स्थितेः प्रकाशे विप्रतिषेधसूत्रस्य स्थापनेन तस्मिन् विधित्वम् अथ च तदाधारिता परिभाषा 'पुनः प्रसंसगविज्ञानात् सिद्धम' इति स्वरूपा सिद्ध्यति।

उक्ते लोकानुभवे द्वयोरपि स्वामिनोः तुल्यबलत्वेन विरोधदशायाम् भृत्यः यथा किंकर्तव्यमूढः भवति तथा केनचित् निर्णायकेन अन्यतरस्य प्राथमिकतायाः तदाधारितबलवत्तायाश्च ज्ञाने जाते सद्य एव स भृत्यः निर्णायकप्रदर्शितबलवत्तरस्वामिकार्ये संलग्नो भवति। अनयैव रीत्या संकीर्णोदाहरणस्थले ऋषिप्रणीतत्वात् उभयोरपि सूत्रयोः समानप्राबल्यवशात् कस्यापि अन्यतरस्य सूत्रस्य प्रवृत्त्यभावरूपं संकटम् आपतति। तस्य अनिर्णयस्य अप्रतिपत्तेर्वा दशायाम् परसूत्रस्य विनियोगनिश्चायकत्वात् इदं विप्रतिषेधसूत्रम् विधिसूत्रस्वभावं धारयति। "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति"—इत्यपि अनयारीत्या अत्र संगच्छते। नियमस्वभावकं सूत्रम् कस्यचित् प्रवृत्तिनिषेधम् कुर्वत् अन्यस्य विधिम् समर्थयति परंतु शुद्ध सिद्धान्तसम्मतम् विधिसूत्रं तु तथा न कृत्वा द्वयोरप्राप्तिदशायाम् अन्यतरस्य विधानं करोति इत्ययं निष्कर्षः बुद्धिग्राह्यो भवति। एवमपि उभयोः विरोधिनोः सूत्रयोः ऋषिप्रणीतत्वरूपप्रामाण्यसामान्यवशात् अन्यतरप्राबल्याभावे अन्यतरप्रवृत्त्यभावे प्रवर्तमाने सूत्रं विधिसूत्रम्। नियमसूत्रं सदपि परसूत्रप्रवृत्त्यनन्तरबाधितसूत्रस्य निमित्तसद्भाववशात् अन्त्यन्ताप्राप्तिदशायां विधेयविशेषस्यप्राप्तिहेतुत्वात् अतएव विधिसूत्रस्वरूपनिर्णायकेन केनचित् प्रामाणिकेन आचार्येण अन्यतरस्य प्राबल्यघोषणाया हेतोः प्रबलस्यसूत्रस्य विनियोगे जाते ततः पराजितस्वामिस्थलीयसूत्रस्य निमित्तोपस्थितौ सत्याम् विधिसूत्रप्रकृतिवशात् पश्चात् पराजित-निर्बलसूत्रस्यापि विनियोगः अवश्यं भविष्यति। विधित्वस्य अन्तःपातिनीम् ईदृशीम् क्षमताम् अवबुध्यैव भाष्यकारः अस्य विप्रतिषेधसूत्रस्य विधित्वाधारिताम् "पुनः प्रसंगविज्ञानात् सिद्धम्"। ईदृशीं परिभाषाम् उल्लेखितवान्। सारांशस्तु अयमेव यत् उक्तपरिस्थितौ प्रबलसूत्रविनियोगेजाते पराजितसूत्रस्य विनियोगार्थम् आवश्यकानि लक्षणानि निमित्तानि वा प्राप्यन्ते चेत्तर्हि तस्मिन् संकीर्णे लक्ष्ये तस्य पराजितसूत्रस्यापिविनियोगः कर्तव्य एव।

नागेशः उपर्युक्तभाष्यकाराशयाधारेण लोकन्यायाधारेण च इमे

परस्परविरुद्धार्थबोधिके द्वे अपि परिभाषे, अथ च तत्साधकविप्रतिषेधसूत्रम् उभयस्वभावकम् (नियमविधिरूपोभयप्रकृतिकम्) संपाद्य अस्मत्पुरतः विप्रतिषेधसूत्रस्य द्विविधतां प्रतिष्ठापितवान्। येन भाष्याशयलोकानुभवयोः तत्त्वग्राहिणी नागेशस्य सूक्ष्मेक्षिका अस्मद्गोचरा भवति।

प्रसंगेऽस्मिन् उल्लिखिततथ्यप्रकाशनस्वरूपयोगदानं विहाय कैयटोक्तासु एतत्परिभाषाद्वयसाधिकासुयुक्तिषु अथ च विप्रतिषेधसूत्रस्य नियमत्वविधित्वसाधककैयटोक्तयुक्तिषु च न्यूनतां दर्शयन् नागेशः तादृश कैयटोक्तिन्यूनतापूर्णसामग्रीम् संस्कृतव्याकरणवाङ्मयात् दूरीकर्तुं श्रेष्ठं कार्यं कृतवान् यस्यचर्चा अचिरादेव करिष्यते।

एतदृष्ट्या नागेशस्य एततप्रसंगीयं विवेचनं महत्त्वपूर्ण मत्वा अस्मिन्नध्याये तस्य निवेशः अस्माभिः कृतः वर्तते।

उक्तनागेशीयरीतिविरोधिनीं स्वकल्पनाप्रसूतां पद्धतिं स्वीकृत्य कैयटः विप्रतिषेधसूत्रस्य नियमत्वं विधित्वं च संसाध्य क्रमशः तदाधारिते सकृदगतौ० इति पुनः प्रसंग० इति च इमे परिभाषे साधयति। कैयटोक्तरीतेः साधने ग्राह्यत्वेच न किमपिप्रमाणम् उपलभ्यते। नैतावन्मात्रम् प्रत्युत कैयटयुक्तिषु स्वीकृतासु अन्ये एतादृशाः विरोधाः अस्मत्पुरतः आयान्ति येषां समाधानम् प्रायः दुर्लभं विद्यते। अतएव तां न्यूनतां संकेत्य पूर्वोक्तेन आशयेन सह अभीष्टतथ्यानि (यथा पूर्वम् उक्तानि) अस्मत्पुरतः प्रकाश्य अत्यन्तं महत्त्वशलिकार्यं कृतवान् नागेशः।

## कैयटरीतिः

सर्वप्रथमं भाष्यरीत्या साध्यायाः पर्यायापत्तेः साधनाय (उभयोरपि सूत्रयोः एकस्यानन्तरम् द्वितीयस्य प्रवृत्तिसिद्धये) व्यक्तिपदार्थवादमाश्रयति कैयटः। तस्य विचारः इत्थं वर्तते यदा पदस्य अर्थः व्यक्तिः स्वीक्रियते तदा तदेव सूत्रम् प्रत्येकं लक्ष्ये प्रवृत्तिसमये नवीनान् नवीनान् (व्यक्तिभेदवशात् प्रत्येक वारम् अर्थोऽपि पूर्वेतरः नवीनः भवति इतिधिया) अर्थान् बोधयति। सः सः अर्थः तस्मादेव सूत्रात् (वाच्यभेदात् वाचकभेद स्वीकारेण 'तस्मादेव सूत्रात्' इत्यस्य स्थाने तत्सदृशसूत्रात् इत्यर्थः जायते) उत्पद्यते न तु पूर्वोक्तात् प्रथमावृत्तसूत्रात् लक्ष्यस्थाने कार्यं भवति। अतएव प्रत्येकार्थलाभाय तदेव सूत्रं प्रतिलक्ष्यं नवीनम् पूर्वस्मात् भिन्नम् आनुपूर्वीसाम्यात् सदृशं प्रतिभाति। अतएव अस्य

वादस्य दृष्ट्या कस्मिंश्चित् संकीर्णस्थले विनियोगार्थं प्रवृत्तं सूत्रम् असंकीर्णलक्ष्ये प्रवृत्तात् स्वसदृशात् सूत्रात् भिन्नं वर्तते।

जातिपक्षे नेदं तथ्यम् यतः तत्र सूत्रार्थः जातिरूपः अतएव असंकीर्णोदाहरणस्थलीया सामग्री एव संकीर्णोदाहरणस्थले अपि विद्यते। उभयसामग्र्यां नास्ति भेदः समानजात्याधारवशात्।

जातौ पदार्थे स्वीकृते सति यत्र परस्परविरुद्धयोः द्वयोः सूत्रयोः युगपत् प्रवृतिः न संभवति तादृशसंकीर्णोदाहरणस्थले प्राप्तम् परस्परविरुद्धम् उभयमपि सूत्रम् न प्रवर्तिष्यते यतः असंकीर्णोदाहरणस्थले ते एव उभे अपि सूत्रे चरितार्थे जाते एव अतः तयोः व्यर्थतापि नाशंकनीया भवति यद्वशात् संकीर्णस्थलीयम् अनयोर्द्वयोरपि सूत्रयोः ताटस्थ्यम् उत्पन्नम् स्यात् तथा च कस्या अपि फलसिद्धेरकर्तृत्वात् ते आक्षेपार्हे स्याताम्।

जातिपदार्थवादवशात् समानसामग्रयाघटितः सूत्रार्थः व्यक्तिरूपे संकीर्णासंकीर्णस्थलयोः प्रवर्तमानसूत्रार्थरूपे अनेकः अर्थः कामं प्रतीयेत परंतु तत्सर्वमपि अर्थजातम् एकया जात्या अविच्छिन्नम् (जातिरूपः अर्थः एक एव) अतएव एकमेव विद्यते नानेकम्। अतः तद्वाचकानि सकलान्यपि सूत्राणि समानान्येव कामं तेषामुच्चारणम् विभिन्नदेशकालेषु कृतं भवेत्।

व्यक्तिपक्षे सूत्रार्थस्वरूपसमानसामग्रीवाचके सत्यपि उच्चारणगतदेशकालभेदवशात् संकीर्णस्थलीयम् असंकीर्णास्थलीयं च सूत्रम् परस्परम् भिन्नं अन्योन्यस्मात् सर्वथा नवीनमेव स्वीक्रियते। अतः इमं वादम् स्वीकृत्य यदा किमपि परस्परविरुद्धं कार्यम् कर्तुम् उद्यते द्वे सूत्रे कस्मिंश्चित् संकीर्णलक्ष्ये प्राप्नुतः तदा ते सूत्रे स्वसदृशसामग्रीयुक्तसकलेभ्योऽपि सूत्रेभ्यः सर्वथा नवीनत्वाद्धेतोः कुत्रापि अचारितार्थ्यवशात् तटस्थतां त्यक्त्वा पर्यायतः प्रवर्तिष्येते। यथा 'उदिते जुहोति' 'अनुदिते जुहोति' इमे परस्परं विरुद्धे वाक्ये समानबलशालिनी इतिमत्वा पर्यायतः उभयोरपि विनियोगः प्रवृत्तिर्वा स्वीक्रियते।

एवं जातिपदार्थवादे द्वयोः सूत्रयोः परस्परम् ताटस्थ्यम् व्यक्तिपदार्थवादे पर्यायापत्तिः इमे द्वे अपि स्थिती परशास्त्रबल्यपेक्षिणःशिष्टाभिमतस्य प्रयोगस्य सिद्धये अनभीष्टे एव।

अतः कैयटस्य विचारः अस्ति उक्तस्य द्विविधस्य पदार्थवादस्य हेतोः

संकीर्णस्थलेषु अनयोः पूर्वोक्तयोः द्वयोः स्थित्योः उपस्थितौ सत्याम् विप्रतिषेधसूत्रम् द्विविधं कार्यं करोति। जातिपदार्थवादान्तः संकीर्णस्थलीयात् उक्तताटस्थ्यवशात् कामपि प्रवृत्तिम् अकुर्वत् (नपुं. प्रथमा एकव.) निर्णायकाधिकारेण एतत् सूत्रम् परशास्त्रकृतविधिम् उपस्थाप्य विधिशास्त्रश्रेण्याम् आयाति। यतः विधिरत्यन्तमप्राप्तौ एतल्लक्षणानुसारेण उभयोः सूत्रयोः ताटस्थ्ये अन्त्यन्ताप्राप्तेर्दशा ज्ञाता भवति। अतएव तस्याम् अत्यन्तम् अप्राप्तिदशायाम् विप्रतिषेधशास्त्रम् विधिशास्त्रस्य पदवीं ग्रहीतुं समर्थं भवति।

अस्य विपरीतम्—सूत्रस्य अर्थः व्यक्तिपरकः इति स्वीकारे प्रदर्शितरीत्या साध्यमाना पर्यायापत्तिः अनभीष्टप्रयेगसिद्धिं न कुर्यात् अतः तादृशप्रयोगावरोधम् कर्तुम् विप्रतिषेधसूत्रस्य नियमसूत्रश्रेण्याम् स्थापनम् नियमः पाक्षिके सति इत्येतद्वाक्यानुसारेण अनभीष्टपाक्षिकप्रवृत्तिम् नियन्त्रयितुम् इदं सूत्रम् परशास्त्रस्य प्राबल्यं घोषयत् पूर्वविधेः पाक्षिकप्रवृत्तौ नियन्त्रणं करोति। कैयटस्य अनया रीत्या साधितायाः विप्रतिषेधसूत्रस्य उभयविधताया एव अनुवादिके द्वे परिभाषे विधित्वे आधारिता पुनः प्रसंगविज्ञानात् सिद्धमित्येका नियमाधारिता सकृद्गतौ इत्यपरा परिभाषा कैयटोक्तरीतेः फलस्वरूपतया प्रकाशे आगच्छतः। इत्येदस्ति अस्य पक्षस्य (कैयटपक्षस्य) विचारः।

## कैयटरीतेः खण्डनार्थं युक्तयः

(१) परंतु व्यक्तिपक्षे (व्यक्तिः पदार्थः इति पक्षे) सूत्रम् प्रत्येकं लक्ष्ये स्वचरितार्थतायाः कृते उत्सुकं भवति यतः तत् सूत्रम् कस्मिन्नपि तत्पूर्वलक्ष्ये चरितार्थं नास्ति एतद्विपरीतं जातिपक्षे तत् सूत्रम् असंकीर्णेषु उदाहरणेषु प्रवृत्तं वर्तते। अतएव संकीर्णोदाहरणेषु तत् अप्रवृत्तं सत् तटस्थं भवति। कैयटस्य विधानम् तु सर्वथा अस्वीकार्यम् प्रमाणरहितं च 'यतः ब्राह्मणम् न हन्यात्' इदं जात्यर्थवाचकं वाक्यम् जात्यवच्छिन्ने प्रत्येकं ब्राह्मणे विनियुक्तम् सत् एकस्यापि ब्राह्मणस्य वधनिषेधसंबन्धे तटस्थं न तिष्ठति। अन्यथा कैयटोक्तिमनुसृत्य जातिपदार्थवाचकसूत्रस्यप्रवृत्तिः जात्यवच्छिन्नेषु असंकीर्णोदाहरणेषु भवति अतः हेतोः तत् सूत्रम् जात्यवच्छिन्नेषु संकीर्णोदाहरणेषु तटस्थं भवति इति रीत्या अयं निषेधः कतिपयब्राह्मणानां वधनिषेधविषये तटस्थः स्यात् इति तन्निषेधस्य तटस्थताया आपत्तिः स्पष्टैव। फलतः कतिपयब्राह्मणानां वधोऽपि विधिविहितः स्वीकृतो भविष्यति। एवं

दुर्दशा आपत्तिर्वा नागच्छेत् एतदर्थम् कैयटयुक्तिः दोषपूर्णा एव मन्तव्या।

एवंविधः आशयः सरूपसूत्रस्य भाष्यादपि प्राप्तुं लभ्यः। अतएव इयं कैयटरीतिः न केवलं दूषितैव अपितु सा भाष्यविरुद्धा अपि विद्यते।

भाष्यकारः जात्यर्थस्वीकृतिविषये कथितवान् यत् पदार्थः सूत्रार्थः जातिरूपः अर्थः इति स्वीकृतौ सत्याम् प्रकृतम् कार्यम् जात्यवच्छिन्ने प्रत्येक व्यक्तौ भवति अस्मिन् सिद्धान्ते आग्रहवान् भाष्यकारः गौरनुबन्ध्यः इदमुदाहरणं प्रस्तुतं करोति। सः इममाक्षेपं पुरः स्थापयति जातिपदार्थवादानुसारेण तु एकस्या अपि गोः त्यागं विना प्रत्येकं गोः अनुबन्धनं कर्तव्यम् स्यात्। तथा व्यवहारे न संभवति अतएव अस्मिन्नुदाहरणे जात्यर्थस्थाने व्यक्तिरूपस्य अर्थस्य स्वीकारपरामर्शः तेन दत्तः। तस्य अनया चर्चया जातिपक्षाश्रित संकीर्णोदारहणस्थलीया कैयटोक्ता तटस्थता खण्डिता भवति।

(२) संकीर्णोदाहरणस्थले उभयोरपि परस्परविरुद्धसूत्रयोः प्राप्तिः तृजादि दृष्टान्तानुरोधेन पर्यायतः भविष्यति। इमां भाष्यकारोक्ताम् आपत्तिम् व्यक्तिपक्षे एव स्वीकुर्वन्तु न जातिपक्षे एतदर्थम् कैयटः न किमपि प्रमाणं दातुं शक्नोति।

संकेतानुसारम् जात्यर्थेऽपि प्रत्येकं लक्ष्ये सूत्राणां प्राप्तिस्तु भवत्येव अतः व्यक्तिपक्षे एव अस्याः पर्यायापत्तेः प्राप्तिः अथ च तत्समाधानार्थम् विप्रतिषेधसूत्रस्य नियामकतायाः कैयटोक्ता स्वीकृतिः खण्डिता भवति। व्यक्तिपक्षः स्यात् जातिपक्षो वा उभयत्रापि पर्यायापत्तिः संभवति। इमां वस्तुस्थितिम् उपेक्ष्य ताम् पर्यायापत्तिं व्यक्तिपक्षे एव स्वीकृत्य विप्रतिषेधसूत्रस्य स्वभावद्विविधतायाः प्रयत्नः कैयटस्य आत्मनः अदूरदर्शितायाः कारणादेव कृतः वर्तते।

इदं सर्व तथ्यजातं मनसि निधाय वयं वक्तुम् शक्नुमः यत् विप्रतिषेधसूत्रस्य स्वभावद्विविधतया सह उक्तपरिभाषाद्वयस्य स्थापनार्थम् स्वीकृतानाम् उभयविधपदार्थवादाधारितानां कैयटोक्तानाम् दुर्युक्तीनाम् अपसारणं कृत्वा तत्सिद्ध्यर्थम् (विप्रतिषेधसूत्रस्य स्वभावद्वैविध्यसिद्ध्यर्थम्) समुचिताम् सामग्रीं प्रस्तूय नागेशः अस्मिन् प्रसंगे महत्त्वशलिनीं सामग्रीम् स्थापितवान् इति।

**अंतरगानपि विधीन् बहिरंगो लुग् बाधते अस्यां परिभाषायां नागेशप्रदर्शिताः महत्त्वपूर्णाः परिष्काराः।**

याः परिभाषाः भाष्यकारेण ज्ञापकसिद्धाः स्वीकृताः वर्तन्ते तासां ज्ञापकसाध्यताया उपपादनप्रसंगे तासां युक्तीनां प्रदर्शनं, या युक्तयः खण्डनयोग्याः सन्ति तासां प्रदर्शनं नोचितम् यतः तस्यां स्थितौ खण्डनीययुक्तिभितौ साध्यमानानां ज्ञाप्यमानानां वा परिभाषाणाम् स्वीकार्यता सन्दिग्धा भवितुं शक्नोति अतएव यदा अन्तरंगानपि० इमां परिभाषांम् उपपादयितुं ज्ञापकसिद्धाम् समर्थयितुम् अजानन्नपि आचार्यहरदत्तः पदमंजरी कारः खण्डनयोग्ययुक्त्याः आश्रयणं करोति तदा नागेशः तद्युक्तेनिर्बलताम् नासहत अथ च तस्याः खण्डनं कृत्वा स्वीयेन विवेचनेन भाष्यकाराभिमतपक्षम् साधयति (इमां परिभाषां ज्ञापकसिद्धां साधयति) तस्य विवेचनम् महत्त्वपूर्णमिति कृत्वा अत्र तस्य निवेशं कर्तुमुद्यताः स्मः। नागेशः हरदत्तस्य युक्तेः खण्डनीयतां प्रति वैयाकरणसमाजस्य ध्यानाकर्षणम् स्वकर्तव्यं मत्वा इदमकार्षीत्। यद्यपि हरदत्त इव नागेशोऽपि इमां परिभाषां ज्ञापकसिद्धामेव मनुते तथापि उभयोः सिद्धान्तस्य समानत्वेऽपि तत्सिद्धान्तस्य प्रतिष्ठापने हरदत्तस्य युक्तिः खण्डनयोग्या न तथा नागेशस्य इति कृत्वा उभयोः समानमान्यतासत्त्वेऽपि नागेशेन हरदत्तयुक्तेः खण्डनम् आवश्यकम् मत्वा तत् कृतम् ।

अनया दृष्ट्या सं० व्या०शास्त्रे नागेशीयम् एतत्प्रसंगीयं कथनम् महत्त्वपूर्णम् अंशं मत्वा तत् अत्र निवेशितम्।

अस्याः परिभाषायाः विवरणप्रसंगे अन्यच्च महत्त्वपूर्णं तथ्यम् नागेशेन उपस्थापितं वर्तते तद्यथा—यदा इयं परिभाषा अनेकाःयुक्तीः आश्रित्य व्यापकक्षेत्रे प्रवर्तितुं योग्या तदा सीमितक्षेत्रे एव अस्याः विनियोगस्य घोषणा सर्वथा अनुचिता। कतिपये वैयाकरणाः ईदृशीम् अनुचिताम् स्थितिम् एतत् परिभाषाविषये सिद्धान्तितवन्तः नागेशः प्रमाणोपन्यासपूर्वकम् तेषां वैयाकरणानाम् इमं दोषं दूरीकर्तुम् उन्मूलयितुं वा उद्यतः सन् अस्मान् उक्ततथ्यं प्रति सावधानं कृतवान् अतएव तस्येदं कार्यम् संस्कृतव्याकरणरसिकानां कृते श्रेयस्करम् इति विचार्य अत्रत्यम् नागेशीयं विवेचनं सं० व्या० शास्त्रे उपादेयं मत्वा अत्र प्रसंगे तस्य नागेशीयविवेचनस्य निवेशः अस्माभिः साभिप्रायम् कृतः वर्तते।

इयं परिभाषा 'असिद्धं वहिरंगमन्तरंगे' इति परिभाषायाः अपवादस्वरूपा। अतः बहिरंगस्थितौ अपि विद्यमानलुग्विधायकशास्त्रम् अन्तरंगस्थितिं लभमानशास्त्रापेक्षया सामान्यस्थितिवत् न दुर्बलम् अपितु प्रबलं

सिद्ध्यति। फलस्वरूपम् बहिरंगो लुक् सामान्यनियमवशात् प्रथमप्रवृतियोग्यात् अन्तरंगशास्त्रात् प्रथममेव प्रवर्तते।

एतत्परिभाषाया अस्तित्वविषये आधारम् ज्ञापकं वा प्रकाशयन् नागेशः कथयति—भाष्यकारः प्रत्ययोत्तरपदयोश्चेति सूत्रम् अथवा तस्मिन्सूत्रे स्वीकृताम् मपर्यन्तानुवृत्तिं ज्ञापकं स्वीकरोति इति। अस्मिन् नागेशीयविवेचने प्राप्तपंक्तीनां स्वारस्यम् इदमेव निष्कृष्टं भवति यत् प्रत्ययोत्तरपदयोश्चेति सूत्रम् एतत्परिभाषाज्ञापकं स्वीक्रियते चेत् तर्हि तद्विरोधे कतिपये तर्काः दातुं शक्याः अतएव मपर्यन्तानुवृत्तिः एव अस्याः परिभाषायाः ज्ञापिकाइति स्वीकुर्वन्तु। इदमेव तथ्यं भाष्यकारस्य अभिप्रेतं वर्तते इति। परंतु एतत्प्रसंगे मपर्यन्तानुवृतेः अस्याः परिभाषाया ज्ञापकत्वसाधने हरदत्तस्वीकृता रीतिः सर्वथा दोषपूर्णा अतएव त्याज्या यद्यपि वयमपि मपर्यन्तानुवृत्तिमेव ज्ञापिकां मन्यामहे एवं च उभयपक्षस्य कृते अन्तिमसाध्यस्य समानत्वेऽपि साधनविवेचनेन एकत्र (हरदत्तोक्तमते) दोषः न तथा नागेशभाष्यकारयोर्मते इत्यवश्यं बोद्धव्यम्। भाष्यकारस्य आशयेन प्रत्ययोत्तरपदयोश्चेति सूत्रे इयं मपर्यन्तानुवृत्तिः कथं ज्ञापिका संभवति? अस्य प्रश्नस्य उत्तरम् अतिसुन्दरम् विवेचनम् च तत्त्वादर्शटीकाकारः कतिपयपंक्तिषु एव प्रस्तुतवान्। तदनुसारेण एतत्परिभाषाया अभावे 'त्वत्कृतम्' 'त्वत्पुत्रः' 'मत्पुत्रः' इत्यादिसामासिकस्थलेषु विग्रहावस्थायाम् युष्मद् ङस् पुत्र सु इत्यलौकिकविग्रहे समासे जाते समासापेक्ष पदद्वयापेक्षोलुक् सुपो धातुरितिसूत्रेण प्राप्नोति तदैव 'तवममौ ङसि' इति (अन्यैश्चसूत्रैः) सूत्रेण तवादेशश्च प्राप्नोति पदद्वयापेक्षसमासापेक्षत्वात् लुक् बहिरंगः तदपेक्षया तवममौ० इति केवलङसपेक्षया अल्पनिमित्तवशात् तवादेशः अन्तरंगः, अतएव असिद्धं बहिरंग० इति परिभाषया तवादेश एव प्रबलः। स च तवादेशः मपर्यन्तस्यैव युष्मदः विहितः इत्यपि अत्र ध्येयम्। मपर्यन्तरस्य इति सूत्रात् अनुवृतिवशात् तत्र तवममौ ङसि इति सूत्रे।

एवं च तवादेशे जाते सति सुपो धातुरिति विभक्तिलुका अनिष्टप्रयोगापत्तिः। तां परिहर्तुं सूत्रकारेण प्रत्योत्तरपदयोश्चेति सूत्रं निर्मितम्। तच्च सूत्रं तवममौ ङसि इत्यस्य बाधकम् अपवादो वा।

तवममौ० ङसि इत्यत्र प्रत्ययोत्तर इत्यत्र च परस्परं बाध्यबाधकभावः उत्सर्गापवादभावः वा योग्य इत्यत्र न्यायाधीशश्रीवाडेगांवकरमहोदयैः परिभाषेन्दुशेखरस्य महाराष्ट्रभाषानुवादे सुबहुशः विवेचनं कृतम्। तच्चर्चया

विषयान्तरप्रवेशभीत्या तत्कालम् अनयोर्मध्ये उत्सर्गापवादं स्वीकृत्यैव वयमग्रेसरामः। एवं च उत्सर्गशास्त्रं तवममौ ङसि इति यदा मपर्यन्तस्यैव युष्मदः तवादेशं करोति तदा तत्समानदेशत्वात् उत्सर्गसमानदेशा अपवादा भवन्ति इति न्यायेन अपवादसूत्रस्य प्रत्ययोत्तरपदयोश्चेत्यस्यापि प्रवृत्तिः मपर्यन्तस्यैव भविष्यति। तदर्थम् अस्मिन् सूत्रे क्रियमाणा सा अनुवृतिः व्यर्था सती इमां परिभाषां ज्ञापयति। ज्ञापितायां च अस्यां बहिरंगोऽपि लुक् अन्तरंगात् तवादेशात् पूर्वमेव भवति। एवं च ङसः लुका नाशितत्वात् प्रत्ययोत्तर इति नियमाप्रवृत्या ङस्परकत्वाभावात् सुब्लुकः अनन्तरम् तवादेशस्य चर्चैव समाप्तिं प्राप्नोति। फलतः उत्सर्गापवादभाववशात् उत्सर्गशास्त्रस्था मपर्यन्तानुवृतिः व्यर्था सती त्वत्पुत्र इत्यादिसाधिका प्रत्ययोत्तरपदयोश्चेति सूत्रे न प्रसरिष्यति। त्वादेशश्च मपर्यन्तस्यैव कर्तव्यः येन शिष्टभिमतप्रयोगसिद्धिः। एतद्दृष्ट्या इयं परिभाषा तां परिस्थितिमुत्पादयति यद्वशात् प्रत्ययोत्तरपदयोश्चेति सूत्रे मपर्यन्तानुवृतेः महती सार्थकता जायते। प्रत्ययोत्तरपदयोश्चेति सूत्रस्य कृते ङस्परकताया आवश्यकता नास्ति तत्र उत्तर पदत्वादेव प्रत्ययोत्तर० इति सूत्रस्य प्रवृत्तिः। अतः अनया परिभाषया प्रथमं बहिरंगेऽपि लुकि जाते तवममौ ङसि इत्यनेन तवादेशे अनुभूयमाननिरुक्तबाधाभावात् न कापि बाधा प्रत्ययोत्तर० इति प्रवृत्तिसमये मपर्यन्तस्य आदेशकरणसमये आयाति। तत्र उत्तरपदपरकता च विद्यते एव। एवं तवममौ इति सूत्रगतमपर्यन्तावृत्तेः असंबद्धत्वात् प्रत्ययोत्तर० सूत्रे तस्याः शिष्टाभिमतप्रयोगसिद्ध्यै आवश्यकत्वात् नवीनतया सा अनुवृतिः क्रियते। एवं च उत्सर्गापवादभावं मत्वा प्रत्ययोत्तरपदयोश्चेति सूत्रे मपर्यन्तानुवृतेर्व्यर्थतां संपाद्य तत्कृतपरिभाषाज्ञापनं कृत्वा च पुनः अनयोः तवममौ० प्रत्ययो० सूत्रयोर्मध्ये उत्सर्गापवादभावम् उपेक्ष्य प्रत्ययोत्तरपदयोश्चेति सूत्रे सा अनुवृत्तिः सार्थिका भवति।

तत्कृतैतत्परिभाषाज्ञापनं कृत्वा प्रथमं लुगादिद्वारा तवममौ इत्यस्य प्रवृतिशून्यतां दर्शयित्वा तवममौ० प्रत्ययो० अनयोर्मध्ये उत्सर्गापवादस्थितिं निरस्य तवममौ० इति सूत्रस्थमपर्यन्तानुवृत्तेः प्रत्ययोत्तरपदयोश्चेति सूत्रे संबन्धाभावं संसाध्य प्रत्ययोत्तरपदयोश्चेति सूत्रे प्रयोगविशेषस्य सिद्ध्यै मपर्यन्तानुवृत्तिः सफला सार्थिका वा भवति इति वक्तुं शक्यते। एवं चेयम् अनुवृत्तिः इमां परिभाषां ज्ञापयति इति सिद्ध्यति।

अस्याः परिभाषायाः फलम् गोमत्प्रियः इति शिष्टाभिमतप्रयोगस्य सिद्धिः

अन्यथा अस्या अभावे गोमान् प्रियः यस्य इति विग्रहे गोमत् सु प्रिय सु इत्यलौकिकविग्रहे अनेकमन्यपदार्थे इत्यनेन समासे जाते सुपो धातुरिति हल्ङ्याप् इति च सूत्राभ्याम् सममेव सुलुक्सुलोपौ क्रमशः प्राप्तौ। तत्र पदद्वयापेक्षसमासाश्रितो लुक् बहिरंगः केवलम् हलन्ताङ्गनिमित्तापेक्षी सुलोपः अल्पनिमित्तवशात् अन्तरंगः। तस्मिन् अन्तरंगे सुलोपे जाते न लुमताङ्गस्य इति सूत्रस्य अविषयत्वेन प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रप्रवृत्त्या सर्वनामस्थानपरकतावशात् उगिदचामिति नुमागमे अत्वसन्तस्य इति दीर्घे च गोमान् प्रियः इत्यनिष्टरूपप्रसक्तिः स्यात्। तन्निवारणाय इयं परिभाषा समर्था। तथाहि एतत्सूत्रवशात् हल्ङ्यादितिप्राप्तसुलोपापेक्षया बहिरंगसुलुकः प्राबल्यम्; लुक्शब्दसहकृतलोपिवशात् न लुमन्ता० इति सूत्रेण प्रत्ययलोपे० इत्यस्य निरुद्धप्रसरत्वात् सर्वनामस्थानपरकताया अभावे नुमादीनाम् दीर्घादीनामभावे गोमत्प्रियः इति इष्टरूपं सिद्ध्यति। इत्थं च मपर्यन्तानुवृत्तिरूपज्ञापकज्ञाप्यया अनया परिभाषया त्वत्कृतम् त्वदीयः त्वद्धितम् गोमत्प्रियः इत्यादीनां शिष्टाभिमतप्रयोगाणां सिद्धिः। एतावता इयं सार्थिका इति।

**अत्र हरदत्तः**

अस्याः परिभाषाया अभावे अन्तर्वर्तिनीं विभक्तिमाश्रित्य त्वत्कृतमित्यादौ त्वमावेकवचने इति अन्तरंगत्वात् सूत्रेण त्वादेशे जाते प्रत्ययोत्तरपदयोश्चेति सूत्रस्य प्रवृत्तिसमये प्रत्यये उतरपदे च परतः युष्म् इति मपर्यन्तस्य सत्तैव नास्ति अन्तरंगत्वात् त्वमावेकवचने इत्यनेन पूर्वमेव मपर्यन्तयुष्मदः त्वादेशः कृतः, अतः मपर्यन्तयुष्मदः सत्ता प्राप्तिर्वा नास्ति तत्र, अतः तादृशसत्ताया अभावे तत्र कृता मपर्यन्तानुवृत्तिः सर्वथा व्यर्था सेत्स्यति। एवं च सा अनुवृतिः एतत्परिभाषायाः ज्ञापिका इति वदति।

इदं हरदत्तमतम् सर्वथा त्रुटिपूर्णम् इति प्रत्युत्तरयति नागेशः। तदनुसारेण अन्तरंगादप्यवादो बलीयान् इति न्यायेन त्वमावेकवचने इत्यस्य अपवादः प्रत्ययोत्तरपदयोश्चेति सूत्रम्। तस्य बलवत्त्वात् प्रथमप्रवृत्त्या प्रवृत्तिसमये मपर्यन्तयुष्मदः सत्ता वर्तते एव इदं हरदत्तेन न समीक्षितम्। इत्थं च प्रत्ययोत्तरपदयोश्चेति कृतः त्वादेशः मपर्यन्तस्यैव भविष्यति। उत्सर्गसमानदेशा अपवादाः इति न्यायानुसारेण। अत्र उत्सर्गशास्त्रम् त्वमावेकवचन इति

अपवादश्च प्रत्ययोत्तर इति। उभयोरपि समानदेशत्वात् त्वमावेकवचने इति वत् प्रत्ययो० इति सूत्रेण मपर्यन्तस्यैव युष्मदः त्वादेशः क्रियते। एतत्सर्वम् मपर्यन्तयुष्मदः अत्र अभाव इति वादिना हरदत्तेन नालोचितम्। इत्थं च इष्टरूपसिद्धिः।

एवं च उत्सर्गसमानदेशाः इति नियमवशात् प्रत्ययोत्तरपदयोश्चेति सूत्रे स्वतः प्राप्ताम् मपर्यन्तानुवृत्तिम् दृष्ट्वापि तदर्थे मपर्यन्तानुवृत्तये उद्यतस्य भाष्यकारस्य महत्त्ववशात् अनावश्यकाऽपि सा कृता इति हेतोः तस्याः फलमन्वेषणीयम्। तच्च मपर्यन्तानुवृतिरूपज्ञापकज्ञापिता (पूर्वोक्तरीत्या) इयं परिभाषा एव इति वक्तुं पार्यते। इत्थं च हरदत्तमते दोषं दर्शयित्वा प्रागुक्तरीत्या भाष्यकारसम्मतायाः अस्याः परिभाषायाः सत्तां स्वीकरोति नागेशः।

अस्याः परिभाषाया विषये मन्तान्तरसमीक्षापूर्वकम् अन्यच्च बहु उक्तम् सूत्रात्मकशैल्याम् नागेशेन। तत्सर्वम् मूलग्रन्थे द्रष्टव्यं जिज्ञासुभिः।

अस्मिन्नध्याये सं० व्या० शास्त्रान्तर्गतानाम् महत्त्वपूर्णत्वेन स्वीकृतानाम् नागेशचर्चितकतिपयानामेव स्थलानाम् समावेशः कृतो वर्तते। अथेदानीमपि अनेकानि ईदृशानि स्थलानि अवशिष्टानि सन्ति येषामत्र समावेशो न जातः परंतु तानि स्थलानि हेतुविशेषैः अथ च विविधदृष्ट्या संस्कृतव्याकरणशास्त्रे अत्यन्तम् प्रशस्यानि वर्तन्ते। तेषाभुपन्यासं विना संस्कृतव्याकरणवाङ्मयम् भर्तृहरिकालोत्तरम् अथ यावत् अपूर्णमिव तिष्ठेत्। तेषां स्थलानां प्रत्यक्षज्ञानम् तत्त्वादर्शटीकासंवलितात् परिभाषेन्दुशेखराख्यग्रन्थात् कर्तुं शक्यमिति सूचयित्वा विरम्यते। श्रीशिवकृपया अस्य निबन्धग्रन्थस्य पुनः संस्करणम् भवेच्चेत्तर्हि मयापि तेषां स्थलानां समीक्षणपूर्वकम् विवेचनं प्रस्तोष्यते इति।

# पञ्चमोऽध्यायः

अस्मिन् परिशिष्टरूपे पंचमे अध्याये, तेषां प्रतीकरूपेण सिद्धान्तकौमुद्यां स्थितानां वाक्यविशेषाणाम् आनुपूर्वीविशेषाणां वा स्थापितस्थलानाम् उल्लेखः कृतः वर्तते येषां समीक्षणेन तत्तत्स्थलीयनागेशकृतव्याख्यानस्य महत्त्वं जिज्ञासुभिः सुसाध्यं वर्तते। एतद्व्याख्यानपरिशीलनेन इदं सुवचं भवति यत् इदम् नागेशीयं व्याख्यानम् संस्कृतव्याकरणशास्त्रीयमहिम्रः वर्धकं स्वस्मिन् सुस्पष्टं विशदतया चित्तप्रसादकं च वर्तते। इति मे विश्वासः।

एषां स्थलानां नामतो निर्देशः अधस्तात् क्रियते एतानि स्थलानि श्रीभट्टोजिदीक्षितकृतसिद्धान्तकौमुद्यां वर्तन्ते इति कथनं तु पुररुक्तत्वेऽपि स्पष्टार्थकम्।

अनेकैः हेतुभिः विशदविवेचनं कर्तुं समयाभावः अतः पुण्यातिशयरूसंपादने हेतुविशेषात् असामर्थ्ये सत्यपि किंचित् पुण्यसंपादनमपि वरम् इतिधिया एषां विशदविवेचनस्थले एषां नामनिर्देशेनैव पुण्यलाभ एव इति विमृश्य एषां स्थलानां केवलं नामनिर्देशः कृतः वर्तते।

उपसर्गाः क्रियायोगे, विसेचका ग्रामाः क्षय्यजय्यौ शक्यार्थे, गतमहो रात्रिरेषा, नागेशमते परमकरतरम् कैयटमते 'परमकतरत्' राजनिवाचरति एषामनभिधानमेव।

संज्ञाप्रकरणम्, संहितायाम्, अटकुप्वाङ, अयोगवाह, त्रिषु सरूपा इति इष्टिरिति, ङौतु सवर्णदीर्घ इति, स्वरादीनाम्—कैयटे अव्ययेन, अर्थनिबन्धनेयं संज्ञा, अकर्मकधातु० अन्तरान्तरेण युक्ते, त्रिधा (अधिकरणमिति) समर्थः पदविधिः।

समासः — कालाः परिणामिना, रक्षित इति महाविभाषया इति शेषः। लाक्षणिकमिति, विशेषणं विशेष्येण बहुलम्, प्रतिषेधसामर्थ्यात् विशेषणसमासोऽपि न। द्वादशेति, द्वाविंशतिरिति, वैयाकरणभार्यः, प्रियपथः, जातिरप्राणिनाम्, अधिकरणैतावत्त्वेच, सम्प्रसारणस्य व्यवस्थितविभाषया ह्रस्वो न। पृषोदरानि।

| | |
|---|---|
| भ्वादितः चुरादिं यावत् | धि च। ऋदुप इति, कासप्रत्ययादाममन्त्रे लिटि, तीषसह० जहीहीति, उदित्करणसामर्थ्यादिति। वृदिति। गुपिप्रभृतय इति। चुरादय इति। मीनाति० पक्षान्तरे वावृत्यते। ततो वावृत्यमाना सा रामशालांन्यविक्षत इति भट्टिः। वृणुत इति। चिस्फुरोर्णौ। लीलोरिति। |
| यङलुगन्तः | यत्र हीति यङन्तादिति, न चेति। |
| नामधातुः | संज्ञापूर्वकत्वादिति। |
| आत्मनेपद प्रक्रिया | अतीति। मासमरतेति। |
| भावकर्मप्रक्रिया | सामानाधिकरण्याभावादिति। |
| पदव्यवस्था | प्राप्तस्यैवायमिति। |
| पूर्वकृदन्तम् | त्रिमन्यमिति |
| वैदिकीप्रक्रिया | विभाषा छन्दसि, नेहेति, विवाहेति। |
| तद्धिते | स्त्रीभ्योढक्, आग्नेय इति, ऋष्यण एवेति पूर्वसूत्रे किमिति, प्रतिषेधोनेति, अकालादपीति, उच्चैस्तम इति। |

अत्र एषां स्थलानां प्रारभ्भिकशब्दाः संकेतमात्रत्वेन, लिखिताः पूर्णरूपे सिद्धान्तकौमुद्याः तत्तत्स्थलेषु द्रष्टव्यम्। मुख्यतः इमानि ईदृशानि स्थानानि वर्तन्ते येषु नागेशः ईदृशं तथ्यपूर्णं विवेचनं प्रस्तुतवान् यस्य विवेचनस्य समुचितं व्याख्यानम् प्रस्तूय एतदंशे नागेशोक्तविषयम् संस्कृतव्याकरणशास्त्रे संग्राह्यवस्तुरूपेण प्रतिष्ठापयितुं शक्नुमः।

स्वाम्पि न तु स्वम्पि, सायम् चिरम् इति अव्ययं न। असिद्धत्वादिति, अयमेवेति, नीत्या करमुखीति असाधु एव। सुगात्री इत्यपप्रयोगः। सुचः इति सूत्रयितुमुचितम्। आटश्च टाबृचि, प्रयोग० पुरूषात्प्रमाणे, स्वांगाच्चोप०, जातिलक्षण० हेतौ, प्रथमानिर्दिष्टम्, यथा सादृश्ये उच्चैरुदात्तः, विवृतत्त्वमेवेति बाह्यप्रयत्न०।

एषां स्थलानां विवेचनपुरःसरम् नागेशीयव्याकरणवाङ्मयस्य प्रशस्तिः, मेधाविभिः जिज्ञासुभिः कर्तुं शक्यते येन अस्य लघुनिबन्धग्रन्थस्य प्रशस्तिः परमोत्कर्षेण सह व्याकरणच्छात्रान् आह्लादयिष्यति इति विश्वसिमि।

पण्डितप्रवरस्य नागेशभट्टस्य महत्त्वे इदमपि साधकं वर्तते यत्

विद्वद्वरेण पाश्चात्यपण्डितेन डा० कीलहार्न महोदयेन जर्मनदेशीयेन नागेशकृतपरिभाषेन्दुशेखरमाश्रित्य कृतासु स्वीयटिप्पणीषु स्थले स्थले नागेशस्य परमप्रियविदुषा शिष्येण कृताया: 'गदा' इत्याख्याया: टीकाया: अविकला अंशा: स्वतात्पर्यसाधनाय विनिविष्टा: सन्ति। डा० कीलहार्नमहोदयस्य व्याख्यानं सशिष्यस्य नागेश्स्य प्रशस्तये सुसाधकमिति कथने नास्ति संकोच: ।

यद्यपि सिद्धान्तकौमुद्यां विद्वत्तापरिप्लुता लघुशब्देन्दुशेखर इत्यभिधा टीका नागेशेन कृता वर्तते या श्रीहरिदीक्षितस्य नागेशस्य व्याकरणशास्त्रगुरो: प्रगुरो: श्री भट्टोजिदीक्षितस्य च भाष्यवार्तिकवचनानुसरिमनोरमाशब्द-रत्नस्थतात्पर्यानुसारिणी एव विद्यते तथापि प्रकारान्तरेण उक्तग्रन्थयो: तात्पर्यातिरिक्तम् स्वरूपं क्वचित् क्वचित् अस्यां नागेशकृतटीकायां वर्तते अत: इमां टीकामनुरुध्य समीक्षका विद्वांस: नागेशं नव्यमतप्रवर्तकम् महता गौरवेण घोषितवन्त: ।

नागेशयुगे वेदान्तन्यायमीमांसादिशास्त्रेषु प्रवीणा: ख्यातयशस: अपि विद्वांस: प्रथमं व्याकरणशास्त्राध्यायिन: एव आसन् अत एव शास्त्रान्तरव्याख्यानसमर्था अपिते व्याकरणशास्त्रमधिकृत्य पूर्वोत्तरपक्षानुरागं दधत: नागेशमतस्य प्रशस्तं वैदुष्यपूर्णम सुग्राह्यं सुबोधं स्वरूपं ज्ञात्वैव शास्त्रार्थेषु अन्तिमनिर्णायकपदे प्रतिष्ठितविद्वत्सु नागेशमपि अभिषिच्य तस्मै सभापति: इति अत्यन्तम् गौरवपूर्णं सम्मानं प्रादर्शयन् ।

इत्थम् अस्मिन् प्रबन्धे तत्तत्स्थलीयविवेचनमुखेन नागेशभट्टस्य प्रशस्तिसुरभिसंवलितं वस्तुत: (मुख्यविषयस्य द्वितीयतृतीयचतुर्थाध्यायस्य महत्त्वदृष्ट्या) त्रिदलमपि अध्यायपंचकग्रथिततत्वात् पंचदलम् ग्रन्थात्मकं बिल्वपत्रम् उमामहेश्वरयो: चरणेषु समर्प्य परमानन्दमनुभवामि एतदनुशीलनेन विद्वांस: छात्रा: जिज्ञासव: च लोकोत्तरमानन्दमनुभवन्तु इति प्रार्थये शब्दशास्त्रनिदानम् शाश्वतानन्दमग्नम् उमासहितं श्री शिवमिति शम् ।

